भगवता सङ्कर्षणेन नारदायोपदिष्टं दिव्यं शास्त्रम्

# नारदपञ्चरात्रम्

## सङ्कर्षणसंहिता

डॉ. के.के.ए.वेंकटाचारिमहोदयस्य
प्राक्कथनेन समलङ्कृता

**सम्पादकः**
**आचार्यश्रीव्रजवल्लभः द्विवेदः**
सांख्ययोग-तन्त्रागमविभागाध्यक्षचरः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी



स्वामिनारायण अक्षरपीठ,
अमदावाद

२०६० तमे वैक्रमाब्दे    २००४ तमे खैस्ताब्दे

# NĀRADAPAÑCARĀTRAM

## SAṄKARṢAṆA-SAṀHITĀ

FOREWORD BY

**Dr. K.K.A.Venkatachari**
Channai

EDITED BY

**ĀCĀRYAŚRĪ VRAJVALLABHA DWIVEDĪ**
Ex-Head of the Dept. of Sāṅkhyayoga - Tantrāgama
Sampurnanand Sanskrit University
Varanasi



Swaminarayan Aksharpith,
Amdavad

2004

NĀRADAPAÑCARĀTRAM SAṄKARṢAṆA-SAṀHITĀ (Sanskrit)

Edited by: ĀCĀRYAŚRĪ VRAJVALLABHA DWIVEDĪ

**Inspirer:** HDH Pramukh Swami Maharaj

**Presented by:**

Bochasanwasi Shri Akshar Purushottam Swaminarayan Sanstha
Shahibaug, Amdavad - 380 004. India.

**Publishers:**

SWAMINARAYAN AKSHARPITH
Shahibaug, Amdavad - 380 004. India.

**1st Edition:**

July 2004. Copies: 600



**ISBN:** 81-7526-264-8

**रजूकर्ता :** बोचासणवासी श्री अक्षरपुरुषोत्तम स्वामिनारायण संस्था,
शाहीबाग, अहमदाबाद - ३८० ००४

**प्रेरणामूर्ति :** संतविभूति प्रकट ब्रह्मस्वरूप प्रमुखस्वामी महाराज



**प्रथम आवृत्ति :** जुलाई २००४

**प्रतियाँ :** ६००

**कीमत :** रू. २५०-००



मुद्रक एवं प्रकाशक :

**स्वामिनारायण अक्षरपीठ**

शाहीबाग, अहमदाबाद - ३८० ००४

# समर्पणम्



योऽसावेकान्तिकाख्यं मनुजजनिफलं पञ्चरात्रे सुप्रोक्तम्
संसारेऽस्मिन् विनष्टमधिकसमयतः जीवयामास धार्मिः ।
भक्तिं ब्रह्मस्वरूपां परममुनिजनां पद्धतिं चैव तस्मै
यच्छामीमां संहितां परमभगवते स्वामिनारायणाय ॥

# प्रणामाञ्जलिः



प्रोक्ता सङ्कर्षणेनेयं संहिता पाञ्चरात्रिकी ।
नारदपञ्चरात्रेण नाम्ना नारदसंश्रवात् ॥
प्रथिता ग्रथिता चैव कृपया यस्य ब्रह्मणः ।
नारायणस्वरूपं तं नमामि प्रमुखं मुदा ॥

# प्रस्तावना

भगवान् स्वामिनारायण ने वेदान्त, साङ्ख्य, योग और पञ्चरात्र - इन चारों के समन्वय की बात अपने वचनामृतों में की है।[1]

इन चारों शास्त्रों को भगवत्स्वरूप का ज्ञान पाने के लिए समान उपयोगी दिखाया है। फिर भी चारों की निजी विशेषताएँ भी हैं। जैसे कि वेदान्त से भगवत्स्वरूप के निर्गुणत्व-सर्वव्यापकत्व और अक्षरब्रह्म के स्वरूप का ज्ञान होता है, सांख्य से जगत् की नश्वरता का बोध होता है और योग से परमात्मा के नित्य सन्धान का ज्ञान मिलता है।

इन तीनों शास्त्रों से सामान्यत: ज्ञान भाग का ही उपदेश मिलता है, जब कि सम्पूर्ण साधना-भाग अर्थात् भक्तिरूप क्रियाभाग पञ्चरात्र आगम से ही ज्ञात होता है। *'नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्'* इस भागवत वचन(१/५/२२)का सन्दर्भ देते हुए भगवान् स्वामिनारायण ने ज्ञान को बिना भक्ति के शोभारहित कहा है। बिना भक्ति के ज्ञान अनुपादेय है जैसे नमक के बिना भोजन। इस सात्त्विक भक्ति की रीति इस पञ्चरात्र आगम से ही प्राप्त होती है।

इस पञ्चरात्र आगम के एक प्राचीन ग्रन्थ 'नारद पञ्चरात्रम् : सङ्कर्षणसंहिता' के प्रकाशन से हमें गौरव अनुभव होता है।

संशोधक विद्वानों के कथन अनुसार यह सङ्कर्षणसंहिता प्राचीन संहिताओं में से एक है। यह वही संहिता है जिसे भगवान् स्वामिनारायण ने अपने वचनामृतों में 'नारदपञ्चरात्र' कहा है। यह वही ग्रंथरत्न है जिसको लेने के लिए भगवान स्वामिनारायण ने

१. वचनामृत, ग.प्र. ५२, वरताल-२

अपने विद्यावारिधि पंडित नित्यानन्दस्वामी को जूनागढ भेजा था।

इस ग्रन्थ का सम्पादन कार्य राष्ट्रिय आगम पण्डित श्री व्रजवल्लभ द्विवेदीजी ने किया है मानों कि सोने में सुगंध मिल गई है। आपने शैव, शाक्त, बौद्ध, जैन और वैष्णव आगमों के अनेक ग्रन्थों का अध्ययन-अध्यापन और संशोधन-संपादन किया है। इन ग्रन्थों में भी पञ्चरात्र आगम के 'रत्नत्रय' नाम से प्रसिद्ध सात्त्वत, पौष्कर और जयाख्य संहिताओं में से सात्त्वत संहिता का सुप्रसिद्ध और विश्वस्त सम्पादन आप की आगम विद्वत्ता का अनुपम दृष्टांत है। इस दृष्टांतरूप सम्पादन से ही हमने इस प्राचीन सङ्कर्षणसंहिता का सम्पादन कार्यभार आपके सिर रखा था, हमें हर्ष हैं कि आपने इसका सहर्ष स्वीकार के साथ सफल-सम्पादन किया है।

साथ में पञ्चरात्र आगम के साथ जिसका नाम जुड़ा हुआ है, ऐसे भारत वर्ष में पञ्चरात्र-संहिताओं का संशोधन में ही अपना जीवन व्यतीत करनेवाले विद्वान् डॉ. के.के.ए. वेंकटाचारी ने प्राक्कथन( forword) लिखकर हमें उपकृत किया है। इन दोनों पण्डितों के हम आभारी हैं।

साथ साथ 'आर्ष' संशोधन केन्द्र में सेवारत पूज्य परमपुरुषस्वामी और सहायकों का मार्गदर्शन और सेवा भी प्रशस्य है, उनका भी हम आभार मानते हैं। इस पञ्चरात्र आगम की सङ्कर्षणसंहिता को पढ़कर स्वामिनारायण सम्प्रदाय और पञ्चरात्र के सम्बन्ध में संशोधकों को बड़ी सहायता मिलेगी। इस ग्रन्थरत्न को पढ़कर भगवान् स्वामिनारायण और गुरुहरि प्रमुखस्वामी महाराज के प्रति संशोधक-पाठकों की भक्ति बढ़ती रहे ऐसी प्रार्थना।

**स्वामिनारायण अक्षरपीठ**
**अमदावाद**

## भूमिका

"न हि कश्चित् क्षणमपि जातु तिष्ठत्यकर्मकृत्" (भ.गी.३/५) इति श्रीकृष्णभगवद्वचनानुसारं मर्त्या लौकिकं पारलौकिकं वा कर्मावश्यमाचरन्ति। अत एवाकर्मण्यवादस्य नास्ति स्थानमस्मिन् संसारे। इच्छन्ननिच्छन्नपि अवश्यं कर्म कर्तव्यञ्चेत्तर्हि तत्कर्म भगवत्सम्बद्धं कथं न कार्यं, येन च कर्मणा चरमपुरुषार्थः सिद्ध्येत्। तदुक्तं भागवतपुराणे—

"आमयो येन भूतानां जायते यश्च सुव्रत!।
तदेव ह्यामयं द्रव्यं न पुनाति चिकित्सितम् ॥
एवं नृणां क्रियायोगाः सर्वे संसृतिहेतवः ।
त एवात्मविनाशाय कल्पन्ते कल्पिताः परे ॥"(१/५/३३,३४)

तदेतद् भगवत्सम्बद्धं कर्म भक्तिरूपेण परिणमते। सा च भक्तिः, आराधना चरमपुरुषार्थस्य साधनरूपा। इयमाराधना कथं विधेया? कदा? केन साधकेन? कया रीत्या च विधेयेत्यादिषु संशयेषु जाग्रत्सु संशयविनाशाय भगवान् परमकारुणिकः समस्तकल्याणगुणात्मक आश्रितजनवत्सलः परब्रह्माभिधानः पुरुषोत्तम आगमशास्त्रान् जगौ। तदुक्तं महाभारते शान्तिपर्वणि नारायणीये उपाख्याने—

"इदं महोपनिषदं चतुर्वेदसमन्वितम् ।
साङ्ख्ययोगकृतं तेन पञ्चरात्रानुशब्दितम् ॥
नारायणमुखोद्गीतं नारदोऽश्रावयत्पुरा ।
ब्रह्मणः सदने तात! यथा दृष्टं यथा श्रुतम् ॥"[१] इति।

### निगमागमयोर्भेदः साम्यञ्च

वेदानां निगमपदवाच्यानां नारायणमुखनिःश्वासरूपत्वमुक्तम्— "अस्य एतस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस......" (बृ.उ. २/४/१०; ४/५/११) इति। अस्य पञ्चरात्रागमस्य नारायण–

१. महाभारत, शान्तिपर्व, (गीताप्रेस, गोरखपुर) ३३९/१११,११२.

मुखोद्गीतत्वम्। ऊहापोहादिचिन्तनाभावत्वं निःश्वासे, चिन्तनभरत्वञ्च मुखोद्गाने इत्यागमानां निगमेभ्यो ज्यायस्त्वं भेदो वेति।

किञ्च, तन्त्रागमसंहितादिपदवाच्यानामेषामागमानां सार्ववर्णिकत्वं वेदानाञ्च त्रैवर्णिकत्वं प्रसिद्धम्। आगमे क्रियाशीलता, वेदसाररूपे वेदान्ते च क्रियोपरतिः। वेदान्ते परमात्मनो व्यापकत्व-निर्लेपत्वादिधर्माणां निरूपणस्य प्राधान्यम्, आगमे च साकारत्व-कारुण्य-वात्सल्य-भक्तजनैकहेतुधृत-विग्रहत्वादीनां सर्वजनसाधारण्येन प्रियाणां धर्माणां माहात्म्यमिति भेदः।

तदेवं सत्यपि बहुविधरीत्योभयत्र भेदे साक्षान्नारायणसम्बद्धत्वादुभयोः प्रामाण्यम्। तदपि प्रोक्तं हारीतस्मृतौ—

"अथातो धर्मं व्याख्यास्यामः॥ श्रुतिप्रमाणको धर्मः॥ श्रुतिश्च द्विविधा॥ वैदिकी तान्त्रिकी च॥" तदित्थं निगमागमपदवाच्यानां भारतीयाध्यात्मतत्त्व-बोधकानां शास्त्राणामेवोपबृंहणरूपा बहुविधा दर्शन-न्याय-मीमांसाद्या विस्तराः।

भारतीयं सांस्कृतिकं साहित्यं यद्यप्युपर्युक्तरीत्या द्विधा निगमागमरूपेण प्रसिद्धमपि कलौ खल्वागमानामेव प्रवर्तनमिति कथितं प्रपञ्चसारतन्त्रे—

"श्रुत्युक्तस्तु कृते धर्मस्त्रेतायां स्मृतिसम्भवः।
द्वापरे तु पुराणोक्तः कलावागमसम्भवः॥"

तथा च वर्तमानकाले आगमबोधितपथैव साधना प्रायः प्रवर्तते इति नाविदितचरम्। सत्यप्याधनविधौ वैदिकमन्त्राणां विनियोगे पूर्णः क्रियाकलापस्तु आगमानुसारी एवेति तदन्तर्विलोकनेन प्रतिभाति।

## आगमवैविध्यम्

आगमानामपि साध्यभेदेन, देशभेदेन, कालभेदेन च वैविध्यं दरीदृश्यते। आचन्द्रार्कं यावत् पृथिव्याः स्थितौ मनुजा मनोभिलषितसुखप्राप्तये, दुःखत्रयविनाशाय च कामयन्ते यतन्ते च। तत्र लौकिकदृग्गोचरसाधनैः दुखात्यन्तिकप्रहाणापुनर्भवात्मकसुखप्राप्त्यभावाच्च अतीन्द्रियदेवतास्तुति-सम्बोधनादिसाधनानि स्वीकुर्वन्ति। तत्र च देवतानां वैविध्यात् साधनानां वैविध्यम्, अत एव साधननिरूपकाणामागमानां वैविध्यं समजनि।

शैव-शाक्त-वैष्णव-जैन-बौद्ध-गाणपत्य-सौरादिका भेदा आगम-साहित्यस्येतिहासे प्रसिद्धाः। अत्र च वर्तमाने काले गाणपत्य-सौर-स्कान्दाख्या भेदा नाममात्रेणोपलभ्यन्ते तेषां साहित्यं, पूजा-पद्धतिः, स्तुत्यादिसमूहश्च

पृथक्तया नैव प्राप्यन्ते। जैन-बौद्धागमाश्च यद्यपि प्राप्यन्ते, किन्तु वेदविरुद्ध-वेदनिन्दात्मकप्रचाराधिक्याद् वैदिकैस्ते आगमा नैव स्वीक्रियन्ते। शैव-शाक्तात्मकौ भेदौ यद्यपि वैदिकौ, तथाऽपि तत्राभक्ष्यनैवेद्यपेयादि-निरूपणदर्शनात् स्तम्भन-उच्चाटन-वशीकार-मारणादीनाञ्च सकामफलप्रदानां प्रयोगाणामाधिक्यात् सात्त्विकेभ्यो मोक्षैकसाध्यं स्वीकुर्वाणेभ्यो न रोचेते।

पारिशेष्याद् नारायणमुखोद्गीतं भागवत-वैखानस-पञ्चरात्रभेदभिन्नं वैष्णवं तन्त्रमेव सात्त्विकैः श्रद्धयाऽऽद्रियते। भवतु रुचिभेदेन स्वीकाराऽ-स्वीकारादिकी कल्पना। सर्वेषामागमानां साम्यं तु तदेव दृश्यते यदत्र भारतीयः सांस्कृतिको निधिर्निहितः। मण्डल-यन्त्र-यज्ञकुण्डादिकल्पनासु पुरव्यवहार-सम्बन्धिनी विद्या (Civil), मन्दिर-मूर्ति-इत्यादिविषयेषु कलाः, महोत्सव-रथोत्सवादिषु समाजविज्ञानम्, मन्दिरनिर्माणायोपयुक्तेषु शिला-काष्ठादिवर्णनेषु भूस्तरविज्ञानम् (Geology) इत्याद्या बहुविधा भौतिका विषया दृश्यन्ते। स्वाराध्येष्टदेवप्रसन्नतया चैहिक-पारलौकिकनिःश्रेयसरूपं फलं प्राप्यते। तदेवमागमानां प्रचार-प्रसारादिकं भारतेऽधिकतमं भवेदिति हेतुना प्रयतनीयम्।

## पञ्चरात्रागमपरिचयः

### पञ्चरात्रशब्दनिर्वचनम्

पञ्चरात्रशब्दस्य कोऽर्थः? संहितासु तत्र त्रैविध्यं प्राप्यते।

१. **पञ्चरात्रागमस्यान्यदर्शनापेक्षयोत्कृष्टताप्रदर्शकोऽर्थः।**

यथा चैतत्— यत्सन्निधौ पुराणानि, वेदाः, वेदान्तम्, साङ्ख्यं, योगश्चेति पञ्च दर्शनानि रात्रिवच्छ्यामतां व्रजन्ति, तत् पञ्चरात्रम्(पौ.सं. ६८/३०७,३०८)।

अस्मिन्नेव निरूपणे दर्शनपञ्चकेषु शाण्डिल्यसंहिता (१/४/७५,७६) साङ्ख्यं, योगः, शैवम्, वेदाः, आरण्यकमिति पञ्च शास्त्राणि परिगणयति। पाद्मसंहिता (ज्ञानपादः१/४७-५३) साङ्ख्यं, योगः, बौद्धः, जैनः, शैव इति पञ्च शास्त्राणि स्वीकरोतीत्येव भेदः।

२. **पाञ्चरात्रिकज्ञानप्राप्तिहेतुकसमयप्रदर्शकं निर्वचनम्**

एतस्मिन्नर्थे विहगेन्द्रसंहिता (प्रथमपटलः, पृ.७) कथयति यद् आदौ कृतयुगे (१) अनन्तः, (२) गरुडः, (३) विष्वक्सेनः, (४) शिवः, (५) ब्रह्मा इति पञ्चभिः क्रमशः पञ्चसु रात्रिषु नारायणसकाशाद् ज्ञानं प्राप्तम्, अतः शास्त्रमिदं पञ्चरात्राख्यमिति।

संहितान्तरेषु श्रोतॄणां नामानि भिन्नानि प्राप्यन्ते, किन्तु विषयविचारः समानः। यथा–

* ईश्वरसंहितायां (२१/५१८–५१९ तथा ५३२–५३३) वामनसंहितायां (पृ.२७४) च सुदर्शनाद्यायुधांशरूपाः शाण्डिल्यः, औपगायनः, मौञ्ज्यायनः, कौशिकः, भारद्वाज इति पञ्च श्रोतारः।

* सनत्कुमारसंहितायां —

(१) ब्रह्मा, (२) शिवः, (३) इन्द्रः, (४) ऋषिः, (५) अन्तःसाक्ष्येन बृहस्पतिः, इति पञ्च ज्ञानं प्राप्तवन्तः।

* विश्वसंहितायां (१२/४६,४७)— (१) ब्रह्मा, (२) शिवः, (३) नागः, (४) ऋषिः, (५) बृहस्पतिरिति ज्ञानं प्राप्तवन्तः। तदेवं पञ्चरात्रिषु ज्ञानप्रापणात् पञ्चरात्रमिति।

### ३. दार्शनिकं निर्वचनम्

* पञ्च – अज्ञाननाशकः + रात्रिः – अज्ञानम्, उभयं मिलित्वा अज्ञाननाशकं शास्त्रं पञ्चरात्रमिति (श्रीप्रश्नसंहिता – २/४०)।
* पञ्च – इन्द्रियाणि चक्षुःश्रोत्रादीनि, पञ्चभूतानि, पञ्चविषयाश्च इत्येषामुपलक्षणम्।

  रा – आदानार्थकराधातोरुपलक्षकः।

  त्र – त्राण-रक्षणार्थोपलक्षकः, तथा च पञ्चेन्द्रियाणां पञ्चभूतानां पञ्चानां रूपरसादिगुणानाञ्च आदातुः जीवात्मनः पालकं रक्षकम् पञ्चरात्रशास्त्रमित्यर्थः (विश्वामित्रसंहिता – २/३–५)।
* पञ्चविधज्ञानस्य बोधकं पञ्चरात्रमित्यर्थश्च ज्ञानामृतसारसंहितया (१/१/४४–५२) निरूपितः।

  तदेवं पञ्चरात्रशब्दार्थो निरूपितः।

## पञ्चरात्रप्रामाण्यस्येतिहासः

पञ्चरात्रस्यागमस्य नारायणमुखोद्गीतत्वात् श्रुतिरूपत्वं पूर्वमुक्तम्। श्रीप्रश्नसंहितायामेकायनवेदरूपत्वमुक्तम्—

"वेदमेकायनं नाम वेदानां शिरसि स्थितम् ।
तदर्थकं पञ्चरात्रं मोक्षदं तत्क्रियावताम् ॥
यस्मिन्नेको मोक्षमार्गो वेदे प्रोक्तः सनातनः ।
मदाराधनरूपेण तस्मादेकायनं भवेत् ॥"(२/३८,३९)इति।

पञ्चरात्रस्य प्रामाण्यविषये प्रथमं कुमारिलभट्टेन तन्त्रवार्त्तिके शङ्का समुद्भाविता। ततश्च शङ्कराचार्येण ब्रह्मसूत्रभाष्ये परमतनिराकरणरूपे द्वितीयाध्यायस्य द्वितीये पादे उत्पत्त्यसम्भवाधिकरणे काश्चन विप्रतिपत्तयः समुद्भाविताः।

किन्तु श्रीयामुनाचार्येण आगमप्रामाण्ये, श्रीरामानुजाचार्येण श्रीभाष्ये श्रीवेदान्तदेशिकेन पञ्चरात्ररक्षायां तदनन्तरञ्च बहुभिर्विद्वद्भिरप्रामाण्यशङ्का निराकृता प्रामाण्यञ्च प्रतिष्ठापितम्।

जयन्तभट्टेन न्यायमञ्जर्यां प्रतिवादिमुखपिधानरूपं सुचारुरूपेण आगमानां प्रामाण्यं प्रतिपादितम्। भारतीये जनजीवने 'सूत्रे मणिगणा इव' ओतं प्रोतञ्चेदमागमशास्त्रं केनाऽपि न हि न्यक्कर्तुं शक्यं सत्स्वपि शब्दाडम्बर-सहस्रेषु।

आगमप्रतिपादनानुसारेण विशालानि देवालयानि तेषु च मन्दिरेषु महोत्सवाः, दीक्षाद्या विषयाः सम्पूर्णेऽस्मिन् जनसमाजे व्याप्ताः, केवला अप्रामाण्यशङ्का न तेषां सत्ताभावाय समर्था। किं खलु भगवान् भास्करो नास्तीति शत-सहस्रमुखैः कथनेन तत्सत्ताया असम्भवः स्यात्? नैव स्यादिति प्रामाण्याप्रामाण्यविचारः।

## पञ्चरात्रस्य प्राचीनत्वम्

पञ्चरात्रमागमः कदा पृथिव्यां प्रकटित इति प्रश्नस्यायमेवोत्तरो यद् नारायणमुखोद्गीतत्वाद् अनादिकालत एव प्रवृत्तः, तथापि ऐतिह्यविदां मनस्तोषाय विचार्यते। पाद्मसंहिताऽन्तर्गतः 'सूरि' शब्दः[२] ऋग्वेदे[३] समुपलभ्यते। पाद्मसंहितायास्तावत्कालप्राचीनत्वाभावेऽपि पञ्चरात्रान्तर्गत-विषयाणाम् ऋग्वेदसमयं यावत् प्राचीनत्वे बीजमिदं सम्भाव्यते। शतपथब्राह्मणे च ''पुरुषो ह नारायणोऽकामयत। अतितिष्ठेयं सर्व्वाणि भूतान्यहमेवेदं सर्व्वं स्यामिति स एतत्पुरुषमेधं पञ्चरात्रं यज्ञक्रतुमपश्यत्।''[४] इति नामनिर्देशपूर्वकः पञ्चरात्रविषयः प्राप्यते।

छान्दोग्योपनिषद् एकायनपदेन पञ्चरात्रमेव व्यपदिशति। पाणिनीयसूत्रेषु ''वासुदेवार्जुनाभ्यां वुन्'' (४/३/९८) इति सूत्रेण वासुदेवे भक्तिमतां वासुदेवाश्रितार्थके शब्दे प्रत्ययविधानात् पाणिनिसमये वासुदेवप्रधानकः

---

२. पाद्मसंहिता, चर्यापादः, २/८७,८८.

३. ऋग्वेदः, ९/२/७.

४. शतपथब्राह्मणम्, १३/६/१/१.

पञ्चरात्रसम्प्रदाय आसीदित्यनुमीयते।

महाभारते च "गीतः सङ्कर्षणेन च" इति श्लोकेन निश्चिता पञ्चरात्र-संहिता निर्दिष्टा, तदेवं बहुविधैः दृढतरप्रमाणवृन्दैः पञ्चरात्रस्य प्राचीनत्वं नाविदितचरम्।

## पञ्चरात्रसंहितानां कालभेदेन वैविध्यम्

सात्वत-पौष्कर-जयेति संहितात्रयं रत्नत्रयरूपेण पञ्चरात्रसम्प्रदाये दृढमूलम्। सात्वतसंहितोपोद्घाते च मया पौष्कर-जयाख्यसंहितयोरपि सात्वतसंहितोपजीव्यत्वं प्रतिपादितम्। तच्च स्वाभाविकम्, संहितानां परस्परं विरोधाभावात्।

संहिताघटितविषयाणां विलोकनेन, पारिभाषिकशब्दानां मूलान्वेषणेन, संहितान्तरनामोल्लेखेन, संहिताघटितपदार्थानां श्रीवैष्णवादिसम्प्रदायेन सह साम्य-वैषम्यविमर्शेन, संहितासन्दर्भाणां वा ग्रन्थविशेषे समुल्लेखेन कियती प्राचीना सा तदनुमीयते। तदत्र सदृष्टान्तं प्रपञ्च्यते।

(१.) प्राचीनतमत्वेन सर्वमान्यसात्वतसंहितायां केशवनारायणादिद्वादश- मूर्तीनां वर्णने "त्रयं त्रयं सिताद्यञ्च केशवाद्यं चतुर्भुजम्" (सा.सं.८/५८) इति "सिताद्यम्" इत्येकेनैव शब्देन वर्णनिरूपणं प्राप्यते। पौष्करसंहितायां तस्यैव वर्णनस्य वैशद्यं दृश्यते। यथा —

"मूर्तित्रयमिदं दिव्यं कुन्देन्दुस्फटिकप्रभम्।
भगवद्वासुदेवेन सहास्य चतुरात्मता॥" (३६/१५०)

द्वितीयं त्रयं गोविन्दाद्यं पद्मरागतुल्यं रक्तमाह —

"त्रयमेवं हि देवानां सह वै ज्ञानमूर्तिनाम्।
चातुरात्म्याद् द्वितीयां तु पद्मरागोज्ज्वलद्युतिम्॥" (३६/१५६)

तृतीयं त्रयं त्रिविक्रमाद्यं सुवर्णमिव पीतं वर्णयति —

"मूर्तित्रितयमेते वै सह च स्वामिना द्विज।
हेमधामप्रभं ज्ञेयं चातुरात्म्यतया स्थितम्॥" (३६/१६२)

चतुर्थं चरमं हृषीकेशाद्यं श्यामं निरूपयन्नतसीपुष्पेण सहोपमिनोति —

"अतसीपुष्पसङ्काशमिदं मूर्तिगणं स्मृतम्।
सहानिरुद्धदेवेन अस्यापि चतुरात्मता॥" (३६/१६८)

तदित्थं त्रयाणां त्रयाणां वर्णननिरूपणं पृथक् पृथग् विद्यते।

ततोऽप्यर्वाचीनायामहिर्बुध्न्यसंहितायां तु प्रत्येकस्वरूपस्य वर्णो भिन्नो वर्णितः। यथा च —

| | | | |
|---|---|---|---|
| १. | केशवः | तप्तजाम्बूनदप्रख्यः | (पीतः) |
| २. | नारायणः | नीलाम्बुदच्छविः | (नीलश्यामः) |
| ३. | माधवः | इन्दीवरश्यामः | (श्यामः) |
| ४. | गोविन्दः | इन्दुबिम्बनिभः | (सितः) |
| ५. | विष्णुः | पद्मकिञ्जल्कसन्निभः | (पीतः) |
| ६. | मधुसूदनः | रक्तपद्मदलप्रख्यः | (रक्तः) |
| ७. | त्रिविक्रमः | उज्ज्वलत्कनकप्रख्यः | (पीतः) |
| ८. | वामनः | तरुणादित्यसङ्काशः | (रक्तः) |
| ९. | श्रीधरः | पुण्डरीकनिभः | (श्वेतः) |
| १०. | हृषीकेशः | विद्युत्प्रभः | (पीतः) |
| ११. | पद्मनाभः | सहस्रादित्यसङ्काशः | (पीतः) |
| १२. | दामोदरः | बन्धूकसन्निभः | (रक्तः) |

तथा चोत्तरोत्तरतो विषयवैशद्यदर्शनेन सात्वतसंहिता सर्वाधिका प्राचीना, ततोऽर्वाचीना पौष्करसंहिता, ततोऽप्यर्वाचीनाऽहिर्बुध्न्यसंहितेत्यनुमीयते।

(२.) सात्वतसंहितायाम् ८/५८–६३ इति श्लोकेषु वर्णित आयुधक्रमो जटिलः, ज्ञातुं कठिनश्च। अत्र पृष्ठतः, अर्थाद् गौणरूपेण स्वीकृतयोः हस्तयोः आयुधक्रमः सर्वेषां प्राग् दर्शितः, मुख्यहस्तयोरायुधक्रमश्च पश्चान्निरूपितः। अस्मिन् निरूपणे पूर्वापरान्वयेन आयुधानां नामानि विज्ञातव्यानि। यथैकस्मिन् श्लोके —

''दक्षिणोत्तरपाणिभ्यां पृष्ठतः केशवादिषु ।
युग्मं युग्मं परिज्ञेयं क्रमेणोर्ध्वगतं त्विदम् ॥
शङ्खचक्रकजं विद्या साऽथ शङ्खोऽथ हेतिराट् ।'' (८/५८–५९)

अत्र भाष्यम् : ''केशवादीनां पश्चात्करद्वयस्थितलाञ्छनक्रममाह दक्षिणोत्तरेति सार्धद्वाभ्याम्। कजं पद्ममित्यर्थः। विद्या गदेत्यर्थः। इति....... ''(पृ.१५३)

अत्र भाष्ये विद्याशब्दस्य गदार्थ इति निरूपणं विना ज्ञातुं दुःशकम्। किञ्च 'सा' इति श्लोकस्यान्वयः पूर्वतनायुधेन कर्तव्यः, तथा च 'सा' इति पदेन पूर्वोक्ता 'गदा' ग्राह्या इति, भाष्ये 'तत्' पदेन अम्बुजग्रहणं विज्ञायते। किञ्चिद् वर्णनं पाठान्तरेण विज्ञेयम्। यथा अस्मिन्नेव श्लोके 'शङ्खोऽथ

हेतिराट्' इति स्थाने तृतीये पाठान्तरे 'शङ्खो गदाम्बुजम्' इति दर्शनेन शङ्खः, हेतिराट् (चक्रम्) इति आयुधद्वयस्थाने 'शङ्खो गदाम्बुजम्' इति आयुधत्रयं प्राप्यते। पदच्छेदेनाऽपि विद्या शङ्खं चक्रमिति निरूपणे भाष्यकारेण 'विद्या' शब्दानन्तरमवग्रहो वर्णितस्तथा च विद्याऽशङ्खं चक्रं, अशङ्खं, शङ्खभिन्नमर्थात् चक्रमिति निरूपणेन आयुधत्रयस्थाने आयुधद्वयं प्राप्यते। यत्किञ्चिज्ज्ञातुं शक्यते, तद्भाष्यमाधारीकृत्य, तथाऽपि पूर्णता नैव प्राप्यते।

अस्मिन्नेव विषये पौष्करसंहितायां किञ्चित्सारल्यं दृश्यते। अत्र प्रायः पूर्वान्वयेन, पाठान्तरेण, पदविच्छेदेन वाऽऽयुधनाम्नां विज्ञानस्यावश्यकता नास्ति। स्पष्टतयैव सर्वत्रायुधानां नामानि पर्यायपूर्वकाणि लिखितानि। आयुधसन्निवेशरूपेण चतुर्णामायुधानामाहत्यैकस्मिन्नेव श्लोके समावेशः, परन्तु गौणायुधयोः सर्वेषां प्राथम्यमित्यादिकं सात्वतानुसारं न दर्शितम्। एकत्रैव चतुर्णां समावेशेनायुधद्वयं पुनरेकस्मिन्नेव मूर्तिनिरूपणे पुनरावर्तनं न प्राप्यते। सात्वतेऽयं प्रश्नो दृश्यते। अत्र प्रत्येकमूर्तेः मुख्ययोः वामदक्षिणयोः हस्तयोरायुधौ निरूप्य गौणयोः वामदक्षिणयोरायुधौ निरूपितौ। त्रयाणां त्रयाणामुत्पत्तिस्थानं वर्णश्चैकत्रैव निरूपितौ। सात्वतसंहितायामेकस्थाने सर्वं न प्राप्यते।

अहिर्बुध्न्यसंहितायां पौष्करसंहितातोऽप्यायुधक्रमस्यैका सरला रीतिः प्राप्यते। अत्र गौणमुख्यस्थाने 'अधःऊर्ध्वम्' इत्येव पदं दत्तं, तत्रापि प्रादक्षिण्यक्रमेणायुधानां परिगणनं कल्पितम्।

पौष्करोक्तस्य क्रमस्यापेक्षयाऽहिर्बुध्न्यसंहितायां सारल्यं यत् पौष्करे गौण-मुख्यहस्तावधारणमुक्तं, किन्तु वामभागस्थद्वयोर्हस्तयोरपि कस्य गौणत्वं कस्य वा मुख्यत्वं तदवधारणस्य कश्चन नियमो नैव संहितायां प्राप्यते, तेन गौणस्य मुख्यत्वं, मुख्यस्य वा गौणत्वं सम्भवेत्। शिल्पिनां चित्रकाराणां विदुषाञ्चात्र क्षतिः सम्भाव्येत। गौणमुख्यस्थाने 'अधःऊर्ध्वम्' इति पदनिवेशेन, तत्रापि प्रादक्षिण्यक्रमेणायुधानां परिगणनेन गौण-मुख्यविषयकः संशयो विनष्टः। 'अधःऊर्ध्वम्' इति पदं गच्छता कालेन''दक्षिणाधःकरक्रमात्'' इति रीत्या तन्त्रे, पुराणे, स्मृतौ, शिल्पग्रन्थे, वास्तुग्रन्थे च प्रसिद्धम्। तथा प्रादक्षिण्यक्रमेण आयुधानां नामनिर्देशः सुलभः। पाद्मसंहितादिषु चतुर्विंशतिमूर्तीनां निरूपणे अयमेव क्रमो नियोजितः।

एतावत्पर्यन्तं द्वादशकेशवादीनामेव वर्णनं प्राप्यते, कालान्तरेण चतुर्विंशतिमूर्तीनां वर्णनं प्रकटितम्। तत्र केशवादिद्वादशं द्वादशान्तरं सङ्कर्षणाद्यं

कृष्णान्तञ्च प्राप्यते। मार्कण्डेयसंहितायां चतुर्विंशतिमूर्तीनामायुधक्रमः अहिर्बुध्न्यसंहितोक्तायुधक्रमेण साम्यं धत्ते, परन्तु तेषामायुधानां वर्णने सरला रीतिरपि प्रदर्शिता। मार्कण्डेयसंहितायामाह—

"दक्षिणं हस्तमारभ्य प्रादक्षिण्येन कारयेत् ।
चिह्नानि मूर्तेः शङ्खादीन्यायुधानि विचक्षणः ॥" (८/१५)

एतदेव पाद्मसंहितायां किञ्चिद्भेदेनानुवर्तते। एतदनन्तरं स्मृतिग्रन्थे वृद्धहारीतस्मृतौ (७/११४), शिल्पग्रन्थे रूपमण्डने (३/२१), शिल्परत्नाकरे (११/१३७), स्वामिनारायणसम्प्रदायस्य धर्मशास्त्रे सत्सङ्गिजीवने (३/३५/५) इत्यादिषु "दक्षिणाधःकरक्रमात्" इति पङ्क्त्यनुसारमायुधक्रमो निरूप्यते। तथा चायुधक्रमवर्णनविकासेन क्रमशः सात्त्वत-पौष्कर-अहिर्बुध्न्य-मार्कण्डेय-पाद्मसंहितानामुत्तरोत्तरोत्तरमर्वाचीनत्वं गम्यते।

(३.) आगमानां मुख्यविषयस्तु परमात्मन इह मृत्युलोके आराधनमेव, तथाऽपि शरीरत्यजनाऽनन्तरप्राप्तिरूपभगवद्धामवर्णनेऽपि संहिताया प्राचीनत्वाऽर्वाचीनत्वं वैष्णवसम्प्रदायानां मान्यताभिर्योजनेन गम्यते।

सात्वतपौष्करसंहितयोः[५] श्वेतद्वीपस्यैव भगवद्धामरूपेण संक्षेपेण नाममात्रेण वर्णनं प्राप्यते न तु विस्तरशः। गच्छता कालेन परमसंहितायां श्वेतद्वीपस्य परिस्थितिः, तद्धामस्थमुक्ताः, धामाधिपतिः, इत्यादीनां वर्णनं सविशेषं प्राप्यते। तथा च परमसंहितायाः सात्त्वत-पौष्कराभ्याम् अर्वाचीनत्वं द्योत्यते।

श्रीवैष्वणसंप्रदायः श्रीमद्रामानुजाचार्यस्य पृथिव्यामवतरणाऽनन्तरं सैद्धान्तिकदृष्ट्या सुबद्धो जातः। वैकुण्ठधाम्नो निश्चितं स्थानम्, मुक्तानां तत्र गमनप्रक्रिया, ब्रह्मसूत्रादिवेदान्तग्रन्थसमन्वयपूर्वकं प्रतिपादनञ्च दृश्यते।

पाद्मसंहितायां[६] श्वेतद्वीपस्य वैकुण्ठस्य च समानं वर्णनं प्राप्यते। यद्यपि अत्र श्वेतद्वीपं नामनिर्देशेन सह वर्णितं, वैकुण्ठञ्च अनादिवासुदेवलोकपदेनैव वर्णितम्, तथा चेदमपि कथयितुं शक्यते पाद्मसंहिताकालपर्यन्तं वैकुण्ठशब्दस्य पञ्चरात्रसम्प्रदाये विशेषेण प्रसिद्धर्नासीदिति।

वेदान्तदेशिकेन स्तोत्ररत्नभाष्ये (पृ.८०) उद्धृतविष्वक्सेनसंहितायां वैकुण्ठस्य नामनिर्देशपूर्वकं विस्तरशो वर्णनं प्राप्यते। तथा चेयं संहिता रामानुजाचार्यानन्तरं विरचिता स्यादित्यपि कथयितुं शक्यते, किंव्वा

५. सात्वतसंहिता, १७/४०२; २५/३१०,३६९.
पौष्करसंहिता, ३०/१८२,१८३; ३१/२०९; ३६/३१७, ३३७.

६. पाद्मसंहिता, ज्ञानपादः, २/४६,४७; १२/५४-६०.

पञ्चरात्रसम्प्रदायस्य श्रीवैष्णवसम्प्रदायेन सह पूर्णत एकीभवनानन्तरं लिखिता स्यादित्यनुमातुं शक्यते। लक्ष्मीतन्त्रे सप्तदशेऽध्याये श्रीप्रश्नसंहितायां त्रयोविंशाध्याये च विस्तरशो वैकुण्ठस्य वर्णनात् ते संहिते पाद्मसंहितातो अप्यर्वाचीने इति कथयितुं शक्यते।

उपेन्द्रसंहितारचनासमये वैकुण्ठं प्रधानं श्वेतद्वीपञ्च गौणमिति वर्णनदर्शनेन परमधामनिरूपणे समुत्क्रान्तिः लभ्यते। तथा चेयमुपेन्द्रसंहिताऽर्वाचीनेति गम्यते।

मध्वगौडीय-सनत्-रुद्रादिसम्प्रदायानां विकासाऽनन्तरं प्रायो द्वादश-शतकतः पञ्चदशशतकपर्यन्ते काले वैकुण्ठस्य स्थाने गोलोको, नित्यवृन्दावनं वा प्रसिद्धिमाजगाम। लक्ष्मीनारायणस्थाने राधाकृष्ण इष्टदेवत्वेन स्वीकृतिं लेभे। तत्काले प्रादुर्भूतासु संहितासु गोलोकस्य प्राधान्यं वैकुण्ठ-श्वेतद्वीपादेश्च गौणत्वं दृश्यते। श्रीब्रह्मसंहिता-माहेश्वरतन्त्र-शाण्डिल्यसंहिताद्यास्तत्र प्रधानाः। तथा चैतासां संहितानामर्वाचीनत्वं ज्याय इति। तदेवं विविधविषयाणां दर्शनेन पञ्चरात्रसंहितानां प्राचीनत्वमर्वाचीनत्वं वाऽवधारयितुं शक्यते।

संहिताया नामनिर्देशादथवा संहितायाः श्लोकानामक्षरशोंऽशेन वा ग्रन्थविशेषेषु समुद्धरणादपि समुद्धारकग्रन्थसमयावलोकनेन संहितायाः कालोऽनुमातुं शक्यते।

यथा च दशमशतककालीनेन उत्पलवैष्णवेन स्पन्दप्रदीपिकानामकः स्पन्दकारिकायाष्टीकात्मको ग्रन्थो विलिखितः। अत्र "श्रीसात्वताः" इति नामनिर्देशपूर्वं[७] श्लोकद्वयमुल्लेखयामास। तयोः प्रथमः श्लोकः सात्त्वत-संहितायामष्टादशे परिच्छेदेऽष्टाविंशत्युत्तरशततमश्लोकरूपेण (१८/१२८) प्राप्यते, तथा चेयं संहिता स्पन्दप्रदीपिकातः प्राचीनेति कथ्यते। इयञ्च रीतिः सर्वत्र प्रसिद्धा।

## सङ्कर्षणसंहितापरिचयः

### सङ्कर्षणसंहितायाः समयः

सङ्कर्षणसंहितायां सात्वतवैष्णवानां विधिविधानरूपसदाचाराः सङ्कर्षणेन वासुदेवभगवतः प्रेरणयोपदिष्टा इति वर्णनं "सात्वतं विधिमास्थाय गीतः सङ्कर्षणेन यः"[८] इति भीष्मपर्ववचनेन सह संयोज्यास्याःसंहिताया प्राचीनत्वे

७. स्पन्दप्रदीपिका, श्लो.९, पृ.१७.

८. महाभारत, भीष्मपर्व (गीताप्रेस,गोरखपुर), ६/६२/३९.

प्रमाणरूपेण स्वीक्रियते चेत् , तर्हि महाभारतकालादपि प्राचीनेयं संहितेति कथयितुं शक्यते।

एतद्वचनस्य श्रद्धामात्रत्वे सति स्पन्दप्रदीपिकाया लेखकेन उत्पलवैष्णवेन समुद्धृताः श्लोका अस्याः प्राचीनत्वे प्रामाणभूताः। ते यथा—

''स्वात्मैकनिष्ठं चिद्रूपं भावाभावपरिष्कृतम् ।
स्व-संवेदन-वेद्यं प्रकृत्यातीत-गोचरम् ॥
इयं योनिः स्मृता विप्र! मन्त्राणां प्रत्ययात्मिका ।
ते मन्त्रा वर्णरूपेण सबाह्याभ्यन्तरोदिताः ॥
नैष्कालिकपदावस्थाः करणानीव देहिनाम् ।
प्रयुक्ताः सर्वकालेषु सिद्ध्यन्ते वीर्ययोगतः ॥''[९]

''येनेदं दृश्यते विश्वं द्रष्टा सर्वस्य यः सदा ।
दृश्यश्चराचरत्वे यः स विष्णुरिति गीयते ॥''[१०]

एते श्लोकाः किञ्चिद्भेदेन सङ्कर्षणसंहितायामुपलभ्यन्ते। भेदश्च अधोरेखया निर्दिष्टः। यथा चैते श्लोकाः—

''स्वात्मैकनिष्ठं चिद्रूपं भावाभावपरिष्कृतम् ।
स्वसंवेदनसंवेद्यं प्रकृत्यातीतगोचरम् ॥
इदं योनिः स्मृता विप्र! वर्णानां प्रत्ययात्मिका ।
तस्मिन् ओताश्च प्रोताश्च सूत्रे मणिगणा इव ॥
ते वर्णा मन्त्ररूपेण सबाह्याभ्यन्तरोदिताः ।
नैष्कालिकपदावस्थाः करणानीव देहिनाम् ॥
प्रयुक्ताः सर्वकालेषु सिद्ध्यन्ते वीर्ययोगतः ।''[११]

''येनेदं दृश्यते विश्वं द्रष्टा विश्वस्य यः सदा ।
दृश्यं चराचरत्वं यः स विष्णुरिति गीयते ॥''[१२]

तथा च स्वल्पभेदोऽत्र दृश्यते। स्पन्दप्रदीपिकायां सङ्कर्षणसूत्रनाम्ना संहितेयमुद्धृता। स्पन्दप्रदीपोक्तप्रस्तुतग्रन्थस्य श्लोकरूपेण सत्त्वात् ब्रह्मसूत्रादिग्रन्थानामिव सूत्ररूपत्वाभावात् प्राशस्त्यपरकसूत्रशब्देनेयमेव संहितोद्धृता इति निश्चित्य कथयितुं शक्यते।

---

९. उत्पलवैष्णवः, स्पन्दप्रदीपिका, पृ.२९.
१०. उत्पलवैष्णवः, स्पन्दप्रदीपिका, पृ.३४.
११. सङ्कर्षणसंहिता, मन्त्ररात्रम्, २/२-५.
१२. सङ्कर्षणसंहिता, ज्ञानरात्रम्, २/५६.

उत्पलवैष्णवस्य समयो जे.सी.चेटर्जीमहोदयेन दशमशतको निर्धारितः।[१३] तथा चेयं संहिता दशमशतकात् प्राचीनेति विज्ञेयम्।

पाञ्चरात्रिकसाहित्येषु प्राचीनसंहितासु अस्याः स्थानं ग्रन्थान्तरङ्ग-दृष्ट्याऽपि विज्ञायते। सात्वतसंहितायां (२/७१) भगवतो द्विभुजत्वं वर्णितम्— "वरदाभयदेनैव शङ्खचक्राङ्कितेन तु। त्रैलोक्योद्धृतिदक्षेण युक्तः पाणिद्वयेन तु॥" इति। वेदान्तदेशिकेन चाप्रसिद्धाः प्राचीनसंहिताः श्रीपौष्कर-सौमन्तव-भारद्वाज-सङ्कर्षणसंहिता उद्धृत्य स्तोत्ररत्नभाष्ये (पृ.८९-९०) भगवतो द्विभुजत्वं वर्णितम्। द्विभुजत्ववर्णनसाम्येन सङ्कर्षणसंहिता श्रीवैष्णव-सम्प्रदायस्य सुप्रसिद्धिसमयतोऽपि प्राचीनेति गम्यते। यतो हि स्तोत्ररत्न-वैकुण्ठगद्यादिषु भगवतश्चतुर्भुजत्वमेव प्रसिद्धम्। यच्चार्वाचीनसंहितास्वपि गम्यते।

वेदान्तदेशिकः सङ्कर्षणसंहितां भूय उदाहरति। पञ्चरात्ररक्षायां तृतीयाधिकारेऽष्टाङ्गप्रणामं निरूपयन् कथयति—"सङ्कर्षणसंहितायां तु सुकृतप्रणामप्रकरणे त्वेवं प्रणाम उक्तः— 'ललाटोदरजान्वङ्घ्रियुगाग्रानूर्ध्वगौ करौ। भूमौ सन्धाय मनसा वासुदेवमनुस्मरन्' इति"। स्तोत्ररत्नभाष्ये च पञ्चमश्लोकनिरूपणेऽपि श्लोकोऽयमुद्धृतः।

सङ्कर्षणसंहितायामाचाररात्रे प्रथमाध्याये ७४ तमः श्लोकोऽयं पाञ्चरात्रिकनाम् आह्निकरूपसदाचारवर्णने प्राप्यते।

स्तोत्ररत्नभाष्ये द्वाविंशतितमश्लोकनिरूपणे शरणागतिमनुलक्ष्याऽपि सङ्कर्षणसंहितोद्धृता। तत्राह—"सङ्कर्षणसंहितायाञ्च 'सर्वधर्मान् परित्यज्य तमेव शरणं व्रजेत्। भगवन्तं वासुदेवं परानन्दविभूतिदम्' इति।" सङ्कर्षण-संहितायामाचाररात्रे २/५१ श्लोकक्रमाङ्के विषयोऽयं प्राप्यते।

तथा च सङ्कर्षणसंहितायाः प्राचीनत्वं प्रामाणिकत्वञ्च निश्चप्रचम्। किञ्च, पर-व्यूह-विभवात्मकं त्रिविधमेव परमात्मतत्त्वं सात्वते निरूपितम्, अत्रापि ज्ञानरात्रे तृतीयाध्याये परमतत्त्वस्य त्रिविधत्वं दृश्यते। प्राचीनासु संहितासु मध्ये सात्त्वत-पौष्कर-अहिर्बुध्न्यसंहितासु[१४] केशवादिद्वादशानां वर्णनं प्राप्यते। अर्वाचीनासु मार्कण्डेय-पाद्मसंहिताद्यासु केशवादिकचतुर्विंशतिमूर्तीनामुल्लेखो

१३. J.C. Chatterji, Kashmir Shaivism, Kashmir Series of Texts and Studies, 1914, pp.13,16.

१४. सात्वतसंहिता, ८/५८-६२;
पौष्करसंहिता, ३६/१४६-१६८;
अहिर्बुध्न्यसंहिता, २६/३२-४७.

दृश्यते। सङ्कर्षणसंहितायां केशवादिकद्वादशानामेव ज्ञानरात्रे तृतीयाध्याये व्यूहविस्तारे वर्णनादियं संहिता प्राचीनसंहितान्तर्गतेति गम्यते।

संहितायामस्यां स्वप्नाख्ये काले द्वादशमूर्तीनां वर्णनावसरे "यच्च प्राक् कथिता ब्रह्मन् सात्वते विस्तरेण तत्" (ज्ञानरात्रम्-४/८) इति सात्वतसंहिताया स्पष्टरूपेण उल्लेखात् सात्वतसंहितायाञ्चाष्टमपरिच्छेदे वार्षिकव्रतनिरूपणावसरे केशवादीनां द्वादशानां वर्णनात् सात्वतसंहितातोऽर्वाचीनेति गम्यते।

किञ्च, मन्त्ररात्रेऽस्यां संहितायां देवीमन्त्राणां निरूपणे "देवीरूपाणि शास्त्रज्ञ! सात्वतादवधारय" (५/१२४) इति सात्वतसंहितोल्लिखिता। सात्वतसंहितायां शक्तिसङ्घपदेन नवमे विभवगणनानन्तरं द्वादशदेव्यो (९/८४-८५) निरूपिताः। द्वादशे च वैभवध्यानवर्णनात् परं (१२/२०६-२१७) देवीभेदा निरूपिताः, परन्तूभयत्रैकोनचत्वारिंशद्विभवदेवीवर्णनं नास्ति। तत्खलु सात्वतोपबृंहणरूपेश्वरसंहितायां (७/३३-३७) तथा लक्ष्मीतन्त्रे( २०/४५-४८ ) परिगणनमस्ति। तथा च सात्वतसंहिताया वर्तमानकालीनप्रकाशने एकोन-चत्वारिंशद्वर्णनाऽभावश्चिन्त्यः।

पौष्करसंहितोक्तानां[१५] केशवादिद्वादशानामायुधवर्णनं सङ्कर्षणसंहिता-प्रोक्तायुधवर्णनेन[१६] सह साम्यं धत्ते। तथा च पौष्करसंहितायां षट्त्रिंशद्-अध्यायोक्ततीर्थक्षेत्राणां निरूपणस्य सङ्कर्षणसंहितायामर्चनारात्रस्थ-चतुर्थाध्यायेन सह भृशं साम्यं दृष्ट्वा पौष्करेण सह समकालत्वं विज्ञायते।

जयाख्यसंहितायां वैष्णवाचारवर्णने (२२/७४-८०) भगवद्यागस्य अष्टवङ्गानि निरूपितानि, अत्रापि शब्दभेदेनाऽर्चनारात्रे द्वितीयाध्याये प्रायः साम्यं विलोक्यते। तथा चेयं संहिता सात्त्वत-पौष्कर-जयाख्यसंहितारूपस्य रत्नत्रयस्य समीपकालोत्पन्नेति प्राप्यते। जयाख्यसंहितायाः समयस्तस्य सम्पादकेन एम्बार् कृष्णमाचार्येण प्रस्तावनायां सोहापोहं कथितो यत्—

"इदमेव तु सुव्यक्तं संहितेयं जयाऽभिधा।
सप्तमात् क्रैस्तशतकात् प्रागेवाजायतेति यत् ॥" इति।

इयं सङ्कर्षणसंहिता संहितानामावल्यां तन्त्ररूपेण निम्नलिखित-संहितासूद्धृता, तेनाऽपि कारणेन समुद्धरणघटितसंहिताभ्योऽस्याः प्राचीनत्वम् अवगम्यते। यथा च—

१. सङ्कर्षणाख्यम् - (३७,७७) मार्कण्डेयसंहिता-१/४९,५७.
२. सङ्कर्षणाख्यम् - (१०५) पाद्मसंहिता, ज्ञानपाद - १/११३

---

१५. पौष्करसंहिता, ३६/१४५-१६८.
१६. सङ्कर्षणसंहिता, ज्ञानरात्रम्, ३/८४-१०६.

३. सङ्कर्षणम् - (९७) विश्वामित्रसंहिता - २/३१.
४. सङ्कर्षणम् - (१०१) पुरुषोत्तमसंहिता - १/४४.
५. संरक्ष(ङ्कर्ष)णम् - (१२) विष्णुतंत्रम् - १/४३, पृ.९.

तथा च सङ्कर्षणसंहिताया सात्वतानन्तरं पौष्कर-जया-अहिर्बुध्न्यादिभिः सह समानकालत्वे सति स्पन्दप्रदीपिकातश्च प्राचीनत्वे सप्तमादारभ्य नवमशतकपर्यन्तः कालो निर्धारणीय इति।

## सङ्कर्षणसंहिता-वस्तुविमर्शः

संहितेयं रात्ररूपेण विभागेन पञ्चधा विभक्ता। सनत्कुमारसंहितादीनामिवाऽत्र रात्रपदं विभागवाचकत्वेन निश्चितम्। तथा च पञ्चसु रात्रेषु विभक्तत्वादियं संहिता "पञ्चरात्र" नामान्वर्थसञ्ज्ञया प्राप्नोति। प्रायो ज्ञान-योग-क्रिया-चर्येति विभागचतुष्टयेषु प्रसिद्धा आगमसंहिता अत्र ज्ञान-मन्त्र-आचार-अर्चना-प्रायश्चित्तेति विभागपञ्चकं स्वीकरोति, सत्यपि ज्ञान-योगादीनां स्वस्मिन् समावेश इति।

### ज्ञानरात्रम्

तथा च प्रथमे ज्ञानरात्रे शुद्ध-अशुद्धसृष्टिर्वर्णिता। प्रथमाध्याये शास्त्रावतरणेऽशान्तस्य नारदस्य बदरीवनगमनं, नरनारायणादेशात् पुनः श्वेतद्वीपप्रयाणं, तत्र वासुदेवदर्शनम्, वासुदेवप्रेरणया च सङ्कर्षणस्योपदेश-प्रदानमिति विषयो दृश्यते।

द्वितीयेऽध्याये नारदजिज्ञासया एकायनवेदप्रशंसा सङ्कर्षणस्य परमतत्त्व-निरूपणञ्च प्राप्यते। तथा च परमात्मा द्विभुजः षाड्गुण्यविग्रह इत्यादिकं सात्त्वत-जयाख्यसंहितानुरूपं परमतत्त्वनिरूपणं दृश्यते। तृतीयाध्याये परमात्मनः कार्य-कारणभावरूपत्वेऽपि विरूपत्वाभावस्य वर्णनम्, सर्वेषां व्यूहानां वासुदेवरूपत्वम्, नित्योदितवासुदेवतः शान्तोदित-वासुदेवस्योत्पत्तिः, तस्माच्च लक्ष्म्या उत्पत्तिः, ततो लक्ष्मीनारायणयोः सम्बन्धवर्णनं प्राप्यते। वासुदेवात् सङ्कर्षण-कीर्तिदेव्योश्चोत्पत्तिर्निरूपिता। ततश्च सङ्कर्षणात् प्रद्युम्न-जयादेव्योरुत्पत्तिः, ततश्च अनिरुद्धमायादेव्योरुत्पत्तिः, तेषां स्वरूपं, कार्यम् आयुधादिकं विस्तरशो वर्णितम्। ततश्च चतुर्व्यूहतः केशवादिद्वादशानामुत्पत्तिः, तेषामायुधक्रमं देवीनां संक्षिप्तवर्णनञ्च प्राप्यते। अत्र च केशवादीनां प्रत्येकं त्रयाणां क्रमशो वासुदेव-सङ्कर्षण-प्रद्युम्न-अनिरुद्धैः सह सम्मिल्य चत्वारः चतुर्व्यूहा भवन्ति, तेषां वर्णाः सित-रक्त-पीत-श्वेत इति क्रमशो वर्णिताः।

चतुर्थाध्याये पञ्चमाध्याये च व्यूहे तुर्य-सुषुप्ति-स्वप्न-जाग्रदिति चतुष्टयं प्रतिपाद्य तुर्यस्य परस्वरूपे लीनत्वम्, सुषुप्तिरूपस्य पाणितले रेखाङ्कित-शस्त्रधृक्त्वम्, सङ्कर्षण-प्रद्युम्न-अनिरुद्धरूपत्वम्; स्वप्नोक्तस्य केशवादि-द्वादशरूपधृक्त्वम्, जाग्रति चैकोनचत्वारिंशद्विभवरूपत्वं वर्णितम्। विशाखयूपस्य वर्णनं मुख्यतया सात्वतसंहितायां लक्ष्मीतन्त्रे च दृश्यते। अत्र सङ्कर्षणसंहितायामपि विभवदेवानां कारणत्वेन विशाखयूपो वर्ण्यते। ततश्चैकोनचत्वारिंशद्विभवदेवानां सूचिः, देवानां तद्देवीनाञ्च स्वरूपाणि, तेषां स्थानमित्यादिकं सुचारु प्रतिपादितम्। अस्याध्यायस्य विशेषतः संशोधने भारतीयतीर्थक्षेत्राणां प्राचीनेतिहासोऽपि प्राप्यते।

षष्ठाध्याये चाशुद्धसृष्टिवर्णनं प्राप्यते। चतुःपर्वात्मकेऽस्मिन् सर्गे अनिरुद्ध-रूपपुरुषस्य प्रकृत्या सह संयोगे गुणत्रयाणां क्षोभ इति प्रथमं पर्व। महत्तत्त्वस्य उत्पत्तिरूपं द्वितीयं पर्व। अस्मिन् द्वितीये पर्वणि सात्त्विक-राजस-तामसेति त्रिविधत्वं प्रतिपादितम्। सात्त्विकं महत्तत्त्वं बुद्धिरूपं विज्ञेयम्। बुद्धिश्च धर्म-ज्ञान-वैराग्य-ऐश्वर्य-अधर्म-अज्ञान-अवैराग्य-अनैश्वर्य-रूपाऽष्टविधा निरूपिता। राजसमहत्तत्त्वं प्राणरूपं प्रतिपादितम्। तदस्य प्राणस्य प्राण-अपान-व्यान-उदान-समानेति पञ्चविधत्वं योगदर्शने प्रसिद्धमत्राऽपि निहितम्। एते प्राणा एव पञ्चोपनिषद्रूपत्वेन निरूप्य तेषां देव्योऽपि प्रतिपादिताः। तामसं महत्तत्त्वं कालरूपं दर्शितम्।

तदेवं द्वितीयं पर्व निरूप्य तस्मादुत्पन्नस्याहङ्कारस्य विस्तरशो वर्णनं तृतीये पर्वणि प्राप्यते। तस्माच्चोत्पन्नानां तत्त्वानां वर्णनमपि सूक्ष्मेक्षिकया प्रतिपाद्य जलार्णवशायिनोऽनिरुद्धस्य विस्तरस्योपसंहारः क्रियते। ततो वैराजपुरुषाख्यं चतुर्थं पर्व सहस्रशीर्षकं वर्ण्यते। तस्य वैराजपुरुषस्याङ्गेषु चतुर्दशलोकानामपि निरूपणं दृश्यते।

सप्तमाध्याये वैराजपुरुषरूपानिरुद्धात् चतुर्मुखस्योत्पत्तिस्तस्य मानससृष्टिः, सनत्कुमारादीनां रुद्रस्य प्रजापतीनाञ्च सृष्टिः चित्सृष्टिरूपेण पौराणिकपद्धत्या प्रतिपादिता।

अष्टमाध्याये चतुर्विधस्य प्रलयस्य वर्णनं कृत्वा, आध्यात्मिक-आधिभौतिक-आधिदैविकरूपेण विविधानि तत्त्वानि समुपवर्ण्य ज्ञानमाहात्म्यं वर्ण्यते।

**मन्त्ररात्रम्**

मन्त्रलक्षणं मन्त्रनिरुक्तिञ्च प्रथमाध्यायं समारभ्य मन्त्रमहिमानं वक्ति। शब्दसृष्टिमूलरूपं मन्त्रशास्त्रं परब्रह्मात्मकमिति समुपवर्ण्य परा-पश्यन्ती-

मध्यमा-वैखरीरूपवाण्या उत्पत्तिः वाक्यपदीय-पाणिनीयशिक्षेत्यादिग्रन्थ-समानाऽत्र दृश्यते। ततश्च वर्णमातृकोत्पत्तौ संहितान्तरेभ्यो वैशिष्ट्यं निरूप्यते। प्रथमं प्रणवस्योत्पत्तिः, तस्मात् अ-उ-म-इति वर्णत्रयोत्पत्तिः। अकारात् स्वरोत्पत्तिः, उकारात् कादि-मावसानपर्यन्तानां स्पर्शसञ्ज्ञकानामुत्पत्तिः, मकाराच्च शेषवर्णानामुत्पत्तिर्निरूपिता।

द्वितीयेऽध्याये मातृकाचक्रवर्णनं प्राप्यते। अत्र बीज-पिण्ड-सञ्ज्ञा-पदरूपाणां मन्त्राणां क्रमशः तुर्य-सुषुप्ति-स्वप्न-जाग्रद्रूपत्वं कथितम्। ततश्च बीजादीनां लक्षणानि प्रतिपादितानि। अस्या एव संहिताया लक्ष्मीतन्त्र-श्रीप्रश्नसंहिताद्यर्वाचीनासु संहितासु लक्षणानीमानि समाविष्टानीति गम्यते।

तृतीयाऽध्याये परस्वरूपपरमात्मनो बीजपिण्ड-सञ्ज्ञारूप-मन्त्राणाम् उद्धरणं प्राप्यते। परमन्त्रस्य हृदयाद्यङ्गानां वर्णनं व्यूहस्य तद्देव्याश्च बीजादि-सञ्ज्ञान्तमन्त्राणां वर्णनं प्राप्यते। मन्त्रोद्धारस्य प्रक्रिया सर्वतो जटिला गोपनीयत्वात्, तथाऽपि युगानुसारेण मन्त्राणां निरूपणावसरे प्रत्येकस्मिन् अध्याये पादटीपमध्ये सश्रमं मन्त्रा दृग्गोचरा भवन्ति।

चतुर्थाध्याये केशवादीनां बीजसञ्ज्ञादिकं निरूप्यते। अस्याः संहिताया इदमेव वैशिष्ट्यम्। इतः पूर्वं कुत्राऽपि विभवानां बीज-सञ्ज्ञामन्त्राणां वर्णनं सात्वतसंहितां विहाय न प्राप्यते। अत्र सात्वतसंहितातो भिन्नमेतत्सर्वं वस्तुजातं निरूपितम्।

पञ्चमेऽध्यायेऽपि सात्वतसंहितातो भिन्नो विभवदेवानां बीज-सञ्ज्ञादिमन्त्राणामुद्धारो वर्णितः। देवीमन्त्राणां समुद्धरणे सात्वतसंहितातो ग्राह्यमित्युक्त्वा सात्वतसंहिताऽपि स्मारिता।

षष्ठाऽध्याये विभवमन्त्रस्य हृदयाद्यङ्गानां निरूपणम्, मुद्राणां वर्णनं च प्राप्यते।

सप्तमाऽध्याये सकाम-निष्कामफलनिरूपणे वैभवमन्त्रतः फलप्राप्तिः इति वर्णितम्। परस्वरूपमन्त्रस्य मोक्षफलप्राप्तिः, योगिनामेवाऽत्राधिकारः, ते च योगिनः कदापि लौकिकं फलं नैव कामयन्त इति स्पष्टमुल्लिखितम्। अस्मिन्नध्याये व्यूह-वैभवमन्त्रैः प्राप्ता विविधाः सिद्धयो निरूपिताः।

अष्टमाध्याये प्रणव-षडक्षर-अष्टाक्षर-द्वादशाक्षर-जितन्तास्तोत्र-साधक-मन्त्राणां व्यापकमन्त्रत्वं निरूप्य हुंफडाद्यङ्गं विनाऽपि तैः फलप्राप्तिरिति नावीन्यं दर्शितम्। ततश्च व्यापकमन्त्राणामर्थाः तेषामुद्धारश्च प्रदर्शितः। परव्यूहमन्त्राणां सात्त्विकत्वं केवलं मोक्षफलभाक्त्वेन वर्णितम्।

वैभवमन्त्राणां राजसत्वम्, पारिवारिकाणां सुदर्शन-वनमाला-गरुडादीनां मन्त्राणां तामसत्वं तामसफलप्राप्त्या वर्णितम्। लौकिककामनायां तिलाज्यादीनां साधनानां दुर्गमत्वं विधीनाञ्च जटिलत्वं, तत्र क्षतौ च शताधिकदु:खानां प्राप्तिञ्च निरूप्य तत्रौदासीन्यं दर्शयति संहितेयम्। इदमेव वैष्णवतन्त्राणां शाक्त-शैव-बौद्ध-जैनतन्त्रेभ्यो विलक्षणत्वं दृश्यते। घोरकर्मणि स्तम्भन-वशीकरण-मारण-उच्चाटनादौ केवलं भक्तानां रक्षणमेव सिद्धिरूपं फलमिति समुपवर्ण्य संयमो विवेकश्च प्रकटित:।

## आचाररात्रम्

मन्त्राणामपि सफलत्वं सदाचारमये जीवने सत्येवेति प्रतिज्ञयाऽऽचार-रात्रमारभ्यते। निषिद्धाचरणत्वे विधेयाऽनाचरणत्वे च सति मन्त्राणां शास्त्रानुसारेणानुष्ठानेऽपि फलाभाव इति संहिताया अस्या विलक्षणताऽस्ति। सदाचारेषु मुख्यत्वमनन्यभावेनैकान्तिकभावेन वा वासुदेवस्य भगवत उपासनैव निर्दिष्टा। ततश्च सामान्यधर्मेषु बाह्याभ्यन्तरभेदेन द्वैविध्यं वर्णितम्। आभ्यन्तरधर्मेषु मनोगम्यानां सौम्य-मृदुता-मैत्री-कारुण्य-कृतज्ञता-तितिक्षा-धृति-श्रद्धा-तपो-दानादीनां वर्णनं सुचारुरूपेण प्रकटितम्।

बाह्याचारेषु भक्तिकार्योपकारकधर्माणां वर्णनम्, चातुर्वर्ण्यलक्षणानि च निरूपितानि।

सदाचाराणाम् अहिंसा-ब्रह्मचर्य-सत्यभाषण-अपरिग्रहादीनां सार्वत्रिकत्वेऽपि देशभेदेन वैविध्यमपि संहिताया अस्या वैशिष्ट्यं विद्यते। यस्मिन् देशे य आचारो न्यायदृष्ट्या सुचारुरूप: सन्नपि भगवद्भक्तौ अननुकूलश्चेत्तस्य त्याग: कार्य इति भगवदाराधनाया ज्यायस्त्वं प्रतिपादितम्। कुलाचारोऽपि भगवद्भक्तावविरुद्धश्चेत् स न त्याज्य इति निरूप्य दैनिक आचारोऽत्र प्रथमाऽध्याये वर्णित:। तदेवं रीत्या अस्या: संहिताया नीतिमीमांसा अपि ग्रन्थान्तरेण सह तुलनात्मकदृष्ट्या संशोधनीया इति।

द्वितीयेऽध्याये सदाचारस्य दृढतायै दीक्षाऽऽवश्यकीति प्रसङ्गसङ्गति: दृश्यते। ततश्च दीक्षाशब्दार्थ:, दीक्षामाहात्म्यम्, दीक्षाया ब्रह्माख्या, व्यूहाख्या वैभवीति भेदा:। दीक्षानुसारमाचार्याणामपि वैविध्यमत्र प्रकटितम्। आचार्यस्य लक्षणान्युक्त्वा लक्षणहीनभागवतवंशजोऽप्याचार्यस्त्याज्य इति संहितान्तरेभ्यो वैशिष्ट्यमत्र प्रतिपादितम्। प्राचीनाया अस्या: संहिताया: पाञ्चरात्रिकसम्प्रदायस्य दृढमूलपरिसीमात: पूर्वभावित्वादुद्घोषोऽयं सम्भाव्यते।

तृतीयाऽध्याये शिष्याणां लक्षणानि निरूपितानि। शरणार्थित्वं मुमुक्षुत्वञ्च

सर्वतो बलीय इति कथयित्वा ''दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकस्तथा लम्पटोऽपि समायाति संशुध्य दीक्ष्य एव च'' इति वर्णनम् ''अपि चेत्सुदुराचारो .....'' इति गीतोक्तवचनं स्मारयति। समयी-पुत्रक-साधक-आचार्येति चातुर्विध्यं शिष्याणां पञ्चरात्रसम्प्रदायानुसारं प्रतिपादितम्। मध्ये च दिव्यं, मुनिभाषितं, पौरुषमिति तन्त्रभेदा वर्णिताः।

चतुर्थाध्याये दीक्षाविधिस्तन्त्रानुसारं सम्पूर्णो वर्णितः। अत्र च मण्डलस्य निरूपणं प्राप्यते। मण्डलमिदं परिशिष्टे स्थापितम्। मण्डलमिदं सात्वत-पौष्करसंहितोक्तमण्डलैः सह किञ्चित् साम्यं धत्ते।

पञ्चमेऽध्याये षष्ठेऽध्याये च दीक्षाविधेरेव पूर्णत्वं प्रतिपादितम्। तत्र होमः, षडध्वविज्ञानम्, सूत्रवेष्टनम्,दन्तकाष्ठपतनपरीक्षादिकं पञ्चरात्रविषयं प्राप्यते। स्वप्नदोषनिरूपणं, नामकरणं, गुरुमहिमा, समयनिरूपणमित्यादिक-मनयोरध्याययोः वैशिष्ट्यम्।

सप्तमाध्यायस्य कीटभक्षत्वादसम्पूर्णत्वादष्टमोऽध्याय एवात्र प्रतिपाद्यते। अत्र च गर्भाधानादारभ्य परमपदप्राप्तिपर्यन्ताः संस्काराः निरूपिताः। तेषु गर्भाधान-पुंसवन-सीमन्त-जातकर्म-नामकरण-निष्क्रमण-सूर्यचन्द्र-देवदर्शन-अन्नप्राशन-चौल-उपवीत-परिणय-परमपदगमनपर्यन्ता द्वादश स्पष्टतो निरूपिताः। पाञ्चरात्रिकदीक्षाया यज्ञोपवीतसंस्कारेण सहाथवा योग्यगुरोरभावे भिन्नः संस्कारो वर्णितः। विद्याभ्यासस्य वानप्रस्थ्यस्य चास्पष्टरूपेण संस्कारेषु योजने सति पञ्चदशसंस्काराणां वर्णनमत्र ज्ञायते।

## अर्चनारात्रम्

सदाचारेऽपि भगवद्भक्तिरेव मुख्या इति आचाररात्रनिरूपित-प्रतिज्ञानुसारं भगवदाराधनरूपमिदं रात्रं प्रारभ्यते। अत्र एकायनविध्यनुसारं वासुदेव एव सपरिवारः पूज्यः, स्कन्दरुद्रमहेन्द्रादीनां परिवाररूपेणार्चने दोषाभावः, स्वतन्त्ररूपेण पूजनं स्पष्टतया निषिद्धम्। तत्र प्रथमाऽध्याये आसन-स्थानादिशुद्ध्यनन्तरं पञ्चरात्रसम्प्रदायानुसारं मानसयागः सुचारुरूपेण प्रतिपादितः।

द्वितीयाऽध्यायेऽष्टविधो बाह्ययागः प्रतिपादितः— (१) मानसः, (२) अर्घ्यपुष्पादिभिर्भोगसञ्ज्ञो यागः, (३) क्षीरमध्वाज्यादिना यागः, (४) अच्युतयाजिभक्तानां पूजनम्, (५) दानम्, (६) वह्निसन्तर्पणम्, (७) पितृयागः, (८) प्राणाग्निहोमः (भोजनम्), इति अष्टविधत्वं तस्य निरूपितम्। ततश्च तेषामेवाष्टानां विस्तरशो निरूपणं प्राप्यते।

तृतीयाध्याये तिथ्यनुसारेण परिवारदेवतापूजनं निरूप्यते। यथा चैतत्-

| तिथिः | देवः | अधिष्ठाता | पुष्पाणि | सिद्धिः |
|---|---|---|---|---|
| १ | किरीटः | वह्निः | रक्तपुष्पाणि | शोभाकीर्तिप्राप्तिः |
| २ | गदा | सरस्वती | श्वेतपुष्पाणि | विद्याप्राप्तिः |
| ३ | अनन्तः | अनन्तशायी | पीतरक्तः | बलप्राप्तिः |
| ४ | विष्वक्सेनः | वासुदेवः | भगवदुच्छिष्टरूपाणि | दास्यभक्तिप्राप्तिः |
| ५ | लक्ष्मीः | – | श्वेतरक्तपुष्पाणि | लक्ष्मीविजयकीर्तिप्राप्तिः |
| ६ | पद्मम् | वरुणः | ईषद्रक्तानि | रत्नप्राप्तिः |
| ७ | कौस्तुभः | सूर्यः | करवीरपुष्पाणि | निधिकुम्भप्राप्तिः |
| ८ | सुदर्शनम् | – | रक्तवर्णानि | तेजःप्राप्तिः |
| ९ | वनमाला | – | पीतपुष्पाणि | विघ्ननाशः |
| १० | शङ्खः | – | श्वेतहारः | कीर्ति-रत्नप्राप्तिः |
| ११ | मासाधिपकेशवादीनां पूजनम्। | | | |

एकादश्यां द्वादशानां केशवादीनां विस्तरशो वर्णनं प्राप्यते, ततो ग्रन्थपातादवशिष्टं न लभ्यते। परन्तु पारिवारिकदेवानां पूजनमस्याः संहिताया वैशिष्ट्यं दृश्यते।

चतुर्थाध्याये स्वयंव्यक्ततीर्थानां गणना कृता। तेषां क्षेत्राणां सूचिः परिशिष्टे प्रदर्शिता। दशमुख्यानामन्येषाञ्च ४३ सङ्ख्याकानां विस्तरशो वर्णनं पौष्करसंहिताऽनन्तरमत्रैव प्राप्यते, तदेतदस्या विलक्षणत्वं दृश्यते। पञ्चम-षष्ठाध्याययोः मूर्तिमान-मूर्तिवैविध्य-दारुशिलादिभेद इत्यादिकं वर्णितम्। ततश्च ग्रन्थपातो दृश्यते। षष्ठेऽध्याये केचन श्लोकाः सन्ति, तेषु मन्दिरमानविषयः अनुमीयते। सप्तमाष्टमाध्याययोः मूर्तिप्रतिष्ठाविषयो विस्तरशः प्रतिपादितः।

## प्रायश्चित्तरात्रम्

पञ्चमं प्रायश्चित्तरात्रमसम्पूर्णं दृश्यते। अत्र प्रथमेऽध्याये मूर्ति-जीर्णोद्धारनिरूपणम्, द्वितीयेऽध्याये पवित्रारोपणविधिः, तृतीयाऽध्याये नानाविधानां काय-वाणी-मनोजन्यदोषाणां प्रायश्चित्तम्, चतुर्थाध्याये च पूजालोपप्रायश्चित्तविधानं प्राप्यते। पञ्चमाध्यायो लुप्तः। षष्ठाध्याये प्रोक्षण-शान्तिहोम-ग्रामशान्ति-विधानं प्राप्यते। तदेवं रीत्या केषाञ्चिद् भागानाम् अपूर्णत्वेऽपि प्राप्तभागेषु बहुविधं पाञ्चरात्रिकं वैशिष्ट्यं प्राचीनत्वञ्च दरीदृश्यते।

## स्वामिनारायणसम्प्रदाये सङ्कर्षणसंहितायाः स्थानम्

भगवता स्वामिनारायणेन वचनामृतेषूल्लिखितः कश्चन नारदपञ्चरात्र-

ग्रन्थः। यथा—

"ततो भगवता वासुदेवेन पञ्चरात्रतन्त्रं कृतम्। तत्र प्रतिपादितं यत् 'श्रीकृष्णपुरुषोत्तमो भगवान् स्वकीयेऽक्षरधाम्नि सदा साकारो मूर्तिमान् निवसति।......तदित्थं साकारमूर्तिः प्रतिपादिता। ततश्चेदं पञ्चरात्रतन्त्रं नारदेन पुनर्विरचितं तेन तत् खलु 'नारदपञ्चरात्र' नाम्ना प्रसिद्धम्। तत्र सम्यक्तया भगवत्स्वरूपवर्णनेन न कश्चित् संशयोऽवशिष्टः।"[१७]

अन्यत्र च दुर्गपुरस्य मध्यमप्रकरणस्याष्टमे वचनामृते "यज्ञं विना कस्यापि कल्याणं न भवति" इत्येतत् सन्दर्भनिरूपणावसरे 'नारदपञ्चरात्रम्' स्मृतम्।

श्रीहरिदिग्विजयग्रन्थे नित्यानन्दस्वामी वटपत्तने भगवत्स्वामिनारायणेन सह विदुषां चर्चाप्रसङ्गं निरूपयन् श्रीहरिमुखेनाह—

"दुर्ज्ञेयत्वादल्पधियां ग्रन्थस्य च महत्त्वतः।
क्वचित्क्वचित्पञ्चरात्रसङ्ग्रहोऽस्ति विदां गृहे॥
साम्प्रतं त्वत्र देशेऽपि तस्य ग्रन्थस्य सन्ति हि।
चत्वारि पूर्णरात्राणि पञ्चमं त्वर्धमस्ति च॥
युष्मत्प्रश्नोत्तरं तत्र वर्तते सम्यगेव हि।
अस्मत्पित्रा स सर्वोऽपि ग्रन्थोऽधीतोऽभवन्ननु॥"[१८]

अत्र खलु सार्धचतूरात्रेषु सम्बद्धोऽयं पञ्चरात्रग्रन्थो गुर्जरप्रदेशे केषाञ्चिदेव विदुषां गेहे उपलभ्यत इति कथयति। अस्मिन्नेवोल्लासे ८४-८५ श्लोकयोः श्लोकद्वयमुल्लिख्य कथयति —

"एवं तृतीयरात्रे हि पञ्चरात्रे बहून्यपि। वचांसि सन्ति चान्यानि........ ॥"

अग्रे च दैक्षं जन्म वर्णयित्वा तत्सन्दर्भं वर्णयति—

"सम्प्राप्य दैक्षं जन्मेदं मुच्यते जात्यहङ्कृतेः।
सद्धर्मपालनेनैव ततो मुक्तिं प्रयाति च॥
एवं द्वितीयरात्रे हि सन्ति वाक्यानि भूरिशः।"

---

१७. "પછી પોતે વાસુદેવ ભગવાને પંચરાત્ર નામે તંત્ર કર્યું. તેને વિષે એમ પ્રતિપાદન કર્યું જે, 'શ્રીકૃષ્ણ પુરુષોત્તમ ભગવાન છે તે પોતાના અક્ષરધામને વિષે સદા દિવ્ય સાકાર મૂર્તિમાન રહ્યા છે...' એવી રીતે સાકાર મૂર્તિનું પ્રતિપાદન કર્યું છે. પછી તે જ પંચરાત્રતંત્રને નારદજીએ ફરીને કર્યું ત્યારે તે 'નારદ પંચરાત્ર' કહેવાયું. તેને વિષે એવી રીતે ભગવાનના સ્વરૂપનું પ્રતિપાદન કર્યું જે, કોઇ રીતે સંશય રહ્યો નહીં." (वच.वर.२)

१८. नित्यानन्दमुनिः, श्रीहरिदिग्विजयः, ४५/१४-१६.

अत्र खलु पञ्चरात्रनामकस्य पञ्चसु रात्रेषु विभक्तस्य कस्यचन बहुपृष्ठसमन्वितग्रन्थस्यांशिकमितिवृत्तं प्राप्यते।

सङ्कर्षणसंहिताया अपि सार्धचतूरात्रात्मकत्वेन रात्ररूपविभागेन च साम्यं विलोक्यायमेव ग्रन्थो भगवता निर्दिष्ट इति विज्ञायते। तथा च द्वितीयरात्रस्य उपर्युक्तः श्लोकोऽपि संहितायामस्यां मन्त्ररात्रे षष्ठाध्याये ४७-४८ क्रमाङ्के स्वल्पभेदेन प्राप्यते।

किञ्चास्य ग्रन्थस्य 'क' मातृकायां सर्वत्र 'नारदपञ्चरात्र' इति लेखनात् पुष्पिकायामपि "इति श्रीनारदपञ्चरात्रे...." इति लेखनाद् वचनामृते स्मृतो नारदपञ्चरात्रग्रन्थोऽयमेव स्यादिति विभाति।

यद्यपि 'नारदपञ्चरात्र' इति सर्वेषां पञ्चरात्रग्रन्थानां सामूहिकी संज्ञा, अतश्च नारदपञ्चरात्रपदेन अन्यस्या अपि संहिताया उल्लेखः सम्भवति, तथाऽपि सार्धचतूरात्रात्मकत्वमस्यैवेति विज्ञाय अस्याः संहिताया एवोल्लेखो नारदपञ्चरात्रपदेनेति द्रढयितुं शक्यते।

किञ्च, एतस्यैव प्रसङ्गस्य परिपुष्टये भगवत्स्वामिनारायणस्य समकालीन आधारानन्दस्वामी स्वीये 'हरिचरित्रामृतसागर' नामके व्रजभाषाभूषिते पद्यात्मके विशाले ग्रन्थे विलिखति यत् - "द्वितीये दिने श्रीहरिः नित्यानन्दमुनिमकथयत् 'हे मुने! जीर्णदुर्गे नारदपञ्चरात्रग्रन्थोऽस्तीति श्रुतम्। तं ग्रन्थं त्वं लिखापयित्वा संशोध्यानय' एवमुक्त्वा श्रीहरिः नित्यानन्दस्वामिनं जीर्णदुर्गगमनायाप्रेरयत्। तेन सह विंशत्यधिकान् साधुच्छात्रान् अपि प्रैषयत्। श्रीहरिः स्वयं स्वभोजन-प्रसादं नित्यानन्दमुनये गमनोत्सुकेभ्यः साधुछात्रेभ्यश्च प्रददौ। गमनवेलायां पुनः श्रीहरिः सर्वान् आश्लेषेण प्रसादयामास। मणिभद्रग्रामान्मयारामभट्टमपि नारदपञ्चरात्रपुस्तकप्रापणाय प्रेषयामास।" अयमपि प्रसङ्गोऽस्या एव संहिताया इति गम्यते। तस्मात् स्वामिनारायणसम्प्रदायेन सह कियदवधि इयं संहिता सम्बद्धेति संशोधनस्य विषयः। भविष्यत्कालीनविद्वद्भिः संशोधनीयम्।

## ग्रन्थसम्पादने उपयुक्तमातृकापरिचयः, सम्पादनशैली च

भगवतो वासुदेवस्यादभ्रदयावशात् प्रयत्ने कृते सत्यस्याः संहिताया मातृकाद्वयं प्राप्तम्।

### 'क' मातृका

इयं गुर्जरराज्यस्य भावनगरजनपदे स्थिताद् भण्डारीयानामकाद् ग्रामात् प्राप्ता। अस्मिन् ग्रामे नातिदूरे प्राचीने काले २५० सङ्ख्याका विप्रा न्यवसन्।

तेषु नरोत्तमजोषीनामकविप्रस्य प्रपौत्रस्य श्रीपरेशभाईजोषीमहोदयस्य सकाशाद् भूकम्पेन ध्वस्तगृहाद् जीर्णावस्थायामियं मातृका लब्धा।

मातृकायामन्ते १७३३ वैक्रमाब्दे तृतीये राजशके ग्रन्थाक्षरान्नागराक्षरेषु लिप्यन्तरीकरणं प्राप्यते।'तृतीये राजशके' इति शब्दस्य संशोधने सति छत्रपति-शिवाजीमहाराजेन स्वस्य सिंहासनारोहणवर्षं राजशकशब्देन प्रवर्तितम्।[१९]

तथा च मातृकान्तःस्थशब्देन स्थलं समयश्च प्राप्येते। महाराष्ट्रराज्यस्य दक्षिणप्रदेशमुखरूपत्वेन दक्षिणप्रदेशाद् ग्रन्थलिप्यां प्राप्तेयं संहिता नागराक्षरेषु लिखापितेत्यनुमीयते।

किञ्च, गागाभट्टः शिवाजीमहाराजस्य राजपुरोहित आसीत्। स्वीयराज्या-रोहणसमये छत्रपतिना गागाभट्टाय लक्षरूप्यकाणि दक्षिणारूपेण प्रदत्तानीति प्रसिद्धम्।[२०] तथा च विद्याव्यासङ्गाद् गागाभट्टेन विदुषां समीपे लिखापितं स्यादिति गम्यते। मातृकारक्षकगृहात् कश्चनैको ब्रह्मचारीरूपेण भारतवर्षे पर्यटनं चकारेति श्रुतम्। तेन खलु कस्माच्चिन्महाराष्ट्रप्रदेशादन्यतो वा लब्धेयमस्माभिः प्राप्ता।

## 'ख' मातृका

इयं वटपत्तनस्थस्य नव्यन्यायाचार्य-नव्यव्याकरणाचार्य-वेदान्ताचार्यस्य राष्ट्रपतितः प्राप्तसम्मानस्य विद्वद्वर्यस्य शोभितमिश्रमहोदयस्य गृहाल्लब्धा। वटपत्तने एव केनचिद् महाराष्ट्रीयब्राह्मणेन लिखापिता।'क' मातृकातो न्यूना। क्षतीनां बाहुल्येऽपि क्वचित्सूक्ष्मेक्षिकया 'क' मातृकास्थक्षतेः नाशं कर्त्री।

## सम्पादनशैली

अस्याः संहितायाः सम्पादने 'क' मातृका एव मूलरूपेण स्वीकृता, तस्यां दोषाणामल्पत्वात्, तत्राऽपि दोषसत्त्वे विदुषां संशोधकानां सौकर्याय 'ख' मातृकातः शुद्धः पाठः मूले संस्थाप्य 'क' मातृकायाः अशुद्धः पाठः टिप्पण्यां नियोजितः। यत्र च 'क' मातृकायामपूर्णता प्राप्ता तदपूर्णतापूर्तिः 'ख' मातृकया स्याच्चेत् ते श्लोकाः पादा वा मूलग्रन्थे अधोरेखायुता दर्शिताः। तस्य च सङ्केतः टिप्पण्यां दर्शितः।'क' मातृकायामपि प्राचीनरचना शैल्यनुसारं किञ्चन व्याकरणपद्धत्या नावीन्यमावश्यकं तत्कृतम्।

---

१९. रायबहादुर पंडित गौरीशंकर हीराचंद ओझा, ''भारतीय प्राचीन लिपिमाला'', पृ.१८६ तथा ''मराठी रियासत'' गोविंद सखाराम सरदेसाई कृत मराठी पुस्तकस्य गुर्जरानुवादः, पृ.१३.

२०. मराठी रियासत (गुर्जरानुवादः), पृ.१२.

भिंनम्, गछति, उर्ध्वम् इत्यादिशब्देषु भिन्नम्, गच्छति, ऊर्ध्वम् इत्याद्याः शब्दाः शुद्धा एव निहिताः। तस्मिन् काले लेखनपद्धत्या एवेयं वैशिष्ट्यमासीत्। परमधुना तादृशस्यैव प्रकाशनेऽशुद्धप्रायः स्यादिति हेतोः, व्याकरणादेश्च दोषाभावाद् अर्थभेदाभावाच्च शुद्धं लिखितम्। सन्धावपि रज्याऽऽरोहणादि शब्देष्ववग्रहस्थाने 'क' मातृकायां कदाचिदवग्रहस्यैकत्वे 'ख' मातृकायाञ्चावग्रहाभावात् शुद्धमेवावग्रहद्वयं प्रकाशितम्। तेनाऽपि वाक्यस्य विकृतेरभावात् शुद्ध्यधिकत्वाच्च। अनुस्वारस्य रेफस्य च क्षतेराधिक्यात् यावच्छक्यं 'ख' मातृकातः, अथवा प्रश्नार्थरूपेण सम्पादकेनैव पादटीपे शुद्धिर्दर्शिता।

यत्र च उभयमातृकयोरशुद्धपाठः प्रतिभाति, तत्र कौंसमध्ये प्रश्नार्थरूपेण शुद्धपाठो मूले एव प्रदर्शितः।

## आभारदर्शनम्

भगवत्स्वामिनारायणस्य भगवतो वासुदेवस्य वेच्छया लब्धे इमे मातृके, तस्मात्तस्यैव वयमुपकृताः। तं भूयः नमस्कृत्याभिवन्दनं कुर्मः।

स्वामिनारायणसम्प्रदायस्याध्यक्षेण परमपूज्यप्रमुखस्वामिमहाराजेन कृपयाऽस्मिन् कार्ये मां योग्यं विज्ञाय नियोजितः। तस्मात् तं प्रति धन्यवादं प्रकटयामि, प्रणमामि च। अक्षरधाम्नः परिसरे स्थितस्यार्षसंशोधनकेन्द्रस्य व्यवस्थापकानां पूज्य-ईश्वरचरणस्वामी, पूज्य-विवेकसागरस्वामी, पूज्य-आनन्दस्वरूपस्वामी, पूज्य-विश्वविहारीस्वामी पूज्य-श्रुतिप्रकाशस्वामी इत्यादीनां साहाय्येन कार्यमिदं सम्पन्नम्, तस्मात्तेषां सर्वेषामुपकारान् प्रणामैः संस्मरामि।

डॉ के.के.ए.वेंकटाचार्यमहोदयेन संशोधनात्मकं प्राक्कथनं( forword) विलिख्य ग्रन्थस्य शोभायामभिवृद्धिः कृता, तस्योपकारान् संस्मृत्य तस्मा अभिनन्दनं ददामि। आर्ष-संशोधनकेन्द्रस्य कार्यकर्तृभिः डॉ. नारायण कंसारा, प्रो. जनक दवे, रमणभाई भट्ट, डाह्याभाई मेनगर, प्रागजीभाई लालाणी, नानालाल भट्ट इत्यादिभिःश्लोकार्धानुक्रमणी-विशिष्टशब्दसूच्यादिकनिर्माणाय कृतः प्रयत्नः प्रशस्यतमः, तानपि ग्रन्थेऽस्मिन् संस्मृत्य उपकारान् प्रकटयामि। स्वामिनारायण अक्षरपीठाख्येन मुद्रणयन्त्रालयेन शीघ्रतया प्रकाशिता, तस्मात्तस्याधिकारिणाम् अप्युपकारमत्र सानन्दं स्मरामि। विशेषतः स्वामिपरमपुरुषदासेनात्यधिकरूपेण संहितायाः सम्पादने प्रयतितत्वात् तं नमस्कृत्य विरमामि।

गुरुपूर्णिमा - २०६० विदुषां वशंवदः
जुलई - २००४ व्रजवल्लभद्विवेदः

ततो माया समुद्भूता देवी ह्याश्चर्यकारिणी।
या काचिद् दृश्यते माया जगत्यस्मिन् सुरादिषु ॥६३॥

मानुषेषु च मुग्धेषु कार्यमस्याः सुखप्रदा।
भक्तानां सुखदा माया संसारिणां जनिप्रदा ॥६४॥

केयूराभरणोपेता पीतवसनशोभिता।
चतुर्भुजा सौम्यवक्त्रा महाकाया स्मिताननना ॥६५॥

तुषारधूलिधवला खड्गपाशसमुद्यता।
प्रबुद्धोत्पलविस्तीर्णलोचना शुभविग्रहा ॥६६॥

अनिरुद्धस्य मायैषा मायी चासौ महेश्वरः।
जगत्सृष्टावादिभूतं युगलं वै प्रकीर्तितम् ॥६७॥

एतावता लक्षणेन व्यक्तीभावं गता इमे।
व्यूहस्था वासुदेवाद्या स्वरूपाः परमात्मनः ॥६८॥

परात्परस्वरूपं यद् नित्योदितं यदुच्यते।
तस्यानुवृत्तिलेशेन[१] सर्वेषामेकरूपता ॥६९॥

सादृश्यं षड्गुणत्वञ्च समत्वञ्च विशेषतः।
शान्तत्वं निष्कलत्वञ्च न भेदो तेषु विद्यते ॥७०॥

गुणद्वयद्वयेनैव भेद उक्तो मयाऽनघ!।
एकैकं भगवद्रूपं मुख्यवृत्त्याऽत्र तिष्ठति ॥७१॥

चतुष्कमवशिष्टं यद् गुणानां समवस्थितम्।
तद् भजेतानुवृत्तिं च नन्वेकैकस्य सर्वदा ॥७२॥

हस्तायुधक्रमेणाऽथ भेदो यः कथितो मया।
तत्रापि समता काचित् तदिदमुच्यते मुने! ॥७३॥

---

१. तस्यैवान्तः प्रवेशेन इति ख ।

वनमालाधराः सर्वे श्रीवत्सकृतलक्षणाः।
शोभिताः कौस्तुभेनैव रत्नराजेन वक्षसि ॥७४॥

किरीटमुकुटैः रम्यैर्हारकेयूरनूपुरैः।
ललाटतिलकैश्चित्रैः स्फुरन्मकरकुण्डलैः ॥७५॥

स्रग्वरैर्विविधैर्माल्यैः कर्पूराद्यैर्विलेपनैः।
रम्यैरलङ्कृताः सर्वे भावनीया विशेषतः ॥७६॥

वासुदेवः स व्यूहस्य आद्यः पुरुष उच्यते।
सङ्कर्षणश्च प्रद्युम्नोऽनिरुद्धस्तु तस्य वै ॥७७॥

तत्तत्कार्यकरत्वेन तत्तन्नाम्ना प्रकीर्त्यते।
जीवाभिमानरूपोऽहम् अहङ्कारश्च संस्मृतः ॥७८॥

प्रलयकार्यकर्तास्मि रुद्राख्येन च वर्त्मना।
मनोभूतः स्थितो देवः प्रद्युम्नः स्थितिकारकः ॥७९॥

बुद्ध्यभिमानिरूपेण स्रष्टाऽनिरुद्ध उच्यते।
नैवेते प्राकृता देवाः किन्तु शुद्धचिदात्मकाः[१] ॥८०॥

अनुवृत्त्या परस्यात्र सर्वे परस्वरूपिणः।
सृष्ट्यादिकार्यकर्तृत्वात्[२] कथ्यन्ते सगुणाः क्वचित् ॥८१॥

निर्गुणो वासुदेवश्च साक्षी(क्षि?)रूपस्तु केवलः।
परन्तु परदृष्ट्या तु[३] नास्ति भेदः कथञ्चन ॥८२॥

अथ प्रत्येकतेजोंशादुद्भूतं भावयेत् क्रमात्।
केशवाद्यं त्रयं चान्यद् द्वादशं जायते मुने! ॥८३॥

नामानि द्वादशानां तु लाञ्छनं मे निबोधत।
शङ्खचक्रगदाकञ्जलाञ्छनानां स्थितिं शृणु ॥८४॥

---

१. चिदात्मिका इति क।
२. हेतुत्वात् इति ख।
३. परदृष्ट्यात्र इति ख।

वासुदेवाद्यदेवानां त्रयाणां तावदुच्यते।
वामे पश्चिमगे चक्रं विद्धि सव्ये तु शङ्खराट्॥८५॥

दक्षिणे मुख्यहस्तेऽब्जं कौमोदकी[१] तथाऽपरे।
एवं हि केशवो धत्ते भगवान् कमलादिकम्॥८६॥

दक्षिणवामहस्ताभ्यां[२] मुख्याभ्यां तु गदाम्बुजे।
वामादौ शङ्खचक्रौ तु स धत्ते पश्चिमद्वये[३]॥८७॥

नारायणाख्यो भगवान् माधवाख्यं तु कथ्यते।
मुख्ये सव्यापसव्ये तु शङ्खं धत्ते प्रभुर्गदाम्॥८८॥

पश्चिमे कञ्जचक्रे तु सर्वपूर्वे भुजद्वये।
मूर्तित्रयमिदं दिव्यं कुन्देन्दुस्फटिकप्रभम्[४]॥८९॥

भगवद्वासुदेवेन सहास्य चतुरात्मता।
त्रितयं तद्धि[५] विज्ञेयं मोक्षदं भवभोगदम्॥९०॥

सङ्कर्षणाद्यदेवानां त्रयाणां लक्षणं शृणु।
कञ्जं[६] मुख्यकरे वामे गदान्यस्मिन् तु दक्षिणे॥९१॥

गोविन्दस्य प्रभोर्विप्र! चक्रशङ्खौ तु पश्चिमे।
विन्यासमायुधानां तु विष्णोरथ च कथ्यते॥९२॥

सव्यापसव्यहस्ताभ्यां मुख्यतः शङ्खपङ्कजे।
एवं पश्चिमहस्ताभ्यां चक्रं कौमोदकी गदा॥९३॥

---

१. कौमोदिकी इति क।
२. वामदक्षिणहस्ताभ्यामिति इति ख।
३. गौणे इत्यर्थः।
४. श्वेतम् इत्यर्थः।
५. तस्य इति ख।
६. पद्मम् इति ख।

मधुसूदनसंज्ञस्य सन्निवेशं निबोधतु।
पद्मं मुख्यकरे वामे दक्षिणे चैव शङ्खराट् ॥९४॥

गदा पश्चिमतः सव्ये चक्रं दक्षिणतः परे।
त्रयमेवं हि देवानां बोध्यते ज्ञानरूपिणाम् ॥९५॥

चातुरात्म्यं द्वितीयं तु पद्मरागोज्ज्वलद्युति[1]।
अथ प्रद्युम्नमुख्यानां त्रयाणामुच्यते क्रमः ॥९६॥

अग्रतो वामपाणौ च चक्रमन्यत्र वै गदा।
सव्ये तु पश्चिमे पद्मं शङ्खं[2] तदपरे स्मृतम् ॥९७॥

विभोस्त्रिविक्रमाख्यस्य वामनस्य निबोधत।
गदाऽग्रवामहस्ते तु चक्रं मुख्ये तु दक्षिणे ॥९८॥

वामे तु पश्चिमे कञ्जं ध्वनिस्तदपरे करे।
श्रीधरस्य गदा वामे मुख्यहस्ते निरूपिता ॥९९॥

चक्र[3]मग्रेऽपसव्याख्ये शङ्खं[4] वामे तु पश्चिमे।
तदन्यस्मिन् परे पद्म[5] चक्रं कोटिरविप्रभम् ॥१००॥

मूर्तित्रितयमेते वै प्रद्युम्नेन समं द्विज!।
[6]हेमधामप्रभं विद्धि चातुरात्म्यतया स्थितम् ॥१०१॥

अतोऽनिरुद्धमूर्तीनां त्रितयमवधारय।
कञ्जमग्रकरे वामे दक्षिणे चैव हेतिराट् ॥१०२॥

सव्यापसव्यहस्ताभ्यां पश्चिमाभ्यां क्रमेण तु।
शब्दकोशं गदां भीमां पद्मनाभे निबोधतु ॥१०३॥

---

१. रक्तम् इत्यर्थः।
२. शङ्खं पद्ममिति इति ख।
३. शङ्खं इति ख।
४. पद्मम् इति ख।
५. विद्धि इति ख।
६. पीतम् इत्यर्थः।

अग्रगे चक्रराड् वामे पद्मं मुख्यकरे परे।
वामे गदां पश्चिमेऽन्यस्मिन् शङ्खराट् तु विधूज्वलः॥१०४॥

धत्ते दामोदरः सव्ये गदां चाग्रे स्थितां शुभाम्।
अपसव्येऽग्रगे शब्दं वामे चक्रं तु पश्चिमे॥१०५॥

पश्चिमे दक्षिणे ज्ञेयं कमलं सूर्यवर्चसम्।
[1]अतसीपुष्पसङ्काशमिदं मूर्तिगणं स्मृतम्॥१०६॥

सहानिरुद्धदेवेन ज्ञेयाऽस्य चातुरात्मता।
श्रीश्च वागीश्वरी कान्तिः क्रिया शक्तिर्विभूतयः॥१०७॥

इच्छा प्रीतिः रतिश्चैव माया धीर्महिमेति च।
द्वादशानां च मूर्तीनां महीष्य इति संश्रुताः[2]॥१०८॥

केशवादिभिः सार्धं पूज्यते(न्ते?) प्राप्यते फलम्।
नारद! व्यूहविस्तारस्तदित्थं वर्ण्यते शुभः॥१०९॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां
ज्ञानरात्रे व्यूहविस्तारवर्णननामा
तृतीयोऽध्यायः।

---

१. श्यामम् इत्यर्थः

२. संश्रुता इति क।

## ज्ञानरात्रे चतुर्थोऽध्यायः

**नारद उवाच**

परव्यूहविभागेन बाह्यमाभ्यन्तरं तथा।
परस्य ब्रह्मणो ज्ञातं रूपं सम्यङ्मया हलिन्!॥ १ ॥

इदानीं श्रोतुमिच्छामि विस्तारो विभवस्य वै।
लक्षणं तत्स्वरूपञ्च वैविध्यञ्च महामते!॥ २ ॥

सृष्टिं स्थितिञ्च देव्यादि कर्मिणामुपकारकम्।

**सङ्कर्षणः**

परंतु द्विविधं ज्ञातं शान्तोदितं सदोदितम्[१]॥ ३ ॥

चातुर्विध्यं व्यूहे ज्ञेयं वैभवाख्यानहेतवे।
तुर्यसुषुप्त्यवस्थाख्यं स्वप्नं जाग्रच्च नारद!॥ ४ ॥

तुर्यं ज्ञेयं परं तत्र [२]लीनं सङ्कर्षणादिकम्।
सुषुप्त्याख्ये परे[३] विप्र! व्यूहात्मा गुणलक्षणः[४]॥ ५ ॥

भविनां भवनाशाय रूपमस्योपचर्यते।
लाञ्छनेन स विज्ञेयः शुभे पाणितले द्वये॥ ६ ॥

स्फुटो रेखामयो शङ्खः सुव्यक्तश्च हलं महत्।
रम्येषुणा तृतीयस्तु तुर्योऽसिलाञ्छनो मुने!॥ ७ ॥

---

१. रेखाङ्कितभागः ख-मातृकायामेव प्राप्यते।
२. ज्ञानादिगुणानां पृथक्त्वाभाव इत्यर्थः।
३. पदे इति ख।
४. ज्ञानबलादिगुणानां पृथक्त्वमित्यर्थः।

स्वप्नाख्ये च विज्ञेया मूर्तयो द्वादशा अमी।
यच्च[1] प्राक् कथिता ब्रह्मन्! सात्वते[2] विस्तरेण तत्[3]॥ ८॥

विशाखयूप एवैष जाग्रदाख्ये पदे स्थितः।
विहाय वासुदेवाद्यं मूर्तिशाखाचतुष्टयम्॥ ९॥

वैभवीयस्य यूपस्य पतित्वेनावतिष्ठते।
कर्मिणां फलदानाय भविनां भवशान्तये॥१०॥

षाड्गुण्यविग्रहो देवो[4] भवति भुवि रूपधृक्।
यथार्कः स्वप्रकाशेनापूरयति स्वगोचरम्॥११॥

यत्र पात्रस्य नैर्मल्यं तत्राधिकः प्रकाशते।
क्वचिद् विलीय वैश्वर्य दीपरूपेण दृश्यते॥१२॥

पद्मनाभादयस्तत्र त्रिंशच्च नव चैव हि।
तेषां रूपं महिर्षी च नारद! त्वं निबोध मे॥१३॥

पद्मनाभो ध्रुवोऽनन्तः शक्त्यात्मा मधुसूदनः।
विद्याधिदेवः कपिलो विश्वरूपो विहङ्गमः॥१४॥

क्रोडात्मा वडवावक्त्रो धर्मो वागीश्वरस्तथा।
एकार्णवान्तःशायी च भगवान् कमठेश्वरः॥१५॥

वाराहो नरसिंहश्च पीयूषाहरणस्तथा।
श्रीपतिर्दिव्यदेहोऽथ कान्तात्माऽमृतधारकः॥१६॥

राहुजित् कालनेमिघ्नः पारिजातहरः शुभः।
लोकनाथस्तु शान्तात्मा दत्तात्रेयो महाप्रभुः॥१७॥

---

१. याश्च इति ख।
२. सात्वतसंहितायाम् अष्टमे परिच्छेदे।
३. ताः इति ख।
४. ख-मातृकायाम धोरेखायुक्तमुपलभ्यते। क-मातृकायां 'देवोऽसौ' इति शब्दोऽस्ति।

न्यग्रोधशायी भगवान् एकशृङ्गतनुस्तथा।
देवो वामनदेहस्तु सर्वव्यापी त्रिविक्रमः॥१८॥

नरो नारायणश्चैव हरिः कृष्णस्तथैव च।
ज्वलत्परशुधृग् रामो रामश्चान्यो धनुर्धरः॥१९॥

वेदविद् भगवान् कल्की पातालशयनः प्रभुः।
विभवा वर्णिता मुख्याः शेषं तन्त्राद्विजानीहि(नातु?)॥२०॥

जगद्धिताय रक्षायै भक्तानां कर्मचारिणाम्।
असुराणां विमोहाय लेभे जनिं महीतले॥२१॥

साक्षात् [1]प्रादुर्भवश्चैवं प्रादुर्भावान्तरास्तथा।
अंशभूतास्तथा ब्रह्मन्! जायन्ते परमात्मनः॥२२॥

तेषां स्थानानि देव्यश्च स्वरूपं शृणु नारद!।
पद्मनाभात्मना शक्तिमवलम्ब्याऽऽस्ते जनार्दनः॥२३॥

पृथिव्यबनलानिल-मूल-नाल-दलात्मके।
चतुस्तत्त्वमये कञ्जे गगनैकार्णवोदरे॥२४॥

मानसेऽनन्तशयने दिव्यबोधतनुः प्रभुः।
सहस्रांशुसहस्राभ उत्तानस्थो हि लीलया॥२५॥

प्रोद्वहंस्तु स्ववीर्येण विद्यां सामर्थ्यविग्रहाम्।
धियं स्वां महिषीञ्चैव धृत्वा स्थितश्च नारद!॥२६॥

भोगमोक्षप्रदो देवः शेषाहिशयनो हरिः।
क्षीरोदधौ स्थितो विप्र! पद्मनाभाख्यवैभवः॥२७॥

ध्रुवाख्यो धारयिताऽसौ ज्योतिश्चक्रस्य वै दिवि।
द्योतयन्तो दिशाः सर्वा राजीवदललोचनः॥२८॥

---

१. प्रादुर्भवत्यत्र इति ख।

शक्तिमाधारसञ्ज्ञाञ्च ताराञ्चोद्वहति सदा।
स्तम्भभूतस्तु स ब्रह्मन्! सर्वेषां ज्योतिषां ध्रुवः॥२९॥

याम्योत्तरे स्थितः स्थैर्यमावहन् मुनिसत्तम!।
अनन्ताख्यश्च भगवान् पूर्णचन्द्रसमाननः॥३०॥

तुहिनाचलसङ्काशो युक्तः फणागणेन सः।
स्वमणिव्यञ्जितेनैव प्रोद्वहन्तं हलं तथा॥३१॥

चक्रं द्वितीयहस्ते वै शङ्खं च मुसलं मुने!।
वामहस्तद्वये धर्ता वारुण्या रक्षकः पतिः॥३२॥

नित्यसन्निहिता देवी तस्य पातालस्थानके।
स्थितोऽयं कर्मिणां वाञ्छां पूरयन् अमरार्चितः॥३३॥

शक्त्यात्माऽप्यथ सञ्चिन्त्यः पुण्डरीकनिभेक्षणः।
प्रादुर्भवति भक्तानां वाञ्छितार्थफलप्रदः॥३४॥

इच्छारूपधरः सौम्यः प्रफुल्लाम्बुजलोचनः।
युगानुसारिकान्तिश्च चतुर्वक्त्रश्चतुर्भुजः॥३५॥

मूर्तचक्रगदाहस्तो रेखायां शङ्खपद्मधृक्।
नानामन्त्रमयीं विद्यां व्यञ्जयत्यमलात्मनाम्॥३६॥

शक्त्या ईशो ददात्यत्र शक्तिं फलाभिलाषवे।
जायते युगसन्धौ स सन्धिदुःखं व्यदारयन्॥३७॥

सम्यग् वाक्पतिना चैव कम्बुग्रीवेण हेतिना।
आज्ञाप्रतीक्षकेनै(णै?)वं गदाचक्रद्वयेन च ॥३८॥

प्रेरितेन हिनस्त्याशु साधुसन्तापकारिणाम्।
भक्तिश्रद्धापराणां स स्मृतमात्रेण नारद!॥३९॥

नारायणावतारोऽसौ शक्तीशोऽयं महीतले।
मधुसूदनरूपेण प्रादुर्भावं वदाम्यहम्[१] ॥४० ॥

प्रलयानिल-सूर्याभोऽप्यग्निष्टोम-कराङ्कितः।
शङ्खचक्रधरश्चैव बाणकार्मुकशस्त्रधृक् ॥४१ ॥

अष्टबाहुवि(र्वि?)शालाक्षः संस्थितो धरणीतले।
क्षीरोदकक्षितिक्षेत्रे पद्मया सह नारद! ॥४२ ॥

विद्याधिदेव(वो?) भगवान् चतुर्वक्त्रश्चतुर्मुखः।
लम्बकूर्चो जटादण्डकमण्डल्वक्षिसूत्रधृक् ॥४३ ॥

फुल्लरक्ताम्बुजाभासः श्वेतपद्मकराङ्कितः।
श्रुतीर्ऋगाद्या वक्त्रेभ्यः प्रोद्गिरन् स महामनाः ॥४४ ॥

विद्यया सार्धमासीनो वाराणस्यां स्थितः सदा।
विद्यार्थिनां सुखं दाताऽविद्यानाशको मुने! ॥४५ ॥

कपिलस्तत्त्वसङ्ख्यातः(ता?) फुल्लारविन्दलोचनः।
सङ्ख्यासमन्वितो बालः पाताले पृथ्वीधारकः ॥४६ ॥

प्राक्समुद्रापयाने च भूभागे शुभलक्षणे।
स्थितः कलावतारेण तत्त्वज्ञो वेददर्शकः ॥४७ ॥

विश्वेश्वरो[२] विश्वरूपः साक्षिभूतो व्यवस्थितः।
योऽन्तः स्थितश्च भक्तानां सत्पदप्राप्तिहेतुकः ॥४८ ॥

द्यावापृथिव्योरन्तस्थो वदनैर्विविधैर्युतः।
चतुरभ्यधिकै-र्दिव्यैश्चत्वारिंशन्महाभुजैः ॥४९ ॥

पद्माद्यं चातुरात्मीयास्त्राणां यद् दशकं महत्।
प्रोच्छ्रितं हि सुव(प?)र्णाद्यं तल्लाञ्छनचतुष्टयम् ॥५० ॥

---

१. प्रादुर्भावान्तरं मुने! इति ख।

२. विश्वेवरो इति क।

लोके शास्त्राष्टकं चैव पुस्तकं चाक्षसूत्रकम्।
दर्वीकमण्डलुर्हैमश्चाभयं हि वरान्वितः॥५१॥

दर्भाजिनं ततश्छत्रं शुक्लञ्च चामरं मुने!।
सुक्स्नुवौ चाऽपि कलशौ वेदिरग्नियुता तथा॥५२॥

चन्द्रार्कमण्डले पूर्णे सर्पराट् मणिदर्पणः।
पुष्पस्नुग् व्यजनं विप्र! विश्वपत्रलताशुभा॥५३॥

संस्थितास्तु भुजेष्वस्याङ्के विश्वाऽत्र सुशोभिता।
श्वेतद्वीपे कुरुक्षेत्रे शैले हिमाचले तथा॥५४॥

वेदिकायास्तटे चैव स्थितो विश्वरूपः प्रभुः।
हंसरूपावतीर्णोऽसौ ज्ञानयज्ञपतत्रधृक्॥५५॥

कुन्देन्दुकान्तिधवलः[1] हेमतुण्डो महातनुः।
रजस्तमःपरो देवः सत्त्वदेहो महेश्वरः॥५६॥

खगाख्या महिषी यस्य श्वेतद्वीपस्थितः प्रभुः।
हंसरूपेण सम्भूतः ज्ञानयज्ञाख्यहेतवे॥५७॥

सूकरः[2] यज्ञपुरुषः वराहाख्यवपुर्धरः।
भूर्भुवःस्वःशरीरः शब्दब्रह्मैकमानसः॥५८॥

वेदाः पादेषु दन्तेषु यज्ञाः चितिमुखो हरिः।
हुतभुग्रसनो दर्भाः केशाः यस्य च ब्रह्मणः॥५९॥

तपोयागजपध्यानस्वरूपः पृथिवीपतिः।
कोकामुखे स्थितो देवः याजिनामपवर्गदः॥६०॥

संहर्ता स्वप्रपन्नानामविद्यापङ्कमञ्जसा।
वासनावासितानां च जीवानां भवशान्तिकृत्॥६१॥

---

१. कुन्देन्दुस्निग्धकान्तिश्च इति ख।
२. क्रोडात्मा इति ख।

वडवावक्त्राख्यविभवः पूर्णषाड्गुण्यविग्रहः।
परतत्त्वान्वयेनैषः आदायैश्वर्यमञ्जसा ॥६२॥

करोति सेचनं दोषदग्धानां भवकर्मिणाम्।
घोणाग्रेणाऽऽहरन्तञ्च त्रैलोक्यस्थजलेन्धनम् ॥६३॥

कनकोज्ज्वलचक्षुष्को निर्धूमानलपर्वतः।
उज्ज्वलो गोयुतो साधो! स्थितोऽयं वडवामुखे ॥६४॥

धर्मात्मा भगवान् विष्णुर्हिमशैलाभनिर्मलः।
सौम्यवक्त्रश्चतुर्बाहुः साधुमार्गप्रवर्तकः ॥६५॥

नरादीनां पिता धीमान् अम्बुजकञ्जधारकः।
मूर्तिपत्नीयुतः पाति जपादिधर्मसंयुतान् ॥६६॥

सिताक्षमालहस्तोऽसौ वरपाणिश्चनीतिमान्।
नित्यं सन्निहितो देवः धर्मारण्ये हिमाचले ॥६७॥

वागीश्वरो हयग्रीवः सूर्यकान्ताग्निसदृशः।
कमलं चाक्षसूत्रञ्च वेदिं त्रेताग्निभूषिताम् ॥६८॥

स्रुक्स्रुवौ साज्यधारौ च विष्टरं सोमसंयुतम्।
दर्भाजिनं मेखलाञ्च दक्षिणेषु करेष्वमी[१] ॥६९॥

ग्राम्यारण्यैश्चरुबीजैः पूर्णं पात्रञ्च पञ्चमे।
कन्दमूलफलैः पत्रैः यज्ञद्रव्यैश्च संयुतम् ॥७०॥

सर्वाश्रमोपकरणैर्युक्तमस्य करे स्थितम्।
वागीश्वर्याश्च भर्ताऽसौ कृष्णाश्वक्षेत्रसंस्थितः ॥७१॥

नैमित्तिकाख्ये लये संस्थः शेते एकार्णवे हरिः।
विकारे वसुधाधारे अभावे तु गुणोदधौ ॥७२॥

---

१. सव्येषु तस्य शोभन्ते पुस्तकं शङ्खमेव च।
दण्डं कमण्डलुं दर्वीमेकस्मिन् त्रितयं करे॥ इति ख-मातृकायामधिकम्।

निषण्णो भोगिशय्यायां समाक्रान्तश्च निद्रया।
वीज्यमानस्तथा प्रीत्या गीयमानश्च विद्यया ॥७३ ॥

लक्ष्म्या संवाह्यमानोऽसौ मूर्तैश्चक्रादिभिर्युतः।
कूर्माख्यो भगवान् लोकेऽवतीर्णो मन्दराद्रिधृक् ॥७४ ॥

द्रवत्कनकवर्णाभः स्वसामर्थ्याज्जलाश्रयः।
धरणीरक्षको भर्ता शक्त्यादिककलाधरः ॥७५ ॥

लवणोदधिभूभागे सिद्धगन्धर्वसेविते।
संस्थितः शङ्खचक्राढ्यो नारायणः सनातनः ॥७६ ॥

नृवराहो दयामूर्तिः शङ्खचक्रगदाधरः।
अतसीपुष्पसङ्काशः निमग्नोद्धरणक्षमः ॥७७ ॥

स्वशक्तिविभवाधार इच्छाज्ञानक्रियायुतः।
नदन्नादमनाख्येयः सौकरीये क्षितौ स्थितः ॥७८ ॥

छायाख्या महिषी यस्य प्रपन्नाभयदानदः।
नृहरिस्तु बृहन्मूर्ती[1] रथाङ्गाम्बुजधारकः ॥७९ ॥

तप्तकाञ्चनवर्णाभः शुद्धसत्त्वनखाङ्कितः।
स्फुल्लिङ्गैर्ज्वलदग्नीनां देहोत्थैश्च प्रकाशितः ॥८० ॥

नारसिंहीं मही(हि?)षीञ्च धर्ता क्रोडे नृकेसरी।
भक्तानां रक्षकः सम्यग् भीषणो भीतिहृत् प्रभुः ॥८१ ॥

सुधामन्थघनश्यामः अमृताहरणो हरिः।
पीताम्बरधरो ब्रह्मन् एकवक्त्रश्चतुर्भुजः ॥८२ ॥

श्रोणीतटार्पितकरः[2] शङ्खचक्रविभूषितः।
शुद्धज्ञानानुविद्धोऽयं कर्मसम्भवभीतिहृत् ॥८३ ॥

---

१. बृहन्मूर्ति इति क।
२. श्रोणितटस्थहस्ताब्जः इति ख।

भक्तानां क्षुत्तृषादीनां नाशकश्चा(श्च अ?)नामयः।
संसारार्णव[1]मग्नानाम् आत्मामृतप्रदीपकः॥८४॥

सुधाकलशधृग् देवो नराकृतिः स नारद!।
कमलगर्भवर्णाभो देवतात्मा श्रियः पतिः॥८५॥

प्रकाशयन्ननादित्वम् आत्मनश्च श्रिया सह।
लक्ष्मीतन्त्रश्च स देवी प्रभुतन्त्रेति दर्शकः॥८६॥

लक्ष्मीनारायणाख्यातो द्वन्द्वध्येयो वरप्रदः।
हस्तद्वये पद्मशङ्खौ[2] पद्मार्पितकरद्वयः॥८७॥

कान्तात्मा मोहिनीरूपो देव उद्भिन्नयौवनः।
मदविह्वलनेत्रोऽयं देवानामपि मोहकः॥८८॥

फुल्लरक्ताम्बुजाभासः त्रैलोक्यविस्मयकरः।
नरनारीमयो देवः कीर्तिमान् अनहङ्कृतिः॥८९॥

आनन्दामृत-सम्पूर्ण-मुखकान्ति-विभूषितः।
लीलाकटाक्षबाणेन नोदयन् दितिपुत्रकान्॥९०॥

राहुजिद् भगवान् जातः करार्पितसुदर्शनः।
नीलनीरदवर्णाभः पद्मपत्रनिभेक्षणः॥९१॥

मध्याह्नभास्कराकारो भीषणो दैत्यभीतिदः।
श्रोणीतटनिविष्टेन वामहस्तेन लीलया॥९२॥

ध्रियमाणो गदां गुर्वीं निषण्णां धरणीतले।
विश्वकामापतिर्देवो वर्तते लोकपूजितः॥९३॥

कान्तारूपधरश्चैव सुधाकलशधृक् तथा।
राहुजिदपि तत्रैव[3] संस्थो लोकोपकारकः॥९४॥

---

१. ग्रस्तानाम् इति ख।
२. चक्रशङ्खौ इति ख।
३. समुद्रमन्थनस्थले इति।

कालनेमिघ्नरूपेण विग्रहं विधुनोति यः।
विज्ञानरश्मिभिर्दीप्तो राजोपलतनुद्युतिः॥९५॥

नानास्त्ररूपभूतात्मा द्वादशभुजभूषितः।
चक्रं कञ्जं गदां बाणमङ्कुशं कुन्तमेव च॥९६॥

षट्सु दक्षिणहस्तेषु शक्तिं पाशौ च कार्मुकम्।
मुसलं मुद्गरं भीमं खेटकं वामबाहुषु॥९७॥

धर्ता मादेवीसंयुक्तः सत्सत्त्वगरुडासनः।
पारिजातहरो देवोऽनेकाद्भुतपराक्रमः॥९८॥

प्रबन्धप्रतिपन्नानां भक्तानामपि देहिनाम्।
यो बोधभूमौ संरूढोऽविद्याबन्धलक्षणः॥९९॥

न्यग्रोधविटपाकारो ह्यनित्यश्चानुरञ्जकः।
कर्मवृक्षः सुविस्तारो मोहमायाफलावृतः॥१००॥

तदुत्पाटनसिद्ध्यर्थमनुग्रहक्षमो[१] मुने!।
द्वादशभुजसंयुक्तः खड्गचक्रादिधारकः॥१०१॥

सत्याख्याऽऽलिङ्गिता देवी देवो गरुडवाहनः।
सूकरक्षेत्रमादाय स्थितः सूरगणार्चितः॥१०२॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां
ज्ञानरात्रे विभववर्णननामा
चतुर्थोऽध्यायः।

---

१. क्षयो इति क।

## ज्ञानरात्रे पञ्चमोऽध्यायः

नारद! विभवाख्यानां पारं यान्ति न केचन।
वासुदेवानुकम्पाभिर्वर्णयामि यतेन्द्रिय![1] ॥ १ ॥

लोकनाथस्तु शान्तात्मा ध्यानमीलितलोचनः।
पद्मासनोपविष्टोऽसौ पद्मगर्भोपमद्युतिः॥ २ ॥

करुणाविष्टनेत्राब्जः शङ्खपद्मकराङ्कितः।
ज्ञान-वैराग्य-सद्धर्म-मार्गत्रय-निदेशकः॥ ३ ॥

कान्तियुतोऽसुरांशानां पाखण्डधर्मबोधकः।
मगधामण्डले विप्र! महाबोधवटाश्रितः॥ ४ ॥

दत्तात्रेयश्च भगवान् ज्ञानमूर्तिर्महामुनिः।
मनुष्यमुनिदेवानां ब्रह्ममार्गानुसारिणाम्॥ ५ ॥

इ(ई?)षल्लब्धरसानां वै निर्भयाध्वप्रदर्शकः।
श्रुतीनां मानसानाञ्चाप्याचाराणां सुरक्षकः॥ ६ ॥

प्रावृड्गिरिरिव श्यामस्तेजसा ज्वलनोपमः।
द्विभुजश्च गुणग्राही दण्डदर्भाक्षसूत्रधृत्(क्?) ॥७॥

सरोरुहया संयुक्तः क्षेत्रे वस्त्रापथे स्थितः।
न्यग्रोधशयनो देवो लये प्राकृतिकाभिधे॥ ८ ॥

---

१. यतेन्द्रियः इति क।

अवतीर्णो विमोहाय कर्मिणां ब्रह्मचारिणाम्।
अविद्याज्ञानतमसो दन्तदीप्त्या विदारकः॥ ९॥

इ(ई?)षदुत्तानशायी स[1] द्विभुजः शिशुरूपधृक्।
वटमूलं[2] समाश्रित्य प्रयागे सुरपूजिते॥१०॥

सन्तिष्ठते स भगवान् शान्तनिद्रारसस्थितः।
मत्स्यात्मा संवृतगात्र एकशृङ्गविराजितः॥११॥

नौरूपां विततां क्षौणीं प्रजापतिगणाश्रयाम्।
कल्पावसानसमये चालयन् अप्सु संस्थितः॥१२॥

अनिमीलितनेत्रात्मा देवः पद्मासनस्थितः।
नौबन्धगिरौ ब्रह्मन्! मीनवक्त्रः स्थितः प्रभुः॥१३॥

वामनो विभवावेशो जटावल्कलभूषितः।
छत्रं तु वामहस्तेऽस्य दण्डमन्यत्र वैष्णवम्॥१४॥

ह्रस्वाङ्गः श्यामलः स्वामी पद्मपत्रदलेक्षणः।
आदित्यायुतसन्दीप्तः शमादिसद्गुणान्वितः॥१५॥

बटुकरूपधरः शान्तो निस्पृहश्च जितेन्द्रियः।
खर्वाभर्ता विवैतस्ते कुलकुक्षौ हिमाचले॥१६॥

कन्दमाले मनोगम्ये संस्थितो वामनस्थले।
त्रिविक्रमो जनाराध्य आक्रम्य जगति स्थितः॥१७॥

आह्लादजननीगङ्गा तत्पादपूजनोद्गता।
त्रैलोक्यपूरको विप्र! सद्वन्द्यो हरितद्युतिः॥१८॥

नानामुद्रास्त्रवृन्देन भुजवृन्देन भूषितः।
खे गतेनाङ्घ्रिदण्डेन देवान् विस्मापयन् स्थितः॥१९॥

---

१. सो इति क।
२. वटमूल इति क।

खड्ग-चक्र-गदा-दण्ड-बाणाङ्कुश-समुद्गराः।
शक्तिः परशुशैलेन्द्रौ[1] दशदक्षभुजेष्वमी ॥२० ॥

शङ्खतोमरशार्ङ्गं च पाशशूलमहीरुहाः।
कुलिशं क्षुरिका(कां?) चैव लाङ्गलं मुशलं महत् ॥२१ ॥

वामहस्तेष्वमी ज्ञेया अन्ये मुद्रान्विता दश।
भयविस्मयहृद् देवो विक्रान्तिहृदयप्रियः ॥२२ ॥

मध्यदेशे तु गङ्गायाः कुरुक्षेत्रे तु नारद!।
यामुनं तटमासाद्य प्रादुर्भावान्तरात्मना ॥२३ ॥

स्थितस्त्रिविक्रमाख्यो यस्त्रैलोक्यकान्ति[2]विग्रहः।
नराख्यो भगवान् यस्तु जपयज्ञप्रदर्शकः ॥२४ ॥

प्रवालाभवपुः धीमन्! अर्धोन्मीलितलोचनः।
अन्तर्निविष्टसद्भावः शब्दब्रह्मैकमानसः ॥२५ ॥

स्फाटिकेनाक्षसूत्रेण करस्थेन सुशोभितः।
गणयन्नक्षसूत्रीयान् आवर्तान् वामपाणिना ॥२६ ॥

जटी सुराऽसुरैर्वन्द्यो जपन् वै लोकपूजितः।
नरसम्भवया सार्धमास्ते मोक्षगतिप्रदः ॥२७ ॥

भूभागेष्वथ रम्येषु स्थितोऽयं बदरीवने।
अथ नारायणो देवो ज्ञेयः कुमुदपाण्डरः ॥२८ ॥

बद्धब्रह्माञ्जलिः शान्तो हृत्पद्मार्पितमानसः।
स्वात्मानं खलु युञ्जानः परस्मिन् अव्यये पदे ॥२९ ॥

देवी नारायणी यस्य नित्यं सन्निहिता विभोः।
हरिर्ज्ञेयोऽथ भगवान् काञ्चनाभः क्रियापरः ॥३० ॥

---

१. परशुशैलेन्द्रो इति क।
२. क्रान्ति इति ख।

दर्भविष्टरयुक्पाणिः शास्त्रपठनतत्परः।
हरिप्रीत्या समायुक्तो वाञ्छितार्थफलप्रदः॥३१॥

गान्धार्याविष्टचेतस्को निष्कामजनसंस्तुतः।
कृष्ण इन्दीवरश्याम ऊर्ध्वबाहुर्जटाधरः॥३२॥

पादेनैकेन स्थित्वाऽसौ तपस्तपति सर्वदा।
वायुभक्षो व्रतव्राततप्तकृच्छ्रपरायणः॥३३॥

कृष्णाजिनोत्तरीयाश्च चत्वारो ब्रह्ममानसाः।
काषायधारिणो नित्यं[1] नित्यं[2] साधुजनप्रियाः॥३४॥

बदरीकाश्रमे संस्था गिरौ गोवर्धने मुने!।
सालग्रामे गवां स्थाने स्थिताः पिण्डारके तथा॥३५॥

परशुधारको रामः कृष्णैणचर्मवेष्टितः।
उदयादित्यवर्णाभो द्विभुजः परमेश्वरः॥३६॥

छिनत्ति बद्धमूलान् यः कर्मवृक्षाँस्तु कर्मिणाम्।
असङ्गशक्त्या भगवान् सत्कुठाराभिधानया॥३७॥

काश्यपीहृदयव्यापी महेन्द्राख्ये नगे स्थितः।
अथ दाशरथी रामो वैदेह्यात्मजनप्रियः॥३८॥

दशाननस्य संहर्ता सतोयजलदप्रभः।
रक्तराजीवनयनो धनुःशरकराङ्कितः॥३९॥

धराधरे चित्रकूटे रक्षःक्षयकरः स्थितः।
अवधे चैव भूभागे योगिनां मानसे तथा॥४०॥

वेदविद् विद्वदानन्दः अतसीकुसुमप्रभः।
विभक्ता वेदशास्त्राणां युगानुसारिबोधदः॥४१॥

---

१. शुद्धा इति ख ।
२. नित्याः इति ख ।

परा वाक् नाभिचक्रस्था त्रिधा पश्यन्तीपूर्विका।
बोधमारुतहृत्पूर्वस्थानेष्वभ्युदिता क्रमात् ॥४२॥

व्यस्ता येन स विद्यायाः पतिः सर्वार्थप्रापकः।
वहन् वै वामहस्तेन सर्वशास्त्रार्थपुस्तकम् ॥४३॥

दक्षिणेन तु शास्त्रार्थमादिशन् ज्ञानमुद्रया।
महर्षिजनसम्मान्यो बदरीवनसंस्थितः ॥४४॥

कल्की कालोऽसुरांशानां धर्मिणां परिरक्षकः।
सितोष्णीषललाटः स नातिदीर्घजटाधरः ॥४५॥

द्रवत्कनकवर्णाभ आदित्यानलसन्निभः।
शरचापकर[1] व्यग्रः खड्गकुन्तकुठारधृक् ॥४६॥

मनोवाजिनमाक्रम्याऽथाऽऽदायात्मगुणायुधान्।
नूनमुत्पाटयत्याशु जन्मान्तरशतोत्थितम् ॥४७॥

वैषयं वासनाजालं शुद्धविज्ञानहेतवे।
पद्मिनीवरदः श्यामः तुरगस्थश्च नारद! ॥४८॥

समासाद्य विपाशां च स्थितो नियतमानसः।
पातालशयनो देवः सर्वतत्त्वसमाश्रितः ॥४९॥

सर्वशक्तिमयोऽनन्तः सर्वेन्द्रियविवर्जितः।
आधारं[2] भुवनानां च विज्ञेयस्तदधः स्थितः ॥५०॥

अनन्तशयनारूढः कल्पान्तहुतभुग्द्युतिः।
चक्राद्यायुधवृन्देन मूर्तेन परिदर्शितः ॥५१॥

स्थिताङ्घ्रिदेशतो[3] लक्ष्मीश्चिन्ता दक्षिणतो विभोः।
मूर्धदेशगता निद्रा तुष्टिस्तद्वामतः स्थिता ॥५२॥

१. शरचापकरो इति ख।
२. आधारो इति ख।
३. स्थिताङ्घ्रिकमले इति ख।

संक्षेपेण मया ब्रह्मन्! विभवा वर्णिताः शुभाः।
नाऽस्य पारं स्वयं याति ब्रह्माऽपि चतुराननः॥५३॥

सहस्रवदनो वाऽपि मर्त्यानामत्र का गतिः।
अंशेन कलया वाऽपि गुणेनाऽधिष्ठितेन च॥५४॥

पूर्णं वाऽवतरत्यत्र परंब्रह्म नराकृतिः।
शुद्धसृष्टिर्मया ख्याता परादिविभवान्तिमा॥५५॥

स्वरूपं पररूपस्य को नु ख्यातुमिहार्हति।
अशुद्धसृष्टिरूपेण माहात्म्यं गदतः शृणु॥५६॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां
ज्ञानरात्रे विभववर्णननामा
पञ्चमोऽध्यायः।

## ज्ञानरात्रे षष्ठोऽध्यायः

**सङ्कर्षणः**

अविकाराय शुद्धाय वासुदेवाय धीमते!।
सदैकात्मस्वरूपाय सृष्टिस्थित्यन्तहेतवे ॥ १ ॥

नमो हिरण्यगर्भादिदेवाय ब्रह्मरूपिणे।
अव्यक्ताय च व्यक्ताय सदसद्व्यक्तिहेतवे ॥ २ ॥

स्थूलसूक्ष्मस्वरूपाय विश्वाधाराय विष्णवे।
प्रणम्य सर्वभूतस्थं विष्णुं श्रीपुरुषोत्तमम् ॥ ३ ॥

सृष्टिं चिदचितां वक्ष्ये प्राकृतां त्रिगुणात्मिकाम्।
आसीत् सौम्य! तमोगूढं भुवनं प्रतिसञ्चरे ॥ ४ ॥

अव्यक्तं त्रिगुणं सूक्ष्ममजरं साम्यतां गतम्।
सदसदात्मकं सर्वं चिदचिदात्मकं तथा ॥ ५ ॥

अविज्ञेयं तदैवाऽऽसीज्जगद्योनिपरात्मकम्।
वासुदेवेच्छया ब्रह्मन्! प्राणिनां हितकाम्यया ॥ ६ ॥

अनिरुद्धात्मको देवः पुरुषः प्रकृतेः परः।
आविरासीज्जगत्स्रष्टुमीशोऽसौ तपसांनिधे!॥ ७ ॥

ईशितव्यं जगत्सर्वमशुद्धमिति कथ्यते।
ईशेशितव्यः सम्बन्धस्तयोस्तन्त्रे निगद्यते ॥ ८ ॥

शान्तावस्थां गताऽव्यक्ता प्रकृतिस्त्रिगुणात्मिका।
तदा स क्षोभयामास प्रकृतिं जगदीश्वरः ॥ ९ ॥

क्षुब्धायाः प्रकृतेस्तस्या उदितास्तु त्रयो गुणाः।
सत्त्वं रजस्तमो विप्र! सृष्टिस्थित्यन्तहेतुकाः॥१०॥

सत्त्वं ज्ञानात्मकं तत्र स्वच्छं स्थितिप्रदं मुने!
रजः ऐश्वर्यवज्ज्ञेयं सक्रियं सृष्टिकारणम्॥११॥

आवृणोति तमः सर्गे तत्त्वान् स्थावरजङ्गमान्।
विलापयति लये सर्वमित्येतद्गुणलक्षणम्॥१२॥

एभिरेव गुणैर्माया प्रसूते विविधं जगत्।
पुरुषशक्तिमासाद्य अव्यक्तास्ते त्रयो गुणाः॥१३॥

व्यक्तीभावं गतास्तत्र शक्तिः रमेति संश्रुता।
पद्मजाया अधिष्ठानात् सत्त्वादिषु क्रमादतः॥१४॥

महाविद्या महालक्ष्मी(क्ष्मीर्?) महामाया तथोच्यते।
सृष्टौ यत् त्रिगुणं पर्व प्रथमं कथितं मुने!॥१५॥

शुद्धेतरविभागेन सत्त्व(त्त्वं?) द्विविधमिष्यते।
शुद्धसृष्टौ शुद्धसत्त्वम् अशुद्धावन्यदुच्यते॥१६॥

अनिरुद्धात्मकं सृष्टौ प्रकृतिपुरुषात्मकम्।
तस्मात् त्रिगुणवैषम्याद् महत्तत्त्वमजायत॥१७॥

यत्तत्सत्त्वगुणं शान्तं स्वच्छं परात्मनः पदम्।
व्यूहात्मवासुदेवेन धिष्ठितं त्रिगुणात्मकम्॥१८॥

सात्त्विकं राजसञ्चैव तामसञ्च त्रिधा महत्।
समं प्रधानतत्त्वेन त्वचा बीजमिवावृतम्॥१९॥

सात्त्विकं बुद्धिरित्युक्तं राजसं प्राण उच्यते।
तामसं कालरूपेण सिद्धं शास्त्रविदो विदुः॥२०॥

बुद्धिरष्टविधा जाता सत्त्वमुख्या गुणात्मिका।
धर्मो ज्ञानञ्च वैराग्यमैश्वर्यमिति तत्त्वतः॥२१॥

विपरीतानि चत्वारि त्वधर्माद्यमनुक्रमात्।
प्रद्युम्नो देवता तस्या जया देवीति संस्मृता ॥२२॥
हेतुरध्यवसायस्य द्रव्यस्फुरणकारिणी।
संशयोऽथ विपर्यासो निश्चयः स्मृतिरेव च ॥२३॥
स्वाप इत्युच्यते बुद्धेर्लक्षणं वृत्तितो पृथक्।
सात्त्विकाऽपि रजोवेगाद् राजसी तमसस्तथा[१] ॥२४॥
वेगात् तामसी विख्याता सुरासुरेषु वर्णनात्।
प्राणो पञ्चविधो ज्ञेयः प्राणापानौ तु संश्रुतौ ॥२५॥
व्यानोदानसमानाख्या व्यष्टिसमष्टिभेदतः।
समष्ट्याख्योऽनिरुद्धस्तु प्रधानस्तत्र कथ्यते ॥२६॥
मायेति देवी विख्याता चातुर्व्यूहेषु वर्णिता।
प्राणः प्रयतनाख्येन कार्येण परमात्मना ॥२७॥
आदिष्टो विष्णुरूपोऽसौ देहेऽस्मिन् पञ्चधा स्थितः।
हृदि प्राणो गुदेऽपानो व्यानः सर्वशरीरगः ॥२८॥
उदानः कण्ठदेशस्थः समानो नाभिमण्डले।
शक्तिरूपा इमे प्राणाः परस्य परमात्मनः ॥२९॥
एभिरेवानिरुद्धाख्यः सृष्टिकार्येऽत्र तिष्ठति।
परमेष्ठी पुमान् विश्वो निवृत्ति(त्तिः?) परसंज्ञितः ॥३०॥
पञ्चनामभिराख्यातः पञ्चोपनिषदाख्यया।
वागीश्वरी क्रिया कीर्तिर्लक्ष्मी(क्ष्मीः?) सृष्टिश्च पञ्चमी ॥३१॥
निर्मला शक्तयस्तेषां देवीरूपा अनुक्रमात्।
इत्थं प्राणादिभिः ख्यातं निगमे राजसं महत् ॥३२॥
तामसः काल इत्युक्तो वैविध्यं भजते प्रभुः।
कालः सृजति भूतानि कालः संहरति प्रजाः ॥३३॥

---

१. संशयादिपञ्च बुद्धेर्वृत्तयो योगसूत्रेऽपि प्रसिद्धाः, ता अत्र गृहीताः, तादृशवृत्ति-युक्ता बुद्धिर्निरूप्यते। क्वचिद् वृत्तितः पृथक् सात्त्विकी राजसीत्यादि- रीत्याऽपि बुद्धिर्निरूप्यते इति भावः।

कालः सर्वेषु जागर्ति कालो हि दुरतिक्रमः।
कालो विभजते सर्वं पुरुषार्थं परापरम् ॥३४॥

भूतं भव्यं भविष्यच्च सर्वं कालात् प्रवर्तते।
कालोऽयं परमाण्वादिः परार्धान्तो विभज्यते ॥३५॥

ग्रहनक्षत्रराशीनां गतिरावृत्तिलक्षणः।
कालो बहुविधोऽनन्तो बहुधा सम्प्रवर्तते ॥३६॥

सङ्कर्षणाधिष्ठितः कालः कीर्तिशक्त्या समन्वितः।
अयने ऋतवो मासाः पक्षाश्च तिथयस्तथा ॥३७॥

सवनानि तथा यामा मुहूर्ता नाड्य एव च।
कलाश्च विनाड्यश्च स्थूलोऽयं परिगण्यते ॥३८॥

अण्वादिसूक्ष्मरूपोऽसौ तामसं तन्महत्स्मृतम्।
महत्तत्त्वस्य विस्तारः सृष्टौ सम्यङ् मयेरितः ॥३९॥

द्वितीयं पर्व विख्यातं सर्गेऽस्मिन् मुनिपुङ्गव!।
महत्तत्त्वाद् विकुर्वाणादिच्छया परमात्मनः ॥४०॥

अहङ्कारस्त्रिधा जातः सात्त्विकादिविभेदतः।
मनसश्चेन्द्रियाणाञ्च[1] भूतानां खलु कारणः(णम्?) ॥४१॥

सहस्रशिरसः साक्षाद् यमनन्तं[2] प्रचक्षते।
सङ्कर्षणप्रधानोऽसौ भूतेन्द्रियमनोमयः ॥४२॥

कर्तृत्वं कारणत्वञ्च कार्यत्वञ्चेति लक्षणम्।
शान्तघोरविमूढात्मा जगत्सृष्टौ नियामकः ॥४३॥

वैकारिकाद् अहङ्कारान्मनस्तत्त्वम् अभून्मुने!।
यत्सङ्कल्पविकल्पाभ्यां वर्तते कामनाप्रदम् ॥४४॥

---

१. नमसश्चेन्द्रियाणाञ्च इति क।
२. यमनन्तः इति क ।

यद्विदुरनिरुद्धाख्यम् इन्द्रियाणामधीश्वरम्।
शारदेन्दु(न्दी?)वरश्यामं योगिनां सिद्धिदं प्रभु॥४५॥

मन एव मनुष्याणां कारणं जन्ममोक्षयोः।
मनःसृष्टौ रता अज्ञाः मनोजालान्विताः[1] जनाः॥४६॥

मोहपाशेन बद्धत्वात् संसरन्ति मुहुर्मुहुः[2]।
मनोजयस्तु मोक्षो वै मनःसृष्टौ तु साधनम्॥४७॥

इन्द्रियाणामधिदेवाः जाता वैकारिकात्तथा।
तैजसात् खल्वहङ्कारादिन्द्रियाण्यभु(भ?)वन् खलु॥४८॥

क्रियाज्ञानविभेदेन प्राणिनां साधनानि वै।
प्राणस्य हि क्रियाशक्तिर्बुद्धेर्विज्ञानशक्तिता॥४९॥

कर्मेन्द्रियाण्यधिष्ठाय कर्तव्येषु प्रवर्तते।
बुद्धीन्द्रियाण्यधिष्ठाय विषयेषु प्रवर्तते॥५०॥

श्रोत्रत्वग्रसनाघ्राणनेत्राणि पञ्च नारद!।
ज्ञानेन्द्रियाणि भेदेन कर्मेन्द्रियाण्यथ शृणु॥५१॥

वाक्पाणिपादरूपाणि पायूपस्थात्मकानि च।
वायुवत् सूक्ष्मरूपाणि दुर्ज्ञेयानि विपश्चिताम्॥५२॥

तामसाच्च विकुर्वाणाद् भगवच्छक्तिचोदितात्।
शब्दमात्रमभूत्तस्मान्नभो जातं तु शब्दगम्॥५३॥

नभसः स्पर्शतन्मात्रं तस्माद् वायुः समुद्भु(भू?)तः।
स्पर्शगुणश्च त्वग्ग्राह्यस्तस्मात्परात्मनोदनात्॥५४॥

रूपमात्रं समुत्पन्नं रूपतन्मात्रतोऽनलः।
रूपी प्रतिष्ठितो नेत्रे तस्माद् देवेन प्रेरितम्॥५५॥

---

१. मनोजालान्तिाः इति क ।

२. मुहुर्मुहु इति क ।

रसतन्मात्रमुत्पन्नं जलं रसनाग्राहकम्।
तस्माच्चैव विकुर्वाणाद्[1] वासुदेवेच्छयाऽ(प्य?)भूत्॥५६॥

गन्धं बहुविधं ब्रह्मन्[2] तस्माद् भूमिस्त्वजायत।
घ्राणग्राह्या मनुष्याणां मोक्षैकफलदा मता॥५७॥

आहङ्कारिकवर्गोऽयं सङ्कर्षणप्रधानकः।
तृतीयं पर्व इत्युक्तं सर्गे प्राधानिके मुने॥५८॥

मनसेन्द्रियभूतैश्च देवताप्राणबुद्धिभिः।
भगवत्प्रेरणां प्राप्तैरण्डमुत्पादितं महत्॥५९॥

बृंहणत्वात् तु ब्रह्माख्यं ब्रह्माण्डाभिधया मतम्।
वर्षाणां तु सहस्रान्ते तदण्डमुदकेशयम्॥६०॥

सङ्कर्षणोऽभिनत् सद्यो वासुदेवेन प्रेरितः।
अनिरुद्धात्मना देवः निर्भिद्याण्डं विनिर्गतः॥६१॥

तज्जले शयनं चक्रेऽनिरुद्धो रमया सह।
शेषार्णवशयो देवः प्रसिद्धो जगति(ती?)तले॥६२॥

सहस्रशीर्षः सहस्राक्षः सहस्रपाणिपात्प्रभुः।
यस्येहावयवैर्लोकान् कल्पयन्ति विपश्चितः॥६३॥

कट्यादिभिरधः सप्त सप्तोर्ध्वं जघनादिभिः।
पुरुषस्याननं ब्रह्म बाहू क्षत्रं परात्मनः॥६४॥

वैश्य ऊर्वोर्वासुदेवात् पद्भ्यां शूद्रोऽभ्यजायत।
भूर्लोकः स्वीकृतः पद्भ्यां भुवर्लोकोऽस्य नाभितः॥६५॥

स्वर्लोकस्तु हृदा ज्ञेय उरसाऽजायत महः।
ग्रीवायां जनलोकश्च स्तनद्वयात् तपस्तथा॥६६॥

---

१. विर्कुवाणाद् इति क।
२. अधोरेखायुक्तोभागः ख-मातृकायामेवोपलभ्यते।

मूर्ध्ना सत्याख्यलोकोऽयं ब्रह्मलोकः सनातनः।
कट्यामतलमुत्पन्नमूरुभ्यां वितलं प्रभोः॥६७॥

जानुभ्यां सुतलं विद्धि जङ्घाभ्यां तु तलातलम्।
महातलं तु गुल्फाभ्यां प्रपदाभ्यां रसातलम्॥६८॥

पादतले तु पातालं कल्पितं शास्त्रवेदिभिः।
अग्न्यादयश्च सञ्जाता ब्रह्माण्डस्थितिकारकाः॥६९॥

अग्निश्च मुखतो जातः पादतोऽजायत मही।
वायुर्निःश्वासतो ब्रह्मन्! हृदयादन्तरीक्षकम्॥७०॥

चक्षुर्भ्यां रविरुत्पन्नश्चन्द्रमाः मनसस्तथा।
यत्किञ्चिद् दृश्यते भूम्यां स्थावरं जङ्गमं तथा॥७१॥

सर्वं तस्मात् समुत्पन्नं पुरुषान्नाऽत्र संशयः।
अधिभूतमधिदैवमध्यात्ममिति नारद!॥७२॥

एतदेवानुजानीहि देवस्य परमात्मनः।
चरित्रं कीर्तितव्यं तत् श्रोतव्यञ्च पुनः पुनः॥७३॥

चतुर्थं पर्व इत्युक्तं[1] क्षीरशायि तपोनिधे!
सर्गः शुद्धेतरः ख्यातो जडः प्राधानिको मया॥७४॥

वासुदेवेच्छया विप्र! किं भूयः श्रोतुमिच्छसि।
श्रोतारमुपसङ्गम्य त्वादृशं गोप्यमत्र किम्॥७५॥

इति श्रीनारदपञ्चरात्रे[2] सङ्कर्षणसंहितायां
ज्ञानरात्रे शुद्धेतरसृष्टिवर्णननामा
षष्ठोऽध्यायः।

---

१. पर्वमित्युक्तं इति क।
२. रेखाङ्कितभागः ख-मातृकायामेवोपलभ्यते।

## ज्ञानरात्रे सप्तमोऽध्यायः

नारदः

नमस्ते ज्ञानरूपाय हलिने शास्त्ररूपिणे।
सृष्टिसर्गं विदित्वैतत् तृप्तिर्मे नास्ति लाङ्गलिन्!॥ १॥

ज्ञानं मोक्षप्रदं दिव्यं वासुदेवात्मकं श्रुतम्।
सर्गात्मके चरित्रेऽस्मिन् आशङ्कां त्वमपाकुरु।
सन्तोषय जिज्ञासां प्रार्थयामि पुनः पुनः॥ २॥

शुद्धे शुद्धेतरे सर्गे को भेदस्तन्निरूपय।
अचित्सर्गो यथा ज्ञातः चित्सर्गञ्च निशामय॥ ३॥

अध्यात्मादित्रयञ्चैव विशेषेण निबोध मे।
त्वं हि शास्त्रार्थद्रष्टा नः[1] शङ्काछेत्तासि साम्प्रतम्॥ ४॥

सङ्कर्षणः

वासुदेवात्मके शुद्धे व्यूहवैभववर्णने।
वर्णनादीश्वरस्यात्र[2] दिव्यं तत्खलु नारद!॥ ५॥

वासुदेवप्रवेशेन निर्गुणं वा प्रपठ्यते।
नास्ति सर्गेऽत्र मालिन्यं शुद्धसत्त्वं निगद्यते[3]॥ ६॥

शुद्धसृष्टिस्वरूपेण वेद्यं तत् तपसांनिधे!।
तद्भिन्ना प्राकृतिकी सृष्टिः यत्र ब्रह्माण्डसर्जनम्॥ ७॥

---

१. शास्त्रार्थदृश्वानः इति क-ख।
२. वर्णदीश्वरस्यात्र इति क।
३. निरूप्यते इति ख।

त्रैगुण्यात् प्राकृतिकत्वात् शुद्धेतरत्वेन गम्यते।
किंवा देवाप्सरःसिद्धचारणकिन्नरात्मनाम्॥ ८॥

पिशाचोरग-गन्धर्व-यक्ष-मानुष-रक्षसाम्।
सृष्टिः चिदन्वयात् ख्याता चित्सृष्टिरपि नारद!॥ ९॥

अविद्यावेष्टितत्वाच्च देवादीनां महात्मनाम्।
शुद्धेतरत्वेन विज्ञेयाऽन्तःसत्त्वेऽपि परात्मनः॥१०॥

चिदचित्सृष्टिजिज्ञासां विशेषाच्छामयामि ते।
प्रकृतिपुंस आरभ्यानिरुद्धात्मरूपान्मुने!॥११॥

नारायणो यः क्षीराब्धौ शेते तद्विदितं त्वया।
ब्रह्माण्डसर्जने युक्तो ब्रह्माण्डाधिपतिः पुमान्॥१२॥

तावत्पर्यन्त आख्यातः सर्गः पर्वचतुष्टये।
चिदन्वयेऽपि सर्गेऽस्मिन् प्राकृताख्ये विदांवर!॥१३॥

जडसर्जनमुख्यत्वादचित्सृष्टिस्तु भण्यते।
वक्ष्ये चित्सृष्टिरूपं त्वामधुना मुनिसत्तम!॥१४॥

साहङ्कारेन्द्रिय-प्राण-भूत-बुद्धि-मनोयुतः।
वैराजपुरुषः सृष्टः प्रथमो विश्वधृक् प्रभुः॥१५॥

नाभिरन्ध्रात्मके क्षेत्रे तस्य विष्णुसमीहया।
सहस्रार्कप्रतीकाशः सहस्रचन्द्रकेसरः॥१६॥

सहस्रानलगर्भश्च हेमनालो महाप्रभः।
पद्मकोशो महान् जातः कालेन प्रतिबोधितः॥१७॥

तेजसा सलिलं स्वेन द्योतयन् यादसांपतेः।
संसाराङ्कुरपद्मेऽस्मिन् प्रविवेश परात्परः॥१८॥

स्वान्तर्यमनशक्त्या स [1]तस्मिन् जज्ञे चतुर्मुखम्।
जगतां प्रभवमाद्यं जनकं सर्वदेहिनाम् ॥ १९ ॥

कर्णिकायां स्थितो ब्रह्मा विरञ्चिः विश्वसृट् पुमान्।
नारद! राजसो धाताऽम्बुरोहदलासने ॥२० ॥

एकलो न सुखं लेभे द्यावाभूमी विलोकयन्।
कोऽहं?कस्मात्? कदा जातः? किंकार्यमिति चिन्तयन्॥२१ ॥

अधस्तादासनस्यात्र भाव्यं किञ्चिद्विचारयन्।
अब्जनाले चचालासौ शतं दिव्यं तु वत्सरम्॥२२ ॥

नान्तं लेभे श्रमं प्राप्तः प्रार्थयामास कारणम्।
अन्तःस्थितं परात्मानं सबाष्पगद्गदगिरा ॥२३ ॥

कालेन महताऽश्रावीत् तपःशब्दः(दं?) पुनः पुनः।
लोकस्रष्टा तपश्चक्रे[2] दिव्यं वर्षशतं मुने!॥२४ ॥

आत्मन्यात्मानमावेश्य हृदि परं व्यचिन्तयन्।
तपसा ह्येधमानेन प्राप्तवीर्यश्चतुर्मुखः ॥२५ ॥

पद्मकोशं तदाविश्य भगवत्कर्मचोदितः।
अण्डं ददर्श लोकेशस्त्रिधा चैवं द्विसप्तधा ॥२६ ॥

विज्ञाय निजमाहात्म्यं यदा यातः सगर्वताम्।
अस्मीति प्रत्ययं लब्ध्वा रजसा कलुषीकृतः ॥२७ ॥

जगत्सर्गार्थमुद्युक्तः करोमीत्यभिमानयुक्।
ससर्ज प्रथमं पापं तमोमोहादिकं ह्यजः ॥२८ ॥

दृष्ट्वा पापीयसीं योनिं सखेदं प्रार्थयत् प्रभुम्।
प्रणष्टसत्त्वधर्मोऽहं न मेऽस्ति गतिरच्युत!॥२९ ॥

---

१. अधोरेखायुक्त एकोनविंशतिविंशतिश्लोकस्थभागः ख-मातृकायामेवोपलभ्यते।
२. पतश्चक्रे इति क।

पाहि पाहीत्यभीक्ष्णं स अत्यार्तश्च यदाऽभवत्।
तदा शान्तरजो ब्रह्मा सत्त्वैकगतमानसः॥३०॥

धाता सर्गार्थमुद्युक्तो वासुदेवसमीरया।
भगवद्ध्यानपूतेन मनसाऽन्यत् ततोऽसृजत्॥३१॥

सनकं च सनन्दश्च सनातनमथात्मभूः।
सनत्कुमारञ्च मुनीन् वासुदेवैकमानसान्॥३२॥

तान् जगाद स्वभूः पुत्रान् प्रजाः सृजत पुत्रकाः।
तन्नैच्छन् मोक्षधर्माणो निष्क्रिया ऊर्ध्वरेतसः॥३३॥

स्वसुतैरेवमाख्यातः प्रत्याख्यातश्चतुर्मुखः।
क्रुद्धः पुत्रान् नियन्तुं स प्रायतत पितामहः॥३४॥

क्रोधात् तामसवेगात्मा ससर्ज नीललोहितः(तम्?)।
कुमारो रुरुदे सद्यो देवतानां तु पूर्वजः॥३५॥

माऽरोदीस्त्वं सुरश्रेष्ठ! रुद्राख्यो रोदनाद् भुवि।
प्रथिष्ये व्याहरन् ब्रह्मा स्थानानि दत्तवान् प्रभुः॥३६॥

नामानि शक्तियुक्तानि रुद्राय चाब्जसम्भवः।
मन्युर्मनुर्महान् सोमो महान् शिव ऋतध्वजः॥३७॥

उग्ररेता भवः कालो वामदेवो धृतव्रतः।
[१]धीर्वृत्तिरुशनोमा च नियुत्सर्पिरिलाम्बिका॥३८॥

इरावती सुधा दीक्षा रुद्राण्यो लोकमातरः।
क्रोधात्मिका प्रजा तस्य जाता दुःखप्रदा भुवि॥३९॥

विधाता तं तु संरुद्ध्यादिदेश तपसे तदा[२]।
तस्मादपि प्रजासृष्टिर्न जाता तु सुखावहा॥४०॥

---

१. धीवृत्ति इति क।
२. सदा इति क।

पुनर्विचिन्तयन् ब्रह्मा लोकसन्तानहेतुकः।
विधिरुत्पादयामास दशपुत्रान् सुखावहान्॥४१॥

मरीचिरत्र्यङ्गिरसः पुलस्त्यः पुलहः क्रतुः।
भृगुर्वशिष्ठो[१] दक्षश्च दशमस्त्वञ्च नारद!॥४२॥

उत्सङ्गात् त्वां ससर्जासौ दक्षोऽङ्गुष्ठात् स्वयंभुवः।
प्राणाद् वसिष्ठः सञ्जज्ञे भृगुस्त्वचि करात्क्रतुः॥४३॥

पुलहो नाभितो जातः पुलस्त्यः श्रोत्रयोर्ऋषिः।
अङ्गिरा मुखतोऽक्ष्णोऽत्रिर्मरीचिर्मनसोऽभवत्॥४४॥

प्रजापतय एते हि सृष्टिसर्गस्य वर्धकाः।
ऋषीणां भूरिवीर्याणामपि सृष्टिर्यथेच्छया॥४५॥

नैव वृद्धिं गता तावत् चिन्तयामास नारद!।
अहो अद्भुतमेतन्मे श्रमशीलस्य नित्यदा॥४६॥

न वर्धन्ते प्रजा नूनं दैवमत्र विघातकम्।
एवं विचारयतस्तस्य कस्य[२] रूपमभूद् द्विधा॥४७॥

यत्कायमिति प्रख्यातं ततो मिथुनमागतम्।
यस्तु तत्र पुमान् योऽभून्मनुः स्वायम्भुवः स्वराट्॥४८॥

स्त्री याऽऽसीच्छतरूपाख्या महिष्यस्य महात्मनः।
तदा मिथुनधर्मेण प्रजा ह्येधाम्बभूविरे॥४९॥

चित्सृष्टिरेवमाख्याता तस्याः पारं न विद्यते।
देवताः किन्नरा नागा दैत्याश्च दानव(वा?)स्तथा॥५०॥

पशवः पक्षिणश्चैव लताः सरीसृपा द्रुमाः।
मनुष्या ऋषयो जाता विवृद्धमभवद् जगत्॥५१॥

---

१. भृगुर्वसिष्ठो इति ख।
२. कः=ब्रह्मा, तस्येत्यर्थः।

शुद्धा शुद्धेतरा सृष्टिराख्यातैवं हि नारद!।
शुद्धेतराऽपि तत्रैवं चिदचिद्भेदतः श्रुता ॥५२॥

अध्यात्माऽधिभूतं विप्र तथाऽधिदैवमुच्यते।
सृष्टिस्थानि हि तत्त्वानि विभज्यन्तेऽधिपूर्वके ॥५३॥

अध्यात्मं परमं ब्रह्म विद्धि साधारणं सदा।
ज्ञातव्यमधिदैवञ्च मूर्तिमान् ईश्वरो मुने! ॥५४॥

स्वभावो जीवजन्तूनां स्थूलसूक्ष्मपरात्मकः।
विज्ञेयो ह्यधिभूताख्यः सामान्यं सृष्टिमात्रग(गम्?) ॥५५॥

एतत् सर्वत्र विज्ञेयं तत्त्वाभ्यासार्थमिच्छुभिः।
सविशेषमथो वक्ष्ये शृणुष्वैकाग्रमानसः ॥५६॥

निस्तरङ्गं परं ब्रह्म शब्दब्रह्माक्षरं महत्।
अध्यात्मं द्विज! विज्ञेयं मन्त्रा ॐकारपूर्वकाः ॥५७॥

अधिदैवत्यभावेन तस्मिन्नेव सदा स्थिताः।
अधिभूतं तु बोद्धव्यं मातृकाः स्थूलदर्शनाः ॥५८॥

गुणषट्कयुतं दिव्यं शान्तमध्यात्मसंज्ञकम्।
ब्रह्म परं हि विज्ञेयं यत् परात्परतः स्थितम् ॥५९॥

उदितं[1] चातुरात्म्यस्य मूलं तदधिदैवतम्।
शक्तिव्यूहमसङ्ख्यं यन्निगमेषु वदन्ति तत् ॥६०॥

तद्विशेषस्वरूपं तु विज्ञेयमाधिभौतिकम्।
प्राणशक्तिस्तथाऽध्यात्मं पुरुषश्चाधिदैवतः ॥६१॥

अधिभूतमपानाद्या अनला[2] विश्वधारकाः।
अध्यात्मं तु महत्तत्त्वं वासुदेवोऽधिदैवतः(तम्?) ॥६२॥

---

१. शान्तोदितवासुदेवः इति।
२. अनिलाः इति ख। तदेवोचितम्, अपानादिप्राणानां निरूपणात्।

सत्त्वादित्रितयं ब्रह्मन् विषयमाधिभौतिकम्।
इच्छाशक्तेः परत्वेन स्थितं ज्ञानबलद्वयम्॥६३॥

अध्यात्मं तु परिज्ञेयं परः सङ्कर्षणः प्रभुः।
अधिदैवत्यरूपेण स्थितोऽनन्तः सनातनः॥६४॥

त्रिविधोऽसावहङ्कारो ह्यधिभूतमवेहि तत्।
द्वयमैश्वर्यवीर्याख्यमध्यात्मं विद्धि नारद!॥६५॥

क्रियाशक्तेस्तु दैवत्यं प्रद्युम्नः परमेश्वरः।
अधिभूतं मतिर्ज्ञेयाऽष्टधा लोकोपकारिका॥६६॥

पञ्चानामिन्द्रियाणां तु मनोऽध्यात्ममुदाहृतम्।
कालात्मदैवतं विद्धि ह्यधिभूतं सुखादिकम्॥६७॥

पृथक्त्वेनेन्द्रियाण्याहुः स्वयमध्यात्मसञ्ज्ञया।
दिगादिदेवतास्तेषां शब्दाद्या अधिदेवताः॥६८॥

अध्यात्मादित्रयं ज्ञात्वा विविच्य च पृथक् पृथक्।
त्यक्त्वा[१] भूतात्मसंबुद्धिमुपास्य दैवतं परम्॥६९॥

आत्मन्येव यः सन्तुष्टस्तस्य कार्यं न विद्यते।
देवर्षे! संशयाः छिन्नास्तवात्र ब्रूहि साम्प्रतम्॥७०॥

**नारदः**

वैराजपुरुषे देहे ख्याता लोकाश्चतुर्दश।
तत्र के सन्ति देवेश! शुद्धाः शुद्धेतरा नु किम्(के?)॥७१॥

नास्ति ते किञ्चिदज्ञातं तत्प्रदर्शय लाङ्गलिन्!।

**सङ्कर्षणः**

भूर्लोको मृत्युलोकस्तु यत्र वसन्ति मानवाः॥७२॥

---

१. इत आरभ्य ७३ श्लोकपर्यन्तं ख-मातृकायामस्पष्टम्।

भुवस्तु द्वितीयो लोको मलिनास्तत्र देवताः।
तृतीये नाकपृष्ठे तु स्वराख्ये पाकशासनः॥७३॥

राजसाः सन्ति देवास्तु चतुर्थे ह्यर्यमादयः।
पितरः संवसन्त्यत्र पञ्चमे जननामके॥७४॥

तपोनाम्नि तथा षष्ठे भृग्वादय ऋषिगणाः।
सप्तमे ब्रह्मलोके तु चतुर्मुखः सनातनः॥७५॥

मृत्युलोकादधस्तात् तु सप्तलोकास्तपोनिधे!।
अतले वितले चैव सुतले दितिपुत्रकाः॥७६॥

तलातले महातले रसातलेऽथ नारद!।
निशाचरा वसन्त्यत्र घोरा दुर्दर्शनास्तथा[१]॥७७॥

अन्तिमे सप्तमे लोके सहस्रफणिमण्डितः।
साक्षादनन्तरूपेण पातालशयनः प्रभुः॥७८॥

नागैः सह वसत्यत्र प्रभुः ब्रह्माण्डधारकः।
एषां लोकनिवासिनामुत्पत्तिरपि नारद!॥७९॥

साक्षाच्चतुर्मुखाज्जाता पारम्पर्येण वा मुने!।
इत्थं सृष्टिः समाख्याता ज्ञात्वा मुक्तिमवाप्स्यसि॥८०॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां ज्ञानरात्रे
शुद्धेतरसृष्टौ चित्सृष्टिनिरूपणनामा
सप्तमोऽध्यायः।

---

१. घोरार्दुर्दर्शनास्तथा इति क ।

## ज्ञानरात्रेऽष्टमोऽध्यायः

**सङ्कर्षणः**

सञ्चराद् विपरीतस्तु विज्ञेयः प्रतिसञ्चरः।
नित्यो निमित्तीभूतश्च प्राकृताख्यो लयस्तथा॥ १॥

आत्यन्तिकाभिधो ज्ञानाल्लयः प्रोक्तो मनीषिभिः।
विकुर्वन्ति इमे देहा नित्यं यत्परिणामिनः॥ २॥

यत्र क्रमेण दृश्यन्ते बाल्यतारुण्यपूर्वकम्।
सूक्ष्मत्वान्नेक्ष्यते सद्यो गतिर्दीपार्चिषो यथा॥ ३॥

पर्णवृद्धिर्यथा वृक्षे विलोक्यते न वित्तमैः।
तल्लयो नित्यरूपेण शास्त्रज्ञैः समुदाहृतः॥ ४॥

निशानिमित्तमालम्ब्य विश्वस्रष्ट(ष्टु?)र्भवेन्मुने।
नैमित्तिकः सः विज्ञेयो लयो दैनन्दिनस्तथा॥ ५॥

वैराजस्यायुषः कालो द्विपरार्धावधिः स्मृतः।
सहस्रयुगपर्यन्तं दिनं रात्रिश्च तावती॥ ६॥

तस्य यावद् दिनं तावत् त्रिलोक्या वर्तते स्थितिः।
एकस्मिन्वासरे तस्य चतुर्दश चतुर्दश॥ ७॥

इन्द्रा भवन्ति मनवो जगतः स्थितिकारकाः।
त्रैलोक्यं नाशमायाति तद्रात्रौ प्रलयेऽखिलम्॥ ८॥

लयो नैमित्तिकः प्रोक्तो निमित्तान्निशदिनयोः।
द्विपरार्धावसाने तु विराड्लोकाश्चतुर्दश॥ ९॥

प्रलयं यान्ति तत्त्वानि महदादीन्यपि नारद!।
वासुदेवेच्छया ब्रह्मन् गुणाः यान्ति च साम्यताम्॥१०॥

प्राकृतप्रलयो ज्ञेयः प्रकृतौ लीनहेतुना।
शरीरे आत्मबुद्धिर्या मनः प्राणेन्द्रियादिषु॥११॥

त्यक्त्वाऽऽत्मन्येव यत्स्थैर्यं लय आत्यन्तिको विदुः।
परमात्मन्येव यो रक्तो विरक्तोऽपरमात्मनि॥१२॥

लय आत्यन्तिकः सिद्धस्तस्य सिद्धस्य नारद!।
ज्ञात्वैवं नश्वरं सर्वं शुद्धेतरं हि चिज्जडम्॥१३॥

परिवर्तनशीलञ्च ततो वैराग्यमाप्नुयात्।
कृत्वैकान्तिकः स्नेहः वासुदेवे परात्मनि॥१४॥

श्रुत्वा पवित्रशास्त्राणि पञ्चरात्राभिधानि तु।
माहात्म्यं श्रीहरे[1]र्ज्ञात्वा स्नेहे वृद्धिमवाप्नुयात्॥१५॥

मोक्षैकनिरतानां तु नराणां लक्ष्यसिद्धये।
नास्ति श्रेष्ठमितः किञ्चिद् भगवद्यागमन्तरा॥१६॥

भोगक्षेत्रं तु लोकोऽयं विषयासक्तचेतसाम्।
सुखदुःखगुणोपेतं मोहमायामयं दृढम्॥१७॥

सत्त्वादित्रिगुणैर्युक्तं कर्मिणां कर्मबन्धकम्।
त्रैगुण्याः विषयाः सर्वे खानि त्रैगुण्यवन्ति च॥१८॥

मनोबुद्धिरहङ्कारः प्रकृतेः परिवर्तनम्।
ग्राह्यं ग्राहकक्षेत्राणि क्रिया च ग्रहणात्मिका॥१९॥

त्रिगुणाः दुःखरूपाश्च भृशं संसृतिकारकाः।
अज्ञानात् तु तदासक्तिर्वर्धते हि क्षणं क्षणम्॥२०॥

---

१. श्रीपते इति ख।

चिदात्मैकस्तु तद्भिन्नो निस्त्रैगुण्यो महामुने!।
वासुदेवः प्रभुः शुद्धो मायातीतो(तः?) सनातनः ॥२१॥

सृष्टिसर्गादिदं ज्ञात्वा विमृश्य च पुनः पुनः।
साक्षात्काराल्लयं याति दुःखं प्राकृतिकं खलु ॥२२॥

हेयभावनया तस्मान्नित्यं चिन्त्यं पुनः पुनः।
ज्ञानमेव परं तत्त्वं ज्ञानं परमसाधनम् ॥२३॥

ज्ञानमेव परो देवो नित्यं रक्षति प्राणिनम्।
वासुदेवात्मकं ज्ञानं शुद्धसृष्ट्यात्मकं तथा ॥२४॥

व्यूहाख्यं विभवाख्यञ्च मोक्षदं कर्मिणां शुभम्।
भजनीयमिदं तत्त्वं कीर्तितव्यं तथा मुदा ॥२५॥

जपनीयमहोरात्रं ज्ञानं मन्त्रात्मकं वशिन्।
चिन्तनीयं परंब्रह्म मन्तव्यञ्चोपपत्तिभिः ॥२६॥

प्राप्याचार्यं गुणैर्युक्तं शुद्धं शुद्धेतरं विदा।
ज्ञात्वेतरं परित्यज्य रसभिन्नं फलं यथा[१] ॥२७॥

परित्यजति लोकोऽयं स्वीकरोति रसादिकम्।
रसो वै परमात्माख्यस्तत्स्वरूपं रसात्मकम् ॥२८॥

आनन्दं तत्परिग्राह्यं चित्तं तस्मिन् परिष्वजेत्।
एतदेव हि ज्ञानस्य फलं शास्त्रे प्रकीर्तितम् ॥२९॥

तादृशां कर्मिणां बन्धः सद्यः संसारजालकः।
भवति शिथिलः विप्र! तस्मिन् शङ्का न विद्यते ॥३०॥

इत्थं ज्ञानं मया ब्रह्मन् सृष्टिरूपं तपोनिधे!।
सिद्ध्यर्थं यत्नशीलानामात्यन्तिकविमुक्तये ॥३१॥

---

१. फलाद्यथा इति क ।

कथितं विस्तरात् सर्वं किमन्यच्छ्रोतुमिच्छसि।
वासुदेवेच्छया तुभ्यं वक्ष्यामि हितकाम्यया॥३२॥

त्वमेवासि हरेर्भक्तः त्रिलोक्यां चरति(सि?) भृशम्।
पाञ्चरात्रिकाज्ज्ञानाद् जनानां मार्गदर्शकः॥३३॥

त्वादृशाय सुपात्राय दत्तं ज्ञानं महाफलम्।
सर्वलोकहितार्थाय भवति तद्धि निश्चितम्॥३४॥

तस्मात् पृच्छ यदाख्येयमनाख्येयञ्च नारद!।
सर्वं त्वामभिधास्यामि प्रसन्नोऽस्मि विदांवर!॥३५॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां ज्ञानरात्रे
प्रलयवर्णन-ज्ञानमाहात्म्योपसंहारनामा
अष्टमोऽध्यायः।

**इति ज्ञानरात्रं समाप्तम्।**



# मन्त्ररात्रम्

## प्रथमोऽध्याय:

**( नारद उवाच )**

भगवन् देवदेवेश! नमोऽस्तु करुणानिधे!।
वर्णितं सृष्टिरूपं यद् वासुदेवात्मकं यश:॥ १॥

प्रोक्तं जप्यश्चिन्तनीयो भजनीयश्च लाङ्गलिन्!।
वासुदेव: परंब्रह्म मन्त्रेणेति पुन: पुन:॥ २॥

त्वादृशेभ्यो महात्मभ्य: श्रुतं मन्त्रोऽस्ति मोक्षद:।
सद्‌गुरुमुखत: प्राप्तो नाऽत्र कार्या विचारणा॥ ३॥

को मन्त्रो जपनीयो मे कश्चिन्त्यश्च मुमुक्षुभि:।
मन्त्रोत्पत्ति: कुत: स्वामिन्! केन जप्यो विदांवर!॥ ४॥

उपयोगश्च कस्तस्य फलं प्राप्यते कीदृशम्।
कियत्काले फलप्राप्ति: तत्सर्वं वद विस्तरात्॥ ५॥

तृप्तिर्मे भगवन्नास्ति[१] श्रोतुं कामयते मन:।
विदितं त्वादृशाणां(नां?) मे दुर्लभस्तु समागम:॥ ६॥

**सङ्कर्षण उवाच**

मननात् त्रायते सद्य इति वै मन्त्रलक्षणम्।
ज्ञानानां परमं ज्ञानं मन्त्रज्ञानं प्रचक्षते॥ ७॥

---

१. इत आरभ्य विंशतिश्लोकपर्यन्तो भाग: ख-मातृकायां नास्ति।

संसारान्मोचयन्ति ये योजयन्ति परे पदे।
गुप्तार्थान् बोधयन्त्येवं मन्त्रा वै परदेवताः॥ ८॥

सहस्रौघं तु विघ्नानां परेण प्रेरितं भृशम्।
प्रहरन्त्यनिशं मन्त्रा मान्त्रिकाणां भयावहम्॥ ९॥

विघ्नजालानि सर्वेषां भस्मीकुर्वन्ति नारद!।
यथाग्नेर्दाहकत्वं तु वारिणा शाम्यते मुने!॥१०॥

तपोहोमसमाध्यादि-साधनानां शतं शतम्।
कदाऽपि मन्त्रजापस्य कलां नार्हति षोडशीम्॥११॥

मन्त्रमूलं जगत्प्रोक्तं मन्त्रमूलाः क्रियास्तथा।
मन्त्रमूलस्तु भगवान् विष्णुर्मन्त्रमयो मुने!॥१२॥

वासुदेवान्मया यद् यद् मन्त्रविषयकं श्रुतम्।
तत्सर्वमभिधास्यामि सावधानतया शृणु॥१३॥

विवेकदं परं शास्त्रं ब्रह्मोपनिषदं महत्।
दिव्यमन्त्रगणोपेतं मोक्षैकफललक्षणम्॥१४॥

अनादिनिधनं ब्रह्म वासुदेवात्मकं महः।
शब्दतोऽर्थतश्चैव कारुण्याद्विश्वमूर्तिकम्॥१५॥

परिणमत्यशेषेण स्वशक्त्या द्विजपुङ्गव!।
अर्थसृष्टिर्मया[1] ख्याता शुद्धा शुद्धेतरा तथा॥१६॥

परब्रह्मात्मिका(कां?) ब्रह्मन्! शब्दसृष्टिमतः शृणु।
वेद्यवेदकनिर्मुक्तमच्युतं ब्रह्म शाश्वतम्॥१७॥

अहमित्येकमद्वैतं स्वरूपज्योतिरात्मकम्।
चिन्मयं परचिद्रूपं किरणायुतसंकुलम्॥१८॥

---

१. अर्थसृष्टिमया इति क।

तच्छब्दब्रह्मभावेन स्वशक्त्या स्वयमेव हि।
मुक्तयेऽखिलतत्त्वानामुदेति परमेश्वरः॥१९॥

स्वरूपज्योतिषस्तस्य शक्तिर्नादात्मिका शुभा।
वाचामगोचराऽचिन्त्या सूक्ष्मा या वासुदेवात्मिका॥२०॥

ब्रह्मरुद्रादिदेवानामगम्या सूक्ष्मतावधिः।
आदौ वैराजशिरसि सहस्रदलपङ्कजे॥२१॥

अनिरुद्धात्मके[1] विप्र! प्रविशति महेश्वरी।
अजस्रवृत्तिर्या शक्तिः सूक्ष्मत्वान्नोपलभ्यते॥२२॥

व्यजनाद् वायुरिव स्वनिमित्तात् प्रतीयते।
सा स्फुरन्ती महासत्ता देशकालाविशेषिणी[2]॥२३॥

सैषा सारतया प्रोक्ता हृदयं परमेष्ठिनः।
अविभागा परा वाणी सर्वतः संहृतक्रमा॥२४॥

संकीर्णापि महाशक्तिः नित्यमागन्तुकैर्मलैः।
सुवर्णमिव लोकेऽस्मिन् नात्यन्तमभिभूयते॥२५॥

सुषुम्णावर्त्मना सद्यो मूलाधारमवाप्य सा।
व्याप्योर्ध्वं ववृधे तस्मादग्निर्यथा समीरणात्॥२६॥

महाप्राणेन संयुक्ता भारती साऽमृता कला।
परत्वात् सा परा नाम्ना प्रसिद्धाऽभूद् महीतले॥२७॥

त्रिगुणा साम्यमापन्ना प्रकृतिः सैव गीयते।
नाभिकन्दमवाप्नोति देवेरितेन वायुना॥२८॥

नाभिकन्दमधोमुखं कदलीकोशवत्स्थितम्।
तयैवाभूदूर्ध्वमुखं व्याप्ता तं सा तु वाक्प्रसूः॥२९॥

---

१. अनिरुद्धात्मिके इति क।
२. कालविशेषिणी इति क।

त्रिगुणविषमावस्था महत्तत्वात्मिका मुने!।
बीजभावस्थिता विश्वं शब्दाख्यं स्फुटने क्षमा॥३०॥

इच्छाशक्तिर्भगवतः पश्यन्ती वागुदीरिता।
तेजःप्रवाहरूपा सा नाभिकन्दात् पुनश्च वाक्॥३१॥

सम्प्राप्य हृदयाकाशं मध्यमाख्यामवाप सा।
प्राणेनाप्यायिता वाणी क्रमरूपा सनातनी॥३२॥

प्राणवृत्तिमतिक्रान्ता ज्ञानशक्त्यात्मिका प्रभोः।
नाभिहृन्मध्यजत्वात् सा मध्यमेत्युच्यते बुधैः॥३३॥

प्रेरिता वायुना सद्यो ब्राह्मी सङ्गच्छते पुनः।
सम्प्राप्य कण्ठदेशं वाग् अभिव्यक्ता प्रजायते॥३४॥

अर्धमात्रा मकारश्चाप्युकारोऽकार इत्यमी।
ताभ्यो वर्णाः समुत्पन्ना द्वापञ्चाशन्मुनीश्वर!॥३५॥

स्फुटार्थावभासा सा वैखरीति प्रचक्षते।
वासुदेवक्रियाशक्तिः शब्दसृष्टिप्रसूः शुभा॥३६॥

मातृकेति समाख्याता परस्तेजःसमन्विता।
तया व्याप्तमिदं विश्वं समस्तभुवनात्मकम्॥३७॥

मन्त्राणां मातृभूता सा स्वपदाकारभेदिता।
सर्जनेऽनिरुद्धरूपा सा स्थितौ प्रद्युम्नरूपिणी॥३८॥

प्रलये सङ्कर्षणाख्येन मयाऽधिष्ठीयते मुने!
वाग्वेदमण्डलं व्याप्ता परमानन्दरूपिणी॥३९॥

प्रणवः प्रथमं जातो वर्णान् वच्मि तदुद्भवान्।
स्वराः षोडश[1] कवर्गः चटवर्गौ तपौ[2] तथा॥४०॥

---

१. अ-आ-इ-ई-उ-ऊ-ऋ-ॠ-लृ-लॄ-ए-ऐ-ओ-औ-अं-अः इति षोडश स्वराः।

२ क-च-ट-त-पवर्गाः पञ्चविंशतिव्यञ्जनानि स्पर्शसञ्ज्ञकानीत्यर्थः।

[१]यशवर्गौ तु विज्ञेयौ उत्पन्नौ प्रणवान्मुने!
प्रणवः परमात्माख्यो मातृकाद्यो महाक्षरः ॥४१॥

तस्माद् वर्णास्त्रयो जाता अ-उ-म इति संज्ञकाः।
विष्णु-ब्रह्म-शिवात्मानस्तस्मादन्येऽवधारय ॥४२॥

अकारात्तु स्वरा जाता उकारात् स्पर्शसञ्ज्ञकाः।
मकाराच्छेषवर्णाश्च मातृकोत्पत्तिरागमे ॥४३॥

कथिता तन्मया ख्याता वक्ष्येऽधिष्ठानरूपिणः।
सूर्यसोमात्मकाः सर्वे स्वराः प्रोक्ताः परंतप! ॥४४॥

कवर्ग(गः?)पञ्चभूतात्मा[२] चवर्गः पञ्च [३]खात्मकः।
टवर्गे विषयाः ज्ञेयाः शब्दस्पर्शादिसञ्ज्ञकाः[४] ॥४५॥

कर्मेन्द्रियाणि[५] तवर्गे पफादाविन्द्रियक्रियाः[६]।
चतुर्वेदात्मको[७] वर्गो यकारस्यास्ति नारद! ॥४६॥

[८]चतुर्व्यूहस्वरूपेण [९]शषहाश्चावधारय।
चत्वारिंशन्नवाधिकं समेत्य वर्णका मुने! ॥४७॥

अ-उ-म कारणात्मानो द्वापञ्चाशदथाक्षराः।
प्रणवः सर्ववर्णात्मा वासुदेवात्मको विभुः ॥४८॥

---

१. य-र-ल-व इति यवर्गः, श-ष-स-ह इति शवर्गः।
२. कवर्गः पृथिवी-जल-तेजः-वायु-आकाशात्मकः।
३. चवर्गः श्रोत्र-त्वक्-चक्षुः-रसना-घ्राणेति ज्ञानेन्द्रियात्मकः।
४. शब्द-स्पर्श-रूप-रस-गन्धाख्या विषयाः।
५. वाक्-पाणि-पाद-पायु-उपस्थाख्यानि कर्मेन्द्रियाणि।
६. श्रवण-स्पर्शन-दर्शन-स्वादन-गन्धनाख्याः क्रियाः।
७. ऋग्-साम-यजुः-अथर्वात्मकः।
८. वासुदेव-सङ्कर्षण-प्रद्युम्न-अनिरुद्धरूपेण।
९. श-ष-स-हाश्चेति विज्ञेयम्।

मेरुरूपात्मना वेद्य: शब्दातीतो निरञ्जन:।
मातृकाणां स्वरूपं यन्मया प्रोक्तं सनातनम् ॥४९॥

आध्यात्मिकं त्रिकं ब्रह्मन् यस्मिन् विश्वं समन्वितम्।
आगमा: निगमाश्चैव यत्किञ्चित् शब्दरूपकम् ॥५०॥।

तत्सर्वं मातृकाजातं लीनं तस्याञ्च जायते।
अकार: सर्ववर्णाग्रो हकारोऽन्त्यस्तु नारद! ॥५१॥

वर्णमाला मुमुक्षूणां श्रेयसे कथिता मया।
परा भू: जन्म यस्यास्तु पश्यन्त्यङ्कुररूपिणी ॥५२॥

मध्यमा द्रु: फलाढ्यस्तु वैखर्यात्म[1] जयत्यसौ।
शब्दब्रह्म मया प्रोक्तं निशम्यामृतमाप्यते ॥५३॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां
मन्त्ररात्रे शब्दोत्पत्तिकथननामा
प्रथमोऽध्याय:।

---

१. वैखर्यात्म३३ इति ख।

## मन्त्ररात्रे द्वितीयोऽध्यायः

वर्णोत्पत्तिर्मया ब्रह्मन्! गदिताऽमृतरूपिणी।
वर्णयाम्यथ तन्मूल(लं?) वासुदेवं[1] परं स्थितम्॥ १॥

स्वात्मैकनिष्ठं चिद्रूपं भावाभावपरिष्कृतम्।
स्वसंवेदनसंवेद्यं प्रकृत्यातीतगोचरम्॥ २॥

इदं योनिः स्मृता विप्र! वर्णानां प्रत्ययात्मिका।
तस्मिन् ओताश्च प्रोताश्च सूत्रे मणिगणा इव॥ ३॥

ते वर्णा मन्त्ररूपेण सबाह्याभ्यन्तरोदिताः।
नैष्कालिकपदावस्थाः करणानीव देहिनाम्॥ ४॥

प्रयुक्ताः सर्वकालेषु सिद्ध्यन्ते वीर्ययोगतः।
मन्त्रोद्धारमथो वक्ष्ये वासुदेवेन प्रेरितः॥ ५॥

वर्णकलाध्वतत्त्वाख्यं मार्गं प्रापयितुं क्षमम्।
साधनं मन्त्ररूपं तत् साधकानाञ्च मुक्तिदम्॥ ६॥

सर्वतत्त्वार्थपारज्ञः सर्वविद्याविशारदः।
शुचिर्नियमितः कर्मी पञ्चकालपरायणः॥ ७॥

षट्कर्मनिरतः शान्तः पञ्चरात्रार्थविन्मुनिः।
ब्रह्मविद् ब्रह्मचर्यस्थः स्वदारनिरतोऽथवा॥ ८॥

---

१. वासुदेवः इति क।

मन्त्रोद्धर्तुं क्रियाशीलो वासुदेवैकमानसः।
ब्राह्मे मुहूर्ते उत्थाय कृत्वा नित्यविधिं वशी॥ ९॥

प्रशस्ते विजने गुप्ते गन्धलिप्ते धरातले।
सुधूपितेऽर्घ्यपुष्पाढ्ये समासीनः शुचिस्मितः॥१०॥

चतुरस्रं सुवृत्तं[1] वा द्विहस्तं हस्तमेव वा।
सुसमं मातृकापीठं कृत्वा चक्रं प्रसाध्य च॥११॥

यस्मिन् प्रतिष्ठितं विश्वमाब्रह्मभुवनान्तिकम्।
येनोदितेन जगतः प्रभवः शब्दरूपिणः॥१२॥

स्वात्मन्युपरते यस्मिन् प्रलयश्च प्रजायते।
सबाह्याभ्यन्तरं तत्त्वं प्रेरकं सूर्यचन्द्रयोः॥१३॥

नित्योदितं यदक्षस्थं वर्णमीश्वरवाचकम्।
यत्र स्थानविभागेन वागात्मा भगवान् स्थितः॥१४॥

अकाराद्यो विसर्गान्तः सौरश्चान्द्र(न्द्रः?) कलागणः।
ह्रस्वदीर्घविभागेन नाभौ यत्र द्विरष्टकः॥१५॥

कादिभान्तोऽप्यरान्तःस्थः भूतेन्द्रियादिसञ्चयः।
मकारादिर्हकारान्तो व्यूहवेदक्रियात्मकः॥१६॥

नेमिगो देहभृत् कालः नारद! नवलक्षणः।
संस्थितो वर्णचक्रेऽस्मिन् यत्र प्रधिगणः स्वयम्॥१७॥

प्रणवात् प्रथमं जाता मार्तण्डायुतसन्निभाः।
कारणाख्याश्च वर्णानामकारोकारमात्मकाः॥१८॥

अर्धमात्रा परस्था च चत्वारो लोकसंस्थिताः।
आमध्यात् प्रधिपर्यन्तां[2] नमोऽन्तां वर्णसन्ततिम्॥१९॥

---

१. सुवृत्त इति क।
२. प्रधिपर्यन्ता इति क।

उच्चार्यार्घ्यादिनाऽभ्यर्च्य विद्याबीजञ्च चक्रराट्।
ततः समुद्धरेन्मन्त्रान् परमात्मप्रचारकान्॥२०॥

शब्दार्थौ न पृथग्ज्ञेयौ[1] मन्त्रे प्राकृतिके यथा।
मन्त्ररूपेण सान्निध्यं करोति पुरुषोत्तमः॥२१॥

ओजो बलात्मना यद्वद् गन्धो द्रव्यात्मना तथा।
बीजं तरुस्वरूपेण समुद्रो बुद्बुदात्मना॥२२॥

एवमव्यपदेश्यायाः शक्तेः स्वे शक्तिदर्पणे।
स्थितिमादाय विश्वेशो हृदये भवसिद्धये॥२३॥

मन्त्ररूपां तनुं धत्ते सम्यगाराधनाय च।
यथा सर्वगतो वायुर्व्यजनेन महामते!॥२४॥

व्यक्तिमभ्येति भगवान् [2]आहूतस्तद्वदेव हि।
भावदर्पणसङ्क्रान्तं कृत्वा हृत्कमलात्तु वै॥२५॥

सन्निरुध्य बहिर्वेद्यां मन्त्रोच्चारावसानतः।
अथावतार्यो हृदयान्मन्त्रः सूर्यायुतप्रभः॥२६॥

कर्मणा मनसा वाचा तद्भेदानथ दर्शये।
शब्दब्रह्मविवर्तस्य मन्त्रस्य षड्गुणात्मनः॥२७॥

चिल्लक्षणस्य गुह्यस्य भेदो ज्ञेयश्चतुर्विधः।
क्वचिद्बीजं क्वचित्पिण्डं क्वचित्सञ्ज्ञा क्वचित्पदम्॥२८॥

तुर्यः सुषुप्तिः स्वप्नश्च जाग्रद्व्यूहादयो द्विज!।
शक्तिव्यक्तिमयत्वञ्च मन्त्राणामवधारय॥२९॥

पदसंज्ञकमन्त्रस्य जाग्रद्वृत्तिर्निरन्तरा।
एवं संज्ञात्मनः स्वप्नवृत्तेरेकत्वमस्ति हि॥३०॥

---

१. प्रथग्ज्ञेयौ इति क।
२. आहत इति क।

सुषुप्तिवृत्तिः पिण्डाख्यमन्त्रस्यैव महामुने!।
बीजात्मनस्तुर्यवृत्तेः शक्तिव्यक्तित्वमेव च॥३१॥

लक्षणानि च मन्त्राणां बीजपिण्डादिरूपिणाम्।
कथयाम्यशेषेण येन तज्ज्ञानमाप्नुयाः॥३२॥

एकद्विस्वरयुक्तत्वं व्यञ्जनोपेतमेव वै।
बीजं विज्ञेयं फलदं पिण्डो बह्वर्णो मन्त्रराट्॥३३॥

स्वरव्यञ्जनसंयोगी वाञ्छितार्थफलप्रदः।
अकाराकारवर्ज्यानां विसर्गबिन्दुसंयुजाम्॥३४॥

केवलाभ्यां तथाद्याभ्यां रहितानां च विद्धि वै।
बीजं पिण्डे स्वराणां तु मन्त्रत्वं बिन्दुना सह॥३५॥

स्वरेणैकेन युक्तस्य स्वरयुग्मान्वितस्य च।
सानुस्वारस्य बीजत्वं व्यञ्जनानाञ्च नारद!॥३६॥

कादयो यत्र मध्ये स्युः क्वचित्स्वरसमायुताः।
पिण्डमन्त्रः स विज्ञेयो भोगमोक्षफलप्रदः॥३७॥

रूढं सङ्केतरूपं यन्नाम संज्ञाऽथ कथ्यते।
नमःप्रणवसंयुक्तो मन्त्रो जप्यो यतात्मभिः॥३८॥

क्रिया-कारक-संयोग-स्तुतिसम्बोधलक्षणः।
बह्वक्षरो बहुपदः पदात्मा मन्त्र उच्यते॥३९॥

प्रणवः प्रथमं जातो बीजादि(दी?)नाञ्च कारणम्[1]।
तस्मात् प्रणवयुक्तत्वं मन्त्राणामुदितं सदा॥४०॥

बीजे पिण्डे च सञ्ज्ञायां पदे चैवमनुक्रमात्।
कारणकार्यभावत्वं मन्त्राणां परिकल्पयेत्॥४१॥

---

१. कारणः इति क-ख।

प्राप्तेज्यावसरे चैवं व्यवहारे यत्रकुत्रचित्।
मन्त्रोद्धारः सदा कार्यः[१] कार्यकारणयुग् द्विज!॥४२॥

सम्पन्नायाञ्च पूजायां यजने वा मुमुक्षुभिः।
कर्मिभिश्च लयो नित्यं स्मर्तव्यो मुनिपुङ्गव!॥४३॥

तप्तोपले जलं यद्वद् लीयते सत्वरं यथा।
प्रातः सूर्योदये चैवं किरणानां प्रसारणम्॥४४॥

सायं लयस्तथादित्ये मन्त्राणामवधार्यताम्।
बीजं बीजवतां ज्ञेयो जीवात्माऽन्यद् वपुस्तथा॥४५॥

यत्र बीजं न वा पिण्डं तत्र वै प्रणवादनु।
प्राग्स्वरः पदमन्त्रस्य स बीजः कल्प्यते सदा॥४६॥

तच्छिष्टं विग्रहं वर्णैस्तस्मादुत्थितमागमे।
केवलं यत्र वै बीजं पिण्डं वा पदवर्जितम्॥४७॥

तत्राकाराख्यवर्णस्य क्षेत्रज्ञत्वं विधीयते।
बीजे मन्त्रे दमावास! अकाररहिते पुनः॥४८॥

क्षेत्रज्ञः स्वर उद्दिष्टः केवले च स्वरे मुने!।
जीवः स्यात् प्रथमा मात्रा द्वितीयादितनुर्भवेत्॥४९॥

एकमात्रे तु जीवः स्यात् संस्कारो भूतलक्षणम्।
उच्चार्यमाणं क्षेत्रं स्यात् तदवेहि यतेन्द्रिय!॥५०॥

बीजपिण्डकमन्त्राणां क्षेत्रज्ञत्वात्तु नारद!।
व्यापकत्वं तु विज्ञेयं व्याप्यत्वं पदनामयोः॥५१॥

व्याप्यरूपेण भूलोक-भोगादारभ्य चाखिलाः।
सप्तलोकस्थभोगा ये तान् ददाति फलात्मकान्॥५२॥

---

१. मन्त्रोद्धारं सदा कार्य इति क।

क्षेत्रज्ञबीजपिण्डात्मा निरावरणलक्षणः।
फलसाधनकं ज्ञानं प्रददात्यमलात्मने ॥५३॥

सकामं कामनाहीनं फलं मन्त्रः प्रयच्छति।
निष्काममुत्तमं ज्ञेयमन्यद् ध्यममुच्यते ॥५४॥

साङ्गो मन्त्रः सदा जप्यः प्रणवेन युतस्तथा।
परव्यूहादिमन्त्राणामथोद्धारमवेहि मे ॥५५॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां
मन्त्ररात्रे[1] मातृकाचक्रादिवर्णननामा
द्वितीयोऽध्यायः।

---

१. ज्ञानरात्रे इति क।

## मन्त्ररात्रे तृतीयोऽध्यायः

परमन्त्रमहं वक्ष्ये मातृकाचक्रतो मुने!।
ज्ञात्वा ध्यात्वा तथा मत्वा परां सिद्धिं समाप्नुयात्॥ १॥

अक्षस्थमुद्धरेत् पूर्वं बीजादौ सर्वथा मनौ।
नाभेस्तु प्रथमं बीजं[1] नमःप्रणवसंयुतम्॥ २॥

पिण्डमन्त्रे तथाऽक्षस्थं न्यस्य मन्त्रं समुद्धरेत्।
नेम्यष्टमं समादाय द्वितीयादाद्यमुद्धरेत्॥ ३॥

नेमेस्तृतीयं तदनु द्वितीयश्च ततः परम्।
नाभेः पञ्चममादाय पिण्डो[2] ज्ञेयो नमोयुतः॥ ४॥

पदमन्त्रं महासिद्धमचिरान्मोक्षसिद्धिदम्।
वक्ष्यामि नारद! दिव्यं संसारार्णवतारकम्॥ ५॥

अक्षस्थमुद्धरेत् पूर्वं नेमिषष्ठमनन्तरम्।
नाभिद्वितीयेनाक्रान्तं द्वितीयमिदमक्षरम्॥ ६॥

द्वितीयं दशसङ्ख्याच्च तदधश्चाष्टमात् परम्।
नाभेस्त्रयोदशोपेतं तृतीयमिदमक्षरम्॥ ७॥

अथ द्वितीयं नवमान्नाभितुर्यादिना[3]ऽन्वितम्।
अष्टमारात् परं वर्णं केवलं विद्धि पञ्चमम्॥ ८॥

---

१. ॐ अं नमः इति परस्वरूपस्य बीजमन्त्रः।
२. ॐ स्यूं नमः इति परस्वरूपस्य पिण्डमन्त्रः।
३. नाभितुर्यस्यादिना ह्रस्व-इकारेणेत्यर्थः।

विज्ञानपदमादाय त्र्यक्षरं तदनन्तरम्।
आद्यमेकाशाद् वर्णं भिन्नं नाभ्यपरेण तु॥ ९॥

नेमेस्तृतीयवर्णश्च ततस्तदन्तः नियोजयेत्।
मन्त्राणां नवमं ह्येतद् दशमं मे निबोध वै॥१०॥

नाभिद्वितीयेनाक्रान्तं प्राग्वर्णं चाष्टमारगम्।
नेमेर्द्वितीयं तदनु नेमेरादाय चाष्टकम्॥११॥

तदुद्देशात् तृतीयञ्च स्थितं तत्पञ्चमोपरि।
त्रयोदशमिदं विद्धि नवमादपरं ततः॥१२॥

षष्ठस्य नेमिवर्णस्य चोर्ध्वे तत्त्रितयं न्यसेत्।
युक्तं नाभितृतीयेन ह्यथ षोडशमुच्यते॥१३॥

द्वितीयं दशमाद्वर्णान्नाभ्येकादशसंयुतम्।
तृतीयादपरं न्यस्य नाभिद्वादशमुद्धरेत्॥१४॥

परं चाष्टात् तथादाय नाभिप्रथमसंयुतम्।
दशमादपरं न्यस्य नेमिद्धितीयमुद्धरेत्॥१५॥

नाभिद्वितीयेनाक्रान्तमपरं दशमारगम्।
द्विः समुद्धृत्य तन्मध्ये नाभिप्रथमं न्यसेत्॥१६॥

नाभिनवममादाय नाभिद्वितीयसंयुतम्।
नेमेर्द्वितीयं तदनु सनमस्कमतः परम्॥१७॥

चतुर्विंशाक्षरो[1] मन्त्रः पदैः षड्भिरलङ्कृतः[2]।
तत्रैकार्णं पदं ज्ञान(नं?) चतुर्वर्णं[3] पदं बलम्॥१८॥

---

१. ॐ शान्तोदितविज्ञानप्राणाय सर्वदर्शिने चैतन्यानन्दाय नम इति परस्वरूपस्य चतुर्विंशत्यक्षरः पदमन्त्रः।

२. ख-मातृकायां इतः परं मध्ये पठितुमशक्या काश्चन पङ्क्तयः सन्ति।

३. चर्तुर्वर्ण इति क।

षडक्षरं चाप्यैश्वर्यं वीर्यं पञ्चाक्षरं परम्।
षड्वर्णं च पदं तेजः शाक्तं स्याद् द्व्यक्षरं परम्॥१९॥

निरङ्गश्च निराकारो मन्त्रो जप्यो न कुत्रचित्।
अङ्गानि परमन्त्रस्य तस्माद् वक्ष्यामि नारद!॥२०॥

हृदङ्गे तु नमो वाच्यं स्वाहा शिरसि कथ्यते।
शिखायै सर्वदा वौषट् हुं कवचाय पठ्यते॥२१॥

अस्त्रमन्त्रे च फडिति नेत्राभ्यां वौषडुच्यते।
सर्वत्र जातयोऽङ्गेषु वाच्याः साधनकर्मणि॥२२॥

मन्त्रेऽत्र प्रणवो जप्यो हृदङ्गे ज्ञानपूर्वकः।
ऐश्वर्यपूर्वकं शीर्ष्णं विज्ञानप्राणसंयुतम्॥२३॥

नमः शक्त्यै शिखाङ्गे तु शान्तोदितबलाय हुम्।
कवचाङ्गे विधातव्यं भवखेदप्रशान्तये॥२४॥

सर्वदर्शि च वीर्यञ्च अस्त्राङ्गे विद्धि नारद!।
तेजश्चैतन्यशब्दौ द्वौ नेत्राङ्गे चैव दृश्यते[1]॥२५॥

प्रत्यङ्गे(ङ्गं?) प्रणवो जप्यः प्रथमं सिद्धिमिच्छुभिः।
प्रत्येकस्मिन् चतुर्थ्यन्तं पदे जप्यश्च मान्त्रिकैः॥२६॥

परमन्त्रे च परा मुद्रा विधेया मन्त्रगोप्तृभिः।
परं व्याख्याय ब्रह्मज्ञ! माध्यमं परब्रह्मणः॥२७॥

[2]साधनमभिधास्यामि मन्त्रं बीजादिसंयुतम्।
अक्षस्थं प्रथमं न्यस्य नेमिनवममुद्धरेत्॥२८॥

---

१. दृश्येते इति ख। ॐ ज्ञानाय हृदयाय नमः। ॐ ऐश्वर्याय विज्ञानप्राणाय शिरसे स्वाहा। ॐ शक्त्यै नमः शिखायै वौषट्। ॐ बलाय शान्तोदिताय कवचाय हुम्। ॐ वीर्याय सर्वदर्शिने अस्त्राय फट्। ॐ तेजसे चैतन्यानन्दाय नेत्राभ्यां वौषट्। इति परस्वरूपस्याङ्गमन्त्राः।

२. साधनमिति-जीवमन्त्रापरपर्यायं साधनमन्त्रम् इत्यर्थः।

बीजं[1] तद् जीवमन्त्रस्य पिण्डं वक्ष्यामि नारद!।
द्वादशे प्रथमं न्यस्य नेमितृतीयसंयुतम् ॥२९॥

नाभेराद्येन चाक्रान्तं नेमेरष्टममुद्धरेत्।
तत्प्रथमं समादाय आद्यं नाभेः समन्वितम् ॥३०॥

स्वरद्वयं युतं बिन्दोः[2] पिण्डं[3] विद्धि फलप्रदम्।
मोक्षार्थिभिरनुष्ठेयं पदं वक्ष्ये ततो मुदा ॥३१॥

नेम्यन्त्यादपरं न्यस्य स्थितं तत्पञ्चमोपरि।
नाभिद्वितीयसंयुक्तम् अष्टमादपरं ततः ॥३२॥

नेमेः प्रथममादाय नाभ्यपरेण योजयेत्।
दशमादपरं विद्धि अष्टमादपरं तथा ॥३३॥

प्रथमात्प्रथमं तद्वत् तस्य षोडशसंयुतम्।
एकादशाक्रान्त![4] नाभ्याद्यञ्च पुनः ततः ॥३४॥

नेमेस्तृतीयवर्णस्य नाभ्याद्येन च योजयेत्।
नेम्याद्येन च संयुक्तं द्वितीयस्वरभूषितम् ॥३५॥

षष्ठो वर्णस्तु मन्त्रस्य ततोऽष्टमात् परं स्थितम्।
आद्यं नेमेस्तु संस्थाप्य नाभेः प्रथममुद्धरेत् ॥३६॥

ने नम इति संयोज्यं प्रणवाद्ये दशाक्षरे[5]।
प्रत्येकस्मिन् जपे तस्य फलमक्षय्यमश्नुते ॥३७॥

अङ्गानि हृदयादीनि परे प्रोक्तानि नारद!।
[6]मन्त्रशब्दविहीनानि ज्ञातव्यान्यत्र कर्मिणा ॥३८॥

---

१. ॐ हं इति साधनस्य बीजमन्त्रः।
२. ॐ व्रस्मं इति साधनस्य पिण्डमन्त्रः।
३. पिडं इति क।
४. आद्यमेकादशं क्रान्त! इति ख।
५. ॐ स्वात्मान्तःपरमात्मने नमः इति साधनस्य पदमन्त्रः।
६. परस्य पदमन्त्रघटकीभूतशब्दं वर्जयित्वा ॐ हृदयाय नमः इत्याद्यानि।

साधनं माध्यमं जीवं नाम्नाऽयं तु प्रकीर्तितः।
सर्वथा गोपनीयोऽयमपूर्वं कथितं मया ॥३९॥

परानुसन्धानमिच्छद्भिः जप्यो नान्येन कामिना।
जीवं व्याख्याय ब्रह्मज्ञ! व्यूहमन्त्रान् यथाक्रमम् ॥४०॥

निरूपयिष्यामि बीजादियुक्तान् साङ्गान् यतेन्द्रिय!।
अक्षस्थं नाभिपूर्वं च वर्णं यद् दशमात् परम् ॥४१॥

नेमिपूर्वमधो नाभेस्त्रयोदशसमन्वितम्।
द्वितीयं द्वादशाद् वर्णं द्वितीयात्परमं ततः ॥४२॥

पञ्चमञ्च बहिष्ठेभ्यस्त्रीनेतान् विद्धि केवलान्।
ततोऽष्टमाद् द्वितीयं तु नाभ्येकादशभेदितम् ॥४३॥

पञ्चार्णं वासुदेवाय पदञ्च तदनन्तरम्।
त्रयोदशाक्षरो[1] ह्येष प्रथमः परिकीर्तितः ॥४४॥

शक्तिस्तस्य महालक्ष्मी(क्ष्मीः?) तन्मन्त्रं शृणु नारद!।
अक्षस्थं नेमितुर्यञ्च प्रथमाद् द्वितीयं ततः ॥४५॥

पिण्डं बिन्दुयुत(तं?) ज्ञेयं बीजं वक्ष्यामि नारद!।
बहिष्ठादन्तिमं दद्यात् तृतीयेन समन्वितम् ॥४६॥

तुर्यं नाभेः समाक्रान्तं युक्तं पञ्चदशेन तु।
बीजमन्त्रोऽस्त्वयं ज्ञेयो नमो(मः?) प्रणवसंयुतः ॥४७॥

नेमिप्रथममादाय नाभेराद्येन योजयेत्।
चरमेणाथ तस्माच्च द्वितीयस्वरभूषितः(तम्?) ॥४८॥

नेमितुर्यमवस्थाप्य प्रथमात् प्रथमं ततः।
प्रागरात् प्रथमं योज्यं नेमिसप्तममुद्धरेत् ॥४९॥

---

१. ॐ अं नमो भगवते वासुदेवाय इति त्रयोदशाक्षरो व्यूहवासुदेवस्य बीजसहितः पदमन्त्रः।

केवलं नेमिपूर्वं तु तदपरं तदन्तिके।
द्वादशं नाभिवर्गस्य स्थाप्यं तदनु वै नमः ॥५०॥

प्रणवपूर्वको मन्त्रो[१] महालक्ष्म्याः स्वरूपकः।
सल्लक्ष्मीप्राप्तुकामेन भक्त्या जप्यस्तु सर्वथा ॥५१॥

क्रमात् सङ्कर्षणमनुं मम वक्ष्यामि नारद!।
अक्षस्थमक्षरं नाभेर्द्वितीयं तदनन्तरम् ॥५२॥

वासुदेवमनो रीत्या ततो दद्यात् पदद्वयम्।
नाम्ना मम चतुर्थ्यन्तो [२]मन्त्रोऽयमवधारय ॥५३॥

अराद्यं प्रथमं न्यस्य देव्यैः प्रणवपूर्वकम्।
भिन्नं नाभिद्वितीयेन ततः पञ्चदशं न्यसेत् ॥५४॥

प्रथमारं समादाय नेमितृतीयभूषितम्।
नाभितुर्यं युतं बिन्दोः पिण्डं बीजमनुक्रमात् ॥५५॥

प्रागरात् प्रथमं न्यस्य चतुर्थस्वरभूषितम्।
युक्तं नेमेस्तृतीयेनाथाष्टमादपरं ततः ॥५६॥

नेम्यपरं नियोक्तव्यं नाभिद्वादशमुद्धरेत्।
नमोऽन्तं मम [३]देव्यास्तु मनुरयं महामते! ॥५७॥

यशसोऽखण्डतां प्राप्तुं जप्योऽयं खलु रागतः।
व्यूहान्तर्गततृतीयस्य मन्त्रं वक्ष्यामि नारद! ॥५८॥

अथाऽत्र पञ्चदशमं नाभेरोङ्कारपूर्वकम्।
पदद्वयेन संयुज्य परमेकादशात् ततः ॥५९॥

---

१. ॐ लां,ह्रीं, महालक्ष्म्यै नमः इति लक्ष्म्याः पिण्डबीजसहितपदमन्त्रः।
२. ॐ आं नमो भगवते सङ्कर्षणाय इति सङ्कर्षणस्य पदमन्त्रः।
३. ॐ कां, क्रीं, कीर्त्यै नमः इति कीर्त्याः पिण्डबीजसहितपदमन्त्रः।

भिन्नं नेमिद्वितीयेन नाभेश्च प्रथमं ततः।
द्युम्नायेति ततो वाच्यं बीजयुक्तं[१] सदा जपेत् ॥६० ॥

प्रणवं प्राक् समादाय देव्या मन्त्रं[२] समुद्धरेत्।
सप्तमादपरं[३] योज्यं द्वैधम् आं रीं युतं मुने! ॥६१ ॥

पुनस्तदेव संयुज्य प्रथमस्वरभूषितम्।
द्विधा नेमिद्वितीयञ्चाक्षस्थाभ्यां विनियोजयेत्[४] ॥६२ ॥

परेण द्वादशेनैवं नमोऽन्तश्च मनुर्द्विज![५]।
मकरध्वजमन्त्रञ्च व्याख्यास्यामि विदांवर! ॥६३ ॥

अथ षोडशसङ्ख्यं यन्नाभेः प्रणवपूर्वकम्।
पदद्वयं पुनः वाच्यं ततो तन्त्रं समुद्धरेत् ॥६४ ॥

प्रथमात् प्रथमं न्यस्य दशमादपरं ततः।
नाभितृतीयेनाक्रान्तं नेमितृतीयमङ्कयेत् ॥६५ ॥

पञ्चमस्वरसंयुक्तं नवमारात्परं ततः।
दशमात् प्रथमं बाह्याद् द्वितीयस्वरमुद्धरेत् ॥६६ ॥

परं तदनु नेमेश्च मन्त्रः[६] सिद्धार्थको भवेत्।
नानाऽऽश्चर्यकरी देवी तस्या मन्त्रमथो शृणु ॥६७ ॥

बाह्यात् प्रथममादाय द्वितीयं नेमिमण्डलात्[७]।
पञ्चदशेन वै युक्तं पुनः प्रथममुद्धरेत् ॥६८ ॥

---

१. ॐ अं नमो भगवते प्रद्युम्नाय इति प्रद्युम्नस्य बीजसहितपदमन्त्रः।
२. मन्त्र इति क।
३. पञ्चमादपरं इति ख ।
४. द्वितीयेन नियोजयेत् इति ख।
५. ॐ जं आं रीं जयायै नमः इति जयायाः पिण्डबीजसहितपदमन्त्रः।
६. ॐ अः नमो भगवते अनिरुद्धाय इत्यनिरुद्धस्य बीजसहितपदमन्त्रः।
७. नाभिमण्डलात् इति क।

नेमितृतीयसंयुक्तं नाभेस्तुर्याङ्कितं स्मरेत्।
पञ्चदशस्वराक्रान्तं पुनः प्रथममङ्कयेत्॥६९॥

नाभिपरं समादाय द्विधा नेमिपरं ततः।
द्वितीयं नाभिवर्गाच्च द्वादशं स्वरमण्डलात्॥७०॥

नमःप्रणवसंयुक्तं ततो मन्त्रो[1] महामते!।
अष्टार्णा देवीनां ज्ञेया महालक्ष्म्यास्ततोऽन्यथा॥७१॥

नवार्णः स च विज्ञेयो व्यूहानामथ सङ्कुच्यते।
त्रयोदशार्णा विज्ञेयास्त्रयाणां फलदायकाः॥७२॥

द्वादशार्णस्तदेकस्य प्रद्युम्नाख्यस्य नारद!।
व्यूहानां परमन्त्राणां पदभेदमतः शृणु॥७३॥

पदद्वयं तु सर्वेषामाद्यमेकाक्षरं स्मृतम्।
द्व्यक्षरं च तृतीयञ्च चतुर्थं चतुरक्षरम्॥७४॥

पञ्चाक्षरं पञ्चमं वै त्रयाणां समुदाहृतम्।
तदेकस्य चतुर्वर्णं तृतीयस्य[2] तपोनिधे!॥७५॥

सर्वेषां बीजमन्त्रस्तु पदान्तर्गतमङ्कितम्[3]।
पिण्डमन्त्रानथो वक्ष्ये सावधानतया शृणु॥७६॥

सान्तं[4] षष्ठस्वरारूढमनुस्वारविभूषितम्।
पिण्डमाद्यस्य च विभोर्वासुदेवस्य[5] कीर्तितम्॥७७॥

---

१. ॐ मां, म्रीं मायायै नमः इति मायायाः पिण्डबीजसहितपदमन्त्रः।

२. व्यूहमन्त्रस्य ॐ इत्याक्षरमेकं पदं, अं,आं,अः इत्येकाक्षरं द्वितीयं पदं, नमो इति तृतीयं द्व्यक्षरं पदं, भगवते इति चतुरक्षरं चतुर्थं पदं, वासुदेवाय-सङ्कर्षणाय-अनिरुद्धायेति प्रथम-द्वितीय-चतुर्थानां मन्त्राणां पञ्चाक्षरं पञ्चमं पदं, तृतीयस्य प्रद्युम्नाय इति चतुरक्षरं पञ्चमं पदमिति भावः।

३. सर्वेषां चतुर्णां बीजमन्त्राः अं,आ,अं.अः इति पदमन्त्रे प्रविष्टा इति।

४. सकारस्यान्ते स्थितो हकार इत्यर्थः।

५. हूं इति वासुदेवस्य पिण्डमन्त्रः।

तदेव मदधिष्ठञ्च[१] षष्ठस्वरविवर्जितम्।
द्वितीयेन तथाक्रान्तं सङ्कर्षणस्य[२] मन्त्रराट्॥७८॥

उभयोरन्तरे रेफमाद्यपिण्डस्य योजयेत्।
पिण्डं प्रद्युम्ननाथस्य[३] तृतीयं सर्वकामदम्॥७९॥

षान्तारूढं हकारं तु लान्तस्योपरि विन्यसेत्।
विसर्गसहितं पिण्डमनिरुद्धस्य[४] वाचकम्॥८०॥

अङ्गानि योजयेत् पश्चान्मन्त्रसिद्ध्यर्थमिच्छुकः।
हकारञ्च सकारस्थं कृत्वा षोढा निवेश्य च॥८१॥

द्वितीयतुर्यषष्ठाष्टद्विषट्कदशकैः क्रमात्।
स्वरैर्नियोजयेद् विद्धि हृदाद्यान्नेत्रपश्चिमान्[५]॥८२॥

देवीयुक्तस्य व्यूहस्य मनवः कथिता मया।
द्वादशमासभर्तॄणां कथ्यन्तेऽथ फलप्रदा(दाः?)॥८३॥

गुह्याद् गुह्यतमा विप्र! बीजपिण्डादिसंयुताः।
अनुष्ठास्यन्ति श्रुत्वैतत् सिद्धिं प्राप्स्यन्ति निश्चयम्॥८४॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां
मन्त्ररात्रे परव्यूहमन्त्रोद्धारनामा
तृतीयोऽध्यायः।

---

१. पूर्वोक्त हकार एव, मया सङ्कर्षणेनाधिष्ठितः, मम प्रथमाक्षररूपेण सकारेणेति।
२. ह्सां इति सङ्कर्षणस्य पिण्डमन्त्रः।
३. ह्रूं इति प्रद्युम्नस्य पिण्डमन्त्रः।
४. ह्स्वः इति अनिरुद्धस्य पिण्डमन्त्रः।
५. ह्सां, ह्सीं, ह्सूं, ह्सृं, ह्सैं, ह्स्लृं इत्यङ्गमन्त्राणां बीजषट्कं भवति।

## मन्त्ररात्रे चतुर्थोऽध्यायः

प्रादुर्भूताश्चतुर्व्यूहात् केशवादिकद्वादशाः।
पुरुषोत्तमविभो रूपा मासेशत्वेन वर्णिताः॥ १॥

संवत्सरीयव्रतं[1] कर्तुं व्रतं मासिकमेव वा।
द्वादशीव्रतमर्चायै उद्युक्तानां स्वसिद्धये॥ २॥

मासाधिपमनून् वक्ष्ये वाञ्छितार्थफलप्रदान्।
ॐकारपूर्वकान् बीजान् ध्यातव्यान् वै पृथक् पृथक्॥ ३॥

त्रिधा हकारं कृत्वादौ जीवबीजं[2] तथैव च।
ककारञ्च क्षकारञ्च लिखेत् तद्वत् त्रिधा त्रिधा॥ ४॥

द्विषट्कं केशवादीनां बीजानां सन्निवेशयेत्।
ततो यलववर्णान् तु पौनःपुन्येन योजयेत्॥ ५॥

नाभिषष्ठेन संयुक्ताः पञ्चदशविभूषिताः।
बोद्धव्याः केशवादीनां [3]बीजास्त्वेते ह्यनुक्रमात्॥ ६॥

केशवो मार्गशीर्षेऽस्ति पौषे नारायणः परः।
माघेऽस्ति माधवो देवो गोविन्दः फाल्गुने स्मृतः॥ ७॥

चैत्रे विष्णोरधिष्ठानं वैशाखे मधुसूदनः।
ज्येष्ठे त्रिविक्रमः ख्यातो राजते वामनः शुचौ॥ ८॥

---

१. संवत्सीयव्रतं इति क ।

२. जीवाभिमानिसङ्कर्षणस्याद्याक्षरमित्यर्थः।

३. ह्यूं-ह्लूं-ह्वूं-स्यूं-स्लूं-स्वूं-क्यूं-क्लूं-क्वूं क्ष्यूं-क्ष्लूं-क्ष्वूं इति केशवादीनां बीजमन्त्राः।

श्रावणे श्रीधरो ज्ञेयो भविनां भवशान्तये।
नभस्ये च हृषीकेशः पद्मनाभ इषे मुने!॥ ९॥

ऊर्जे दामोदरो देवः पूजनीयो मुमुक्षुभिः।
पदमन्त्रान् अथो वक्ष्ये वासुदेवप्रसादतः॥१०॥

व्यूहमन्त्रानुसारेण तारं नतिस्तथोद्धरेत्।
तेवगभविपर्यस्तं सर्वत्र तत आहरेत्॥११॥

अराद्यं प्रथमं न्यस्य नाभ्येकादशभूषितम्।
नेमिषष्ठं समादाय स्वराद्यमङ्कयेत् ततः॥१२॥

पदं 'वाय' ततो दद्यान्मार्गशीर्षेष्टदैवतम्[1]।
पौषाधिपतिदेवस्य मन्त्रं जानीहि नारद!॥१३॥

अबर्थकं[2] समुद्धृत्य नेमिपरमनन्तरम्।
आद्याद्येन तथाक्रान्तम् अष्टमाद्यार्णमाहरेत्॥१४॥

द्वितीयमाद्यवर्गस्य नेमिद्वितीयसंयुतम्।
स्वराद्यं भूषितं कुर्यात्[3] माघमासेशमथ शृणु॥१५॥

बाह्याद्यं प्रथमं न्यस्य स्वरवर्गस्यापरं ततः।
प्रथमं दशमाद् वर्णं नाभिप्रथमभूषितम्॥१६॥

पञ्चमस्थमथो नाभेराकारं[4] तदनन्तरम्।
सस्वराद्यं यकारञ्च माघमासाधिपस्य तत्[5]॥१७॥

द्वितीयाद्यमथो योज्यं त्रयोदशस्वरान्वितम्।
बाह्यपञ्चममादाय नाभितृतीयमाहरेत्॥१८॥

---

१. ॐ नमो भगवते केशवाय।
२. ख मातृकायामेवोपलभ्यते आपो नारा इति प्रोक्ता इति शास्त्रानुसारेण नारा इति पदम्।
३. ॐ नमो भगवते नारायणाय।
४. नेमेराकारं इति ख।
५. ॐ नमो भगवते माधवाय।

परमादाय दशमान्नवमाच्च परं ततः।
स्वराद्यं तच्चतुर्थ्यन्तं तपस्याधिपतेर्मनुः[१] ॥१९॥

अथो नेमिपञ्चमेन नाभितृतीयमङ्कयेत्।
बाह्यात् सप्तममादायाष्टमाद्यं नारद! ततः॥२०॥

प्रथमात् प्रथमस्थञ्च बाह्यपञ्चममाहरेत्।
ततस्त्वेकादशं नाभेः चैत्रेशमनुरुच्यते[२] ॥२१॥

अथ माधवमासस्य [३]भर्तुमन्त्रमवधारय।
आद्यं नेमेस्तथा नाभेः दशमात्प्रथमं ततः॥२२॥

पञ्चमस्वरसंयुक्तो बाह्याष्टमेन भूषयेत्।
नाभेः षष्ठमथादाय दकारं केवलं लिखेत्॥२३॥

'नाय' पदं समुल्लिख्य [४]ज्येष्ठेशमन्त्रमाप्नुयात्।
'त्रि' शब्दं प्रथमं न्यस्य 'विक्रमाय'[५] पदं स्मरेत्॥२४॥

[६]अथाषाढपतेर्मन्त्रं वर्णयामि मुनीश्वर!।
नेमिपञ्चममादाय प्रथमस्वर[७]भूषितम्॥२५॥

बाह्याद्यमङ्कयेत् प्राज्ञ! [८]नेमिप्रथममारभेत्।
नकाराकारसंयुक्तं बहिष्ठद्वितीयं ततः॥२६॥

स्वराद्यमङ्कयेदन्ते भोगमोक्षफलेच्छुकः[९]।
श्रावणेशमनुं वक्ष्ये श्रियं धरति यो(यः?) सदा॥२७॥

त्रैकालिके च सर्वत्र तन्नाम्नाऽयं प्रकीर्तितः[१०]।
मन्त्रं प्रोष्ठपदेशस्य वक्ष्याम्यथ तपोनिधे!॥२८॥

---

१. ॐ नमो भगवते गोविन्दाय।
२. ॐ नमो भगवते विष्णवे।
३. भर्तुर्मन्त्र इति ख।
४. ॐ नमो भगवते मधुसूदनाय।
५. ॐ नमो भगवते त्रिविक्रमाय।
६. आषाढपतेमन्त्रं इति क।
७. पर इति ख।
८. नाभिप्रथम इति ख।
९. ॐ नमो भगवते वामनाय।
१०. ॐ नमो भगवते श्रीधराय।

नेम्यन्तमथ संयोज्य स्वरस्य सप्तमेन वै।
सप्तमं बाह्यवर्गाच्च तुर्याक्रान्तमनन्तरम् ॥२९॥

प्रथमात् प्रथमं लब्ध्वा नाभ्येकादशमुद्धरेत्।
पदं 'शाय' ततो दद्यात् मन्त्रः सम्पद्यते ध्रुवः[१] ॥३०॥

अथेषेशमहं वक्ष्ये त्वमेकाग्रमनाः शृणु।
पदं 'पद्म' समादाय विष्णोराराधनेच्छुकः ॥३१॥

द्विधा नाभिद्वितीयन्तु नभान्ते योजयेत् ततः।
अथ नेमिद्वितीयेन स्वराद्यं वर्णमाहरेत्[२] ॥३२॥

अथ कार्तिकमासस्य वर्णयामि प्रभोर्मनुः(नुम्?)।
नवमादपरं न्यस्य युक्तं नाभ्यपरेण तु ॥३३॥

बहिष्ठाद्यं ततो लब्ध्वा नाभित्रयोदशं ततः।
दरायेति पदं चान्ते दद्यात्[३] पूजाफलेच्छुकः ॥३४॥

एकादशाक्षराः पञ्च मन्त्राः सन्त्यत्र नारद!।
आद्यस्तृतीयतुर्यौ च अष्टमो नवमस्तथा ॥३५॥

द्वादशार्णास्तथा पञ्च[४] द्वितीयः सप्तमो मनुः।
दशमैकादशौ[५] मन्त्रौ द्वादशश्चावधारय ॥३६॥

दशार्णः पञ्चमो मन्त्रः षष्ठस्त्रयोदशाक्षरः।
पदानि चात्र सर्वेषां चत्वारि हरिवत्सल! ॥३७॥

आद्यमेकाक्षरं विद्धि द्वितीये चाक्षरद्वयम्।
चतुरर्णं तृतीयञ्च शेषं मन्त्रानुसारतः ॥३८॥

---

१. ॐ नमो भगवते हृषीकेशाय।
२. ॐ नमो भगवते पद्मनाभाय।
३. ॐ नमो भगवते दामोदराय।
४. मन्त्राः इत्यधिकं क।
५. दशमैकादशो इति क।

देवीगणस्य मन्त्रांस्तु निबोध गदतो मम।
क्षसहत्रितयं ह्येतच्चतुर्धा विलिखेत् क्रमात् ॥३९॥

ततो द्विषट्कं बीजानां तस्याधो विनिवेश्य च।
क्रमेण सप्तमाद्[1] वर्गाद् द्वितीयञ्च चतुर्थकम् ॥४०॥

पुनस्तृतीयं तुर्यञ्च द्वितीयञ्च तृतीयकम्।
द्वितीयञ्च चतुर्थञ्च चतुर्थं पुनरुच्यते ॥४१॥

[2]तृतीयमष्टमाच्चाथ तृतीयं सप्तमात्पुनः।
नवमद्वादशाभ्यां तु [3]विशेषमिममाचरेत् ॥४२॥

अथो नियोजयेद् रेफं तत् त्रयाणां तु मूर्धनि।
षट्सप्तमाष्टसञ्ज्ञानामीकारमुपरि न्यसेत् ॥४३॥

सानुस्वारञ्च देवीनां मन्त्रांस्त्वमवधारय।
बीजात्मका[4] इमे ज्ञेयाः[5]पदात्मकास्तु कथ्यते ॥४४॥

आदौ प्रणवमाहृत्य निगद्यते नमस्ततः।
भगवत्यै पदं देयं तदन्ते नामकीर्तनम् ॥४५॥

[6]चतुर्थ्यन्तं तु देवीनां श्रियादीनामनन्तरम्।
द्वादशीनां मुने! मन्त्रा[7] भवन्ति लक्षणान्विताः ॥४६॥

व्यूहाश्चतुर्विधाश्चेमे दश द्वे च प्रकीर्तिताः।
वासुदेव-हलिद्युम्नाऽनिरुद्धेभ्यस्तथोद्भुताः ॥४७॥

---

१. सप्तमादिति - यरलवात्मकाद् इत्यर्थः।
२. अष्टमादिति - शसषहात्मकाद् वर्गादिति।
३. विशेषमिदमाचरेत् इति ख।
४. क्ष्रीं-स्वीं-ह्रीं-क्ष्वीं-स्रीं-ह्वीं-क्ष्रीं-स्वीं-ह्रीं-क्ष्सीं-स्रीं-ह्रीं इति देवीनां बीजमन्त्राः।
५. अधोनिर्दिष्टरेखाङ्कनकशब्दाः ख मातृकायामेवोपलभ्यन्ते।
६. चर्तुर्थ्यं इति क।
७. ॐ नमो भगवत्यै श्रियै इत्याद्या इति।

वासुदेवं समादाय केशवादित्रयं मुने!।
व्यूहमेकं तु निष्पन्नं कुन्देन्दुस्फटिकप्रभम्॥४८॥

गोविन्दादित्रयञ्चान्यल्लाङ्गलिना सहान्वितम्।
चातुर्व्यूहं द्वितीयं तु रक्तपद्मदलद्युतिम्॥४९॥

स्वर्णप्रभञ्च विज्ञेयं त्रिविक्रमादिकं त्रिकम्।
प्रद्युम्नेन समं ब्रह्मन् तृतीयमवधारय॥५०॥

अतसीपुष्पसङ्काशं हृषीकेशादिकं त्रिकम्।
अनिरुद्धेन सहितं चतुर्थं तपसांनिधे!॥५१॥

बीजपिण्डपदसंज्ञावाचका मनवो मुने!
प्रोक्ता मुमुक्षवे तुभ्यं किमन्यच्छ्रोतुमर्हसि?॥५२॥

**नारद(दः?)**

भगवन्! धर्ममर्मज्ञ! वासुदेवोऽपरो भवान्।
चतुर्व्यूहस्य रूपं तु प्रथमं गदितं त्वया॥५३॥

चतसृणाञ्च देवीनां देवानां द्वादशात्मनाम्।
लाञ्छनानि च सर्वाणि परिज्ञातानि लाङ्गलिन्॥५४॥

मन्त्रा बीजयुता ब्रह्मन् सर्वेषां कथितास्तथा।
व्यूहव्यूहान्तरादीनां सदेवीनां सुखात्मकाः॥५५॥

श्रियादीनां स्वरूपाणि देवीनां द्वादशात्मनाम्।
कीदृशानीति शास्त्रज्ञ! ज्ञातुमिच्छामि मानद!॥५६॥

ध्यातव्यास्ताः कथं देव! तृप्तिर्न शृण्वतो मम।
ध्यानेनाथ जपेनासां मुमुक्षुः श्रेय आप्नुयात्॥५७॥

**सङ्कर्षण उवाच**

केशवादिविभागेन श्रियाद्यञ्च त्रयं त्रयम्।
कमलादित्रयेणैव त्वन्योन्यत्वेन लाञ्छितम्॥५८॥

बद्धपद्मासनस्थश्च सदा देवस्य सम्मुखम्।
संवीजयेत् तु विनयाच्चामरेण सितेन च ॥५९॥

देवीद्वादशकं ब्रह्मन् तासां रूपमथोच्यते।
पूर्णचन्द्राननाः सर्वाः सर्वर्तुकुसुमान्विताः ॥६०॥

सर्वलक्षणसम्पन्नाः[१] सर्वाभरणभूषिताः।
विद्रुमाभं त्रयं त्वाद्यमपरं चम्पकप्रभम् ॥६१॥

प्रियङ्गुमञ्जरीश्यामं तृतीयं देवतात्रयम्।
चतुर्थं त्रितयं ध्यायेज्जातीपुष्पसमप्रभम् ॥६२॥

आद्यायाः कमलं पाणावन्यस्यां(स्या?) हेतिराट् करे।
शङ्खं ध्यायेत् तृतीयस्यामेवं ध्यायेत् त्रिषु त्रिषु ॥६३॥

द्विभुजाः सौम्यवदनाः कृपाकटाक्षसंयुताः।
जीवेभ्यो भोगमोक्षाद्यं प्रदात्र्यो द्विजपुङ्गव! ॥६४॥

वासुदेवादिभर्तॄणामन्तर्भावं शुभं सदा।
ज्ञात्वा तथैव लोकेषु [२]चरन्त्यस्ताः शुभाशयाः ॥६५॥

व्यूहव्यूहान्तरस्यैवं देवीयुतं समन्त्रकम्।
स्वरूपं वर्णितं भूमन्! विभवमनूनथ शृणु ॥६६॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां मन्त्ररात्रे
व्यूहान्तरस्वरूपमन्त्रादिनिरूपणनामा
चतुर्थोऽध्यायः।

---

१. सर्वसक्षणसम्पन्नाः इति क।
२. चरनयास्ताः इति क।

## मन्त्ररात्रे पञ्चमोऽध्यायः

मन्त्रान् विभवदेवानान(म?)थो वक्ष्ये सनातनान्।
तेषु विशाखयूपस्तु मुख्यत्वेनावतिष्ठते॥ १॥

कथयिष्यामि बीजान् प्राक् सावधानेन चेतसा।
शृणु नारद! लोकेऽस्मिन् सिद्धिदान् वाञ्छितान् तथा॥ २॥

शुचौ देशे मनोज्ञे च सुलिप्ते पुष्पभूषिते।
चन्दनक्षोदसंयुक्ते सुधूपेनाधिवासिते॥ ३॥

विलिख्य मातृकाचक्रं प्रदर्शितं पुरा मुने!।
यस्य दर्शनमात्रेण शतधा याति किल्बिषम्॥ ४॥

द्वितीयादष्टमे वर्गे स्वराद्यं यत्र नास्ति तत्।
बिन्दुयुक्तञ्च संयोज्यं बीजं षोडशवर्जिते[१]॥ ५॥

नाभेः नवममादाय[२] बीजं वैशाखदैवतम्।
विद्धि सर्वेश्वरस्येदं वैराजपुरुषात्परम्॥ ६॥

अराद्यं पद्मनाभस्य तृतीयात्परमं ततः।
नेमिपञ्चममादाय नाभिसप्तमसंयुतम्॥ ७॥

बीजं तुर्यावतारस्य विभवं पञ्चमं शृणु।
पञ्चमात् प्राक् समादाय नाभिषष्ठमनन्तरम्॥ ८॥

---

१. कवर्गादारभ्याष्टमशवर्गपर्यन्तेषु व्यञ्जनेषु विसर्गरहितेषु बीजमन्त्रोद्धारेऽनुस्वारो नियोज्य इत्यर्थः।

२. नवमादाय इति क।

आद्यं नेमेस्ततो योज्यं सप्तमात्प्रथमं ततः।
नाभेरेकादशाक्रान्तं सप्तमं कथ्यते बुधैः॥ ९ ॥

षष्ठाराद् द्वितीयं ग्राह्यम् एकादशात् परं ततः।
प्रथमं दशमाद् ब्रह्मन् ग्रहाख्यात्[1] प्रथमं तथा॥१०॥

द्वादशादपरं चाथ द्वादशं वैभवं मुने!।
प्रत्यक् तस्मात् पुनर्वर्णं क्षकारं बीजमङ्कयेत्॥११॥

अष्टमं नेमिदेशाच्च सप्तमारात् परं द्विज!।
द्वादशं नाभिवर्गाच्च दशमादपरं ततः॥१२॥

पञ्चमादपरं वाच्यं नाभितुर्यसमन्वितम्।
विंशान्तं[2] विभवाख्यस्य बीजं श्रीहरिवल्लभ!॥१३॥

द्वितीयारात् परं ब्रह्मन् पूर्वञ्चापि ततो द्विज!।
सप्तमात् प्राक् समाख्येयं नाभित्रयोदशं ततः॥१४॥

बहिष्ठान्नवमं वाच्यं चतुर्थादपरं तथा।
अष्टमादपरं वर्णं पूर्वं तुर्याद् दयानिधे!॥१५॥

दशमं नाभिवर्गाच्चाष्टाविंशं बीजमाप्नुयात्।
वामनवपुषो ब्रह्मन् तृतीयं नेमिमण्डलात्॥१६॥

नवमादपरं ग्राह्यं नाभिपञ्चमसंयुतम्।
बहिष्ठादपरं बीजं पूर्वमेकादशाद्धि यत्॥१७॥

षष्ठात्पूर्वमराद्योज्यं नेमे[3] सप्तममाहरेत्।
तुर्यं तद्वर्गतो विप्र! तृतीयं नाभिवर्गतः॥१८॥

---

१. नवमादित्यर्थः।
२. विंशतितममन्ते यस्य तदेकोनविंशमित्यर्थः।
३. नेमेः इति ख ।

अष्टमाद्यं तु सङ्ग्राह्यं षष्ठं नेमेरनन्तरम्।
पातालशायिनश्चान्त्यं बीजमाद्यात्परं मुने!॥१९॥

प्रणवाद्या नमोन्ताश्च[1] तेजसातीव निर्भराः।
विशाखयूपमारभ्य वाच्यास्तेषां क्रमेण वै॥२०॥

क्षेत्रज्ञाः पदमन्त्राणां तेषूदयं लयं तथा।
पिण्डात्मनामथो वक्ष्ये आख्येयान् रहसि मुदा॥२१॥

प्राग् विशाखयूपस्य मन्त्रं कारणरूपिणः।
पिण्डाख्यं सावधानेन चेतसा विनिबोध मे॥२२॥

नेम्यन्तमथादाय अष्टमं तत उद्धरेत्।
दशमारात्परं वर्णं विसर्गान्तमवेहि तत्॥२३॥

अन्त्यं तदेव पूर्वं तु प्रथमाद् द्वितीयं ततः।
नेम्याद्येन च संयुक्तं पिण्डस्तु द्वितीयं स्मृतः॥२४॥

षष्ठं नाभेः समुद्धृत्य तदूर्ध्वं नेमेरष्टमम्।
नवमञ्च ततः पूर्वं योजयेद् मन्त्रकर्मणि॥२५॥

नाभिषष्ठमथादाय द्वितीयं नेमिमण्डलात्।
तदूर्ध्वं नवमञ्चाथ कुर्याद् दर्शनलालसः॥२६॥

नेमिचतुर्थमुद्धृत्य अष्टमं पञ्चमं तथा।
प्रथमाद्यं पुनर्नाभेश्चतुर्थमष्टमोपरि॥२७॥

क्षकारमथ संरूढं नेमितृतीययोजितम्।
उ(ऊ?)र्ध्वाधोऽथ विनिवेश्य पिण्डोऽयं सप्तमस्तथा॥२८॥

---

१. लृ-क-च-वृ-झृ-म-डे-ठ-फ-ध-थ-भ-ब-क्ष-स-ढ-ऐ-न-मी-घ-ग-ड-ओ-ह-ज-त-छ-लॄ-र-दू-प-य-ट-ष-ल-इ-ण-श-ख इत्येकोनचत्वारिंशद् विशाखयूपमारभ्य पातालशायिपर्यन्ता वैभवीयाः बीजमन्त्राः 'ॐ लृं नमः' इत्यादयः प्रणव-बीजाक्षरोपर्यनुस्वार-नमोघटिताः प्रयोज्याः।

नेम्यन्तं नारद! कुर्यादष्टमं द्वितीयं ततः।
नाभिषष्ठेन संयुक्तं विद्धि तदनु पूजकः॥२९॥

पिण्डं नेमेस्तु नवमं अष्टमं प्रथमं तथा।
द्वितीयात्प्रथममूर्ध्वं नेमितुर्यमनन्तरम्॥३०॥

पञ्चमस्वरमादाय पिण्डं दशममाप्नुहि।
अरान्तं तस्य प्रथमं नेमेस्तुर्यं तृतीयकम्॥३१॥

नेमेः पञ्चममथो योज्यमष्टमं प्रथमं ह्यरात्।
नाभेः षष्ठसमारूढं बाह्यं पञ्चममष्टमम्॥३२॥

अष्टमादपरं योज्यं विपरीतमनुक्रमात्।
क्षमादाय पुरस्ताच्च नेम्यष्टमञ्च पञ्चमम्॥३३॥

पञ्चदशमथो वक्ष्ये पिण्डं कूर्माख्यदैवतम्[1]।
द्वितीयादपरं नेमेराद्यन्तञ्च तृतीयकम्॥३४॥

तुर्यात् पूर्वं गृहीत्वाऽथमरान्तमथ उद्धरेत्।
ऊर्ध्वाधो विनिवेश्यं तद् अथ सप्तदशं शृणु॥३५॥

चतुर्थारात् परं वाच्यम् आद्यन्तं रेफमुद्धरेत्[2]।
अराद्यं सप्तमं नेमेरष्टमं तदनन्तरम्॥३६॥

नेम्यन्तमष्टमञ्चाथ तृतीयं तत आहर।
त्रयोदशस्वरोपेतं न्यूनविंशतिमं तु तत्॥३७॥

नेमेरष्टममादाय चतुर्थं पञ्चमं ह्यधः।
नवमं तृतीयं तस्मात् स्वरात् षष्ठस्य मूर्धनि॥३८॥

---

१. क्रमानुसारेणात्र एकार्णवशायिनो मन्त्रः सम्भाव्यते। उभयमातृकयोः कूर्माख्यदैवतमिति दृश्यते तच्चिन्त्यम्।
२. अधोरेखाघटितं ख-मातृकायामेवोपलभ्यते।

क्षकारं नेमितुर्यञ्च तृतीयमथाहरेत्।
नवममष्टमञ्चैव तृतीयं द्वितीयं तथा ॥३९॥

नाभिषष्ठेन संरुद्धं त्रयोविंशतिमं मुने!।
चतुर्थारात्परं योज्यं नेम्यष्टममनन्तरम् ॥४०॥

तुर्यञ्च योजयेत् तस्मिन् लोकनाथमनुर्हि[१] तत्।
तृतीयञ्च चतुर्थञ्चाराद्येन संविभूषितम् ॥४१॥

अरषष्ठासनो मन्त्रो नेम्यष्टं तुर्यमेव च।
ऊर्ध्वाधस्तात् स्वरः सोऽयं[२] मध्ये पूर्वन्तु द्वादशात् ॥४२॥

नेमिपूर्वं द्वितीयञ्च तृतीयं तदधस्तथा।
अन्त्यं नेमेरष्टमञ्च प्रथमं तदनन्तरम् ॥४३॥

सप्तमस्वरसंरूढं त्रिंशे ऊनन्तु तत्स्मृतम्।
नेमिचतुर्थमादाय तृतीयेन विभूषयेत् ॥४४॥

अष्टमं पञ्चमं चोर्ध्वमधस्तृतीयमङ्कयेत्।
स्वराद्यं[३] नेमितुर्यञ्च पिण्डं हरेरवेहि तत् ॥४५॥

क्षवर्णमथ संयोज्य नेमिप्रथममुद्धरेत्।
नवमं तृतीयञ्चैव स्वरषष्ठोपरि स्थितम् ॥४६॥

नेमेर्नवममादाय द्वितीयमुपरि न्यसेत्।
नाभिषष्ठसमाक्रान्तं पञ्चत्रिंशः स पिण्डकः ॥४७॥

नाभेस्त्रिदशमादाय स्थितं तत् पञ्चमोपरि।
नेमेस्तुर्यमथाष्टञ्च पिण्डं वाञ्छाप्रपूरकम् ॥४८॥

---

१. मनुं शृणु इति ख ।

२. 'सोऽयं' पदेन इतः पूर्वं 'नाभिषष्ठेन' इति शब्देन चत्वारिंशत्तमे श्लोके कथितः षष्ठस्वरः 'ऊ' इत्यनुवर्त्यः।

३. अराद्यं इति ख। अग्रे च ख-मातृकायामेवोपलभ्यते अराद्यपदप्रतिपादितः ककार एवोचितः, पिण्डमन्त्रे व्यञ्जनाधिक्यस्य प्रायो दर्शनात्।

क्षार्णं नेमिचतुर्थञ्च तृतीयमथ नारद!।
पुनराद्यं तदेवार्णं नेमि(मे?)स्तृतीयमेव च ॥४९॥

पञ्चमस्वरसंयुक्तमष्टात्रिंशं स उच्यते।
बाह्यतृतीयमारूढमूर्ध्वाधो द्वितीयोपरि ॥५०॥

ऊर्ध्वमेकादशाच्चारादन्तिमं तन्निबोध वै।
[1]पिण्डास्त्वाद्यं विहायान्ये [2]नाभ्यन्त्याद्येन भूषिताः ॥५१॥

नमोऽन्ताः प्रणवाद्याश्च युक्ताः सञ्ज्ञापदैः स्वकैः।
यत्र सन्ति स्वरा नान्ये स्वराद्यं तत्र भूषयेत् ॥५२॥

संज्ञामन्त्रास्तु विज्ञेयाः पूर्वोक्ता एव नारद!।
प्रणवाद्यान् चतुर्थ्यन्तान् पदमन्त्रान् अथ कीर्तये ॥५३॥

सिद्धिमुखान् रहस्यार्थान् वाञ्छितार्थफलप्रदान्।
यैर्विना लब्धसत्तानामर्चनं नहि जायते ॥५४॥

सर्वकारणपदं पूर्वं कारणाय तदनन्तरम्।
परमञ्च तथाऽऽनन्दं चतुर्थ्यन्तं निबोध वै ॥५५॥

विशाखयूपाय तथा देवेशाय नम इति।
विभवानां प्रधानं तत् पञ्चविंशात्मकं[3] पदम् ॥५६॥

विश्वातीताय विमलं पदं विद्याविधायिने।
पद्मनाभाय वै विश्वव्यापिने तदनन्तरम् ॥५७॥

---

१. ह्स्नः-न्खं-ह्सूं-ह्वूं-ल्स्वं-म्स्लं वा क्स्लं-क्ष्रं-ह्स्यूं-ह्स्मं-ग्लुं-भ्क्लं-व्स्कं-त्स्वूं-क्ष्स्वं-घ्म्हं-भ्छ्भं-प्र्रं-क्ब्सं-ह्स्लों-स्ल्वं-हूं-क्ष्लं-ह्स्यूं-ज्स्लं-ल्कं द्रुस्लं-ल्ब्लूं- म्प्रं-ह्स्मूं-लं-स्व्रं-क्लं-क्ष्मं-हूं-ह्यूं-ल्वों-क्ष्क्रं-क्ष्मुं-प्र्यं इत्येते एकोनचत्वारिंशद् विभवानां पिण्डमन्त्रा विज्ञेयाः।

२. नाभ्यान्त्याद्येन इति क। अनुस्वारेण-अकारेण चेत्यर्थः।

३. ॐ सर्वकारणकारणाय परमानन्दाय विशाखयूपाय देवेशाय नमः।

चतुवि(विं?) शाक्षरं[१] विद्धि एतत्सङ्ख्यं परं[२] शृणु।
ज्योतीरूपाय पञ्चार्णं पदं गगनमूर्तये ॥५८॥

ध्रुवाय तदनु दद्यात् परमं त्र्यक्षरं ततः।
पदप्राप्तिचतुर्वर्णं हेतवे त्र्यक्षरं तथा ॥५९॥

अनन्ताय पदं दद्यात् ततोऽपरिमिताय च।
सर्वाश्रयाय तदनु तदन्ते धृतशक्तये ॥६०॥

एतद्विंशतिसङ्ख्यञ्च[३] [४]द्वाविंशार्णमतः शृणु।
नमो भगवते कृत्वा वासुदेवाय वै ततः ॥६१॥

सर्वशक्त्यात्मनेऽनन्तमूर्तये तु पदं त्विति।
वीर्यात्मने मधुशब्दं सूदनाय पदं ततः ॥६२॥

मोहमायापदञ्चैव ततो विध्वंसिने नमः।
सदोदिताय शब्दं तु सर्वशक्तिपदं ततः ॥६३॥

नियोक्तव्यं चतुर्थ्यन्तमष्टाविंशाक्षरं[५] स्मृतम्।
पदं वेदविदे ब्रह्मविद्यारूपाय वै तथा ॥६४॥

तदन्ते विश्वपतये ततो वै परमात्मने।
एकविंशतिभिर्वर्णैः[६] शृणु [७]सप्तदशाक्षरम् ॥६५॥

ज्ञानात्मने पदं कुर्यात् संविच्छब्दमतः परम्।
पदं प्रकाशाशयाय शान्तरूपाय वै ततः ॥६६॥

---

१. ॐ विश्वातीताय विमलविद्याविधायिने पद्मनाभाय विश्वव्यापिने नमः।
२. ॐ ज्योतीरूपाय गगनमूर्तये ध्रुवाय परमपदप्राप्तिहेतवे नमः।
३. ॐ अनन्ताय अपरिमिताय सर्वाश्रयाय धृतशक्तये नमः।
४. ॐ नमो भगवते वासुदेवाय सर्वशक्त्यात्मनेऽनन्तमूर्तये नमः।
५. ॐ वीर्यात्मने मधुसूदनाय मोहमायाविध्वंसिने सदोदिताय सर्वशक्तये नमः।
६. वर्णैः इति क। ॐ वेदविदे ब्रह्मविद्यारूपाय विश्वपतये परमात्मने नमः।
७. ॐ ज्ञानात्मने संवित्प्रकाशाशयाय शान्तरूपाय नमः।

अनन्तशक्तये सर्वव्यापिने तदनन्तरम्।
जगन्मयाय तदनु विश्वरूपाय वै ततः॥६७॥

[1]एकविंशतिभिर्वर्णैरयमुक्तोऽपरं शृणु।
सत्सत्त्वपदमादाय पदं गुहाशयाय च॥६८॥

ततः परमहंसाय ततो मानसचारिणे।
एष [2]विंशत्यक्षरश्चैवाथातो यज्ञमूर्तये॥६९॥

पदमादाय तदनु विश्वान्तर्वर्तिने तु वै।
ततो भुवनशब्दं तु वराहाय पदं त्वथ॥७०॥

विभूतिस्वामिने चाथ [3]चतुर्विंशाक्षरस्त्वयम्।
समुद्रान्तः पदं दद्यात् चारिणे तदनन्तरम्॥७१॥

निर्लेपाय तदन्ते च ततो वै वाडवाग्नये।
जगज्जलेन्धनपदं प्रदीप्तपदमेव तु॥७२॥

वीर्याय फट् तदन्ते वै [4]त्रिंशान्न्यूनं पदं त्विदम्।
सर्वान्तर्यामिणे दद्यात् प्रसन्नपदमेव च॥७३॥

मूर्तयेऽथ तदन्ते वै दद्यात् धर्मात्मने पदम्।
[5]षोडशाक्षरमेतद् वै अतो गुह्यतमं शृणु॥७४॥

सर्वविद्येश्वरायाथ दद्याद् वाक्पतये ततः।
पदं वद वदादाय ततो वाग्विभवं त्विति॥७५॥

न्यूनविंशाक्षरो[6] ह्येष त्वपरं कथयामि ते।
योगैश्वर्यप्रदायाथ योगनिद्रारसाय च॥७६॥

---

१. ॐ अनन्तशक्तये सर्वव्यापिने जगन्मयाय विश्वरूपाय नमः।
२. ॐ सत्सत्त्वगुहाशयाय परमहंसाय मानसचारिणे नमः।
३. ॐ यज्ञमूर्तये विश्वान्तर्वर्तिने भुवनवराहाय विभूतिस्वामिने नमः।
४. ॐ समुद्रान्तःचारिणे निर्लेपाय वाडवाग्नये जगज्जलेन्धनप्रदीप्तवीर्याय फट्।
५. ॐ सर्वान्तर्यामिणे प्रसन्नमूर्तये धर्मात्मने नमः।
६. ॐ सर्वविद्येश्वराय वाक्पतये वद वद वाग्विभवं(वाय?) नमः।

निरताय पदं दद्याद् भगवज्जलशायिने।
त्रिरष्टवर्णसङ्ख्यश्च[1] द्वयं ततोऽधिकस्तु वै॥७७॥

भगवत्पदमादायाथानन्त-बल-शक्तये।
तेजोमयाय भुवनभृते च कच्छपात्मने॥७८॥

[2]षड्विंशार्णमिमं विद्धि मन्त्रं मन्त्रविदांवर!।
यज्ञाङ्गदेहमादाय चतुर्थीञ्च महापदम्॥७९॥

वराहाय ततो दद्यात् पुराणपुरुषाय वै।
दद्यात् ततः प्रजाशब्दं तदन्ते पतये पदम्॥८०॥

चतुर्विंशाक्षरं[3] मन्त्रमेतन्मन्त्रविदांवर!।
नमो भगवते कृत्वा नारसिंहाय नारद!॥८१॥

तेजोनिधे पदं दद्यात् पदं हनहनेति च।
ततो विकर्मजात्यं वै शब्दं पञ्चाक्षरं भवेत्॥८२॥

दुष्कृतं हि[4] तदन्ते वै [5]सप्तविंशाक्षरस्त्वयम्।
आदायामृतमूर्ते वै ततो ज्ञानबलात्मने॥८३॥

सर्वेश्वराय भगवन् [6]न्यूनविंशाक्षरस्त्वयम्।
आदाय पुण्डरीकाक्षपदं वै परमेश्वर!॥८४॥

ततः सकलशब्दं तु सुखसौभाग्य वै पदम्।
निधे! वाञ्छितशब्दं तु ततः सिद्धिप्रदेति वै॥८५॥

---

१. ॐ योगैश्वर्यप्रदाय योगनिद्रारसाय निरताय भगवज्जलशायिने नमः।
२. ॐ भगवदनन्तबलशक्तये तेजोमयाय भुवनभृते कच्छपात्मने नमः।
३. ॐ यज्ञाङ्गदेहाय महावराहाय पुराणपुरुषाय प्रजापतये नमः।
४. हि इति ख मातृकायामेव।
५. ॐ नमो भगवते नारसिंहाय तेजोनिधे हनहन विकर्मजात्यं दुष्कृतं नमः।
६. ॐ अमृतमूर्ते ज्ञानबलात्मने सर्वेश्वराय भगवन् नमः।

पदं चाखिलदुःखेति ततस्तु शमनाग्नये।
आनन्दसुन्दरपदं ततो लक्ष्मीपदं न्यसेत्॥८६॥

पतये शब्दमुच्चार्य [1]पञ्चाशार्णस्त्रिरुज्झितः।
सदसत्पदमादाय मूर्तये तदनन्तरम्॥८७॥

विश्वोत्तमाय [2]तदनु ततोऽमृतनिधे! पदम्।
सप्तदशाक्षरो [3]मन्त्र उक्तः कान्तात्मनो विभोः॥८८॥

पुरुषोत्तमाय शब्दं तु ततोऽप्रतिहतेति च।
शक्तयेऽथ पदं दद्यात् सर्वेश्वरपदं ततः॥८९॥

समग्रोग्रभयेत्यत्र निवारणपदं ततः।
सप्तविंशाक्षरो [4]मन्त्र उक्तश्चातः परं शृणु॥९०॥

नियन्त्रे पदमुद्धृत्य तदन्ते विश्वहेतवे।
परब्रह्मसमेतं च सेतवे ओमनन्तरम्॥९१॥

मन्त्रो द्विरष्टवर्णश्च[5] कथितो वच्म्यतः परम्।
पदमप्रतिमेत्यादौ प्रभावं तदनन्तरम्॥९२॥

महाविभूते! तदनु महामायापदं ततः।
अथ दर्शकशब्दं तु तदन्ते तालकेतवे॥९३॥

चतुर्विंशा[6]क्षरो[7] मन्त्रस्त्वयमुक्तः सनातनः।
शान्तात्मने पदं दद्यात् तदन्ते यम विन्यसेत्॥९४॥

---

१. ॐ पुण्डरीकाक्ष! परमेश्वर! सकलसुखसौभाग्यनिधे! वाञ्छितसिद्धिप्रदाखिलदुःखशमनाग्नये आनन्दसुन्दरलक्ष्मीपतये नमः।

२. सदनु इति ख।

३. ॐ सदसन्मूर्तये सद्विश्वोत्तमाय अमृतनिधे! नमः।

४. पुरुषोत्तमायाप्रतिहतशक्तये सर्वेश्वर! समग्रोग्रभयनिवारण! नमः।

५. ॐ नियन्त्रे विश्वहेतवे परब्रह्मसेतवे ॐ नमः।

६. चतुर्विशाक्षरो इति क।

७. अप्रतिमप्रभावमहाविभूते! महामायादर्शक! तालकेतवे नमः।

नियमाश्रयाय दद्यात् परमर्धिप्रदाय च।
नारायणाय शब्दं तु पूर्वसङ्ख्यासमं[१] स्मृतम्॥९५॥

भवभङ्गपदं दत्त्वा कारिणे तदनन्तरम्।
ततो भगवते शब्दं दत्तात्रेयाय वै ततः॥९६॥

वर्णाश्रमपदं चाथ धर्मशब्दमतः परम्।
परिग्रहाय प्रणवं सप्तविंशाक्षरः[२] स्मृतः॥९७॥

सर्वलोकमयायेति सर्वज्ञाय पदं ततः।
सर्वेश्वराय न्यग्रोधशयनाय पदं तथा॥९८॥

त्रयोविंशत्यक्षरश्च[३] त्वयमन्यं शृणु द्विज![४]।
भूतशब्दमथादाय भावनाय पदं ततः॥९९॥

शब्दं विश्वात्मने चाथ विमलेति पदं ततः।
निकेतनाय तदनु कन्धराय पदं तथा॥१००॥

अयं विंशतिभिर्वर्णै(र्णैः?) [५]द्व्यधिकैर्मन्त्रराट् स्मृतः।
विष्णवेपदमादाय निरस्त्रास्त्राय नारद!॥१०१॥

पदं ब्रह्ममयायाऽथ जटिने दण्डिने ततः।
दद्याद् विदितशब्दं वै तदन्ते विभवाय च॥१०२॥

[६]षड्विंशार्णस्त्वयं मन्त्रः परमस्मान्निबोध वै।
सर्वशब्दमथादाय व्यापिने तदनन्तरम्॥१०३॥

---

१. ॐ शान्तात्मने यमनियमाश्रयाय परमर्धिप्रदाय नारायणाय नमः।
२. ॐ भवभङ्गकारिणे भगवते दत्तात्रेयाय वर्णाश्रमधर्मपरिग्रहाय नमः।
३. ॐ सर्वलोकमयाय सर्वज्ञाय सर्वेश्वराय न्यग्रोधशयनाय नमः।
४. त्वयमन्यमतः शृणु इति ख।
५. ॐ भूतभावनाय विश्वात्मने विमलनिकेतनाय कन्धराय नमः।
६. ॐ विष्णवे निरस्त्रास्त्राय ब्रह्ममयाय जटिने दण्डिने विदितविभवाय नमः।

पदं सहस्रार्चिषे तु दद्यात् पञ्चाक्षरं शुभम्।
त्रिविक्रमायाथ पदं ततोऽपरिमितेति च ॥१०४॥

प्रभावाय पदं दत्त्वा त्रयोविंशाक्षरः[1] स्मृतः।
नरनाथाय शब्दं तु पुरुषप्रवराय वै ॥१०५॥

आत्मध्यानपरायेति णाय वै द्व्यक्षरं स्मृतम्।
एकविंशाक्षरो[2] मन्त्रस्त्वतोऽन्यमवधारय ॥१०६॥

नारायणाय शब्दं तु दद्यान्निरति वै पदम्।
शयानन्दमयायेति पदं निरभिमान वै ॥१०७॥

पदासक्ताय तदनु [3]पञ्चविंशाक्षरस्त्वयम्।
पराय पदमादाय ततो वै परमात्मने ॥१०८॥

योगेश्वराय हरये मन्त्रोऽयं [4]षोडशाक्षरः।
सप्तार्णपदमादाय प्राग् नमः परमात्मने ॥१०९॥

कृष्णाय शब्दं तदनु ब्रह्मदासा पदं ततः।
नुग्रहविग्रहायेति पदं वाच्यमनन्तरम् ॥११०॥

ब्रह्मिष्ठाय ब्रह्मणे वै [5]अष्टाविंशाक्षरस्ततः।
भगवन्पदमादाय युगान्तदहनेति च ॥१११॥

दीप्तयेऽथ पदं दद्यात् संसारपदमेव हि।
बन्धविच्छेदकर्त्रे च [6]द्वाविंशार्णस्त्वयं परम् ॥११२॥

---

१. ॐ सर्वव्यापिने सहस्रार्चिषे त्रिविक्रमायापरिमितप्रभावाय नमः।
२. ॐ नरनाथाय पुरुषप्रवराय आत्मध्यानपरायणाय नमः।
३. ॐ नारायणाय निरतिशयानन्दमयाय निरभिमानपदासक्ताय नमः।
४. ॐ पराय परमात्मने योगेश्वराय हरये नमः।
५. ॐ नमः परमात्मने कृष्णाय ब्रह्मदासानुग्रहविग्रहाय ब्रह्मिष्ठाय ब्रह्मणे नमः।
६. ॐ भगवन्! युगान्तदहनदीप्तये संसारबन्धविच्छेदकर्त्रे नमः।

पदं चतुर्मूत(र्त ?)येऽथ चतुर्गतिमयाय च।
शरशार्ङ्गभृते दद्याच्छरदिन्दीवरत्विषे ॥११३॥

ततो भगवते दद्यादभिरामपदं ततः।
शरीराय पदञ्चैव [1]त्वष्टत्रिंशाक्षरः स्मृतः॥११४॥

दद्याद् विशदशब्दं तु परमार्थपदं तथा।
ततो वेदविदे शब्दं विदुषे व्यापकाय च॥११५॥

स्वामिंस्तदनु वै दद्याद् द्व्यक्षरं चापरं पदम्।
अयं [2]विंशतिभिर्वर्णैरुक्तस्त्वन्यमतः शृणु॥११६॥

दद्याद् गरुडशब्दं तु तदन्ते वाहनेति च।
सर्वशस्त्रास्त्रोद्यतेति[3] शमयाऽशुभमेव हि॥११७॥

ततो धुन धुनादाय कर्मबन्धांस्ततो वदेत्।
धर्मं पाहि ततो दद्याद् जह्यधर्मं ततस्तथा॥११८॥

चतुस्त्रिंशाक्षरो[4] मन्त्र एष वक्ष्याम्यतः परम्।
संहारमूर्तये शब्दं कालवैश्वानरार्चिषे॥११९॥

पातालशयनायेति त्वज्ञाननिगडेति वै।
निचयं हन वीप्साऽतः प्रणवं तदनन्तरम्॥१२०॥

पञ्चत्रिंशाक्षरो[5] ह्येष सर्वसिद्धिकरः स्मृतः।
प्रणवालङ्कृताः सर्वे नमस्कारविभूषिताः॥१२१॥

---

१. ॐ चतुर्मूर्तये चतुर्गतिमयाय शरशार्ङ्गभृते शरदिन्दीवरत्विषे भगवते अभिरामशरीराय नमः।
२. ॐ विशदपरमार्थवेदविदे विदुषे व्यापकाय स्वामिन्! नमः।
३. सर्वशस्त्रोद्यतेति इति क।
४. ॐ गरुडवाहन! सर्वशस्त्रास्त्रोद्यत! शमयाऽशुभं धुन धुन कर्मबन्धान् धर्मं पाहि जह्यधर्मं नमः।
५. ॐ संहारमूर्तये कालवैश्वानरार्चिषे पातालशयनाय अज्ञाननिगडनिचयं हन हन ॐ नमः।

मन्त्रसङ्ख्यापरिज्ञाने नमःप्रणववर्जितम्।
विज्ञेयं भगवज्ज्ञानप्राप्तिमात्रार्थका इमे ॥१२२॥

संस्मृताः पूजिताश्चैव ध्याता जप्ता विशेषतः।
तन्नास्ति यन्न यच्छन्ति भक्त्या सत्कर्मणा भुवि ॥१२३॥

देवीमन्त्रास्तु विज्ञेयाः तत्तन्नाम्ना विदांवर!।
देवीरूपाणि शास्त्रज्ञ! सात्वतादवधारय[१] ॥१२४॥

मुद्रोपेतान् जपेन्मन्त्रान् लोकभोगफलप्रदान्।
अन्ते मुक्तिफलापन्नान् इमान् विद्धि महामते ॥१२५॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां मन्त्ररात्रे
वैभवबीज-पिण्ड-पदमन्त्रवर्णननामा
पञ्चमोऽध्यायः।

---

१. सात्वतसंहितायां शक्तिसङ्कपदेन नवमे द्वादशदेव्यो विभवगणनानन्तरं (९/८४-८५) निरूपिताः। द्वादशे च वैभवध्यानवर्णनात् परं (१२/२०६-२१७) देवीभेदा निरूपिताः, परन्तूभयत्रैकोनचत्वारिंशद्विभवदेवीवर्णनं नास्ति। तत्खलु सात्वतोपबृंहणरूपायामीश्वरसंहितायां (७/३३-३७) तथा लक्ष्मीतन्त्रे (२०/४५-४८) परिगणितमस्ति।

## मन्त्ररात्रे षष्ठोऽध्यायः

नारदः

अङ्गमन्त्रास्तु के भूमन् विभवेषु जगद्गुरोः।
मुद्राणामुपयुक्तत्वं मन्त्रेषु कथितं त्वया॥ १॥

कीदृश्यस्ताः कथं दर्श्यास्तत्सर्वं वद विस्तरात्।
मन्त्रसिद्धिश्च विश्वात्मन् सामान्येन निरूपिता॥ २॥

केन मन्त्रेण का सिद्धिस्तत्सर्वं मां निरूपय।
मन्त्रमार्गे च यज्ज्ञेयं पृष्टं वाऽपृष्टमेव च॥ ३॥

सङ्कर्षणः

विभवानां तु मूलात्मा विशाखयूप उच्यते।
तदारभ्य समाप्त्यन्तं देवानामङ्गमन्त्रकान्॥ ४॥

वक्ष्येऽहं साधकानां तु मन्त्रसिद्धौ हितावहान्।
नेमेरष्टममादाय षोढा संलिखयेत् क्रमात्॥ ५॥

द्वितीयतुर्यषष्ठैश्च द्वादशेनान्तिमेन च।
चतुर्दशेनाराद्वर्गात् क्रमाद् वै विनियोजयेत्॥ ६॥

बीजवच्छिरसा सर्वं लाञ्छयेत् पञ्चमं विना[१]।
सर्वेषां प्रणवः पूर्वं स्वसंज्ञान्ते नियोजयेत्॥ ७॥

स्वकीया जातयश्चान्ते वौषडन्ताः क्रमेण तु।
यन्मन्त्रस्य समुद्धारः तत्संज्ञापूर्वकेण च[२]॥ ८॥

---

१. पञ्चमं विना - विसर्गसहितं बीजं विहायेत्यर्थः।

२. ॐ सां विशाखयूपाय हृदयाय नमः। ➤

अङ्गान् ज्ञात्वा समुच्चार्य स्वाङ्गमुद्रां प्रदर्शयेत्।
अङ्गमुद्राञ्च वक्ष्यामि अन्या विस्तारपूर्वकाम्।
मुदं कर्मात्मतत्त्वानां ददात्यमलयाजिनाम्॥ ९॥

द्रावयन्ति(ति?) च दोषाणां बाह्याभ्यन्तरचारिणाम्।
तेन मुद्रा समाख्याता कृतस्याऽपि तु मुद्रणात्॥१०॥

तस्मात् स्वाभाविकं कृत्वा बन्धं वा मानसं पुरा।
स्वेन स्वेन तु मन्त्रेण व्याप्तं स्मरेत्तु सर्वदा॥११॥

चैतन्येनानुविद्धोऽस्ति मन्त्रसङ्घस्तु सर्वदा।
तथाऽपि मन्त्रचैतन्यं सर्वथा सा तु रक्षति॥१२॥

गन्धयुक्तौ करौ कृत्वा मुद्राबन्धं माचरेत्।
अङ्गमुद्रास्तु सर्वत्र योज्याः न्यासाच्च प्राग् मुने॥१३॥

अङ्गं विनाऽङ्गिनः सत्ता कथं सम्भाविता द्विज!।
तस्मादङ्गाभिधानानां[1] माहात्म्यं लक्षणं शृणु॥१४॥

मन्त्रेशमन्त्रशक्तीनामनन्तानां तु नारद!।
नानासामर्थ्ययुक्तानां हृदयं हृदयं सदा॥१५॥

अनामिका-मध्यमयोर्निवेद्याङ्गुष्ठमायतम्।
कुर्वीत हृदये मुष्टिं मुद्रा सा हार्दिकी स्मृता॥१६॥

आत्मप्रकाशकं चैव बलादीनां तथा च तत्।
सर्वातिशायि चैश्वर्यं यद्गुणं पारमेश्वरम्॥१७॥

---

◀ ॐ सीं विशाखयूपाय ऐश्वर्याय शिरसे स्वाहा।
ॐ सूं विशाखयूपाय शक्त्यै शिखायै वौषट्।
ॐ सैं विशाखयूपाय बलाय कवचाय हुम्।
ॐ सः विशाखयूपाय वीर्याय अस्त्राय फट्।
ॐ सौं विशाखयूपाय तेजसे नेत्रत्रयाय वौषट्। इति विशाखयूपस्याङ्गमन्त्राः।
प्रकारेणानेन तत्सञ्ज्ञापूर्वकाः समुच्चार्या इति।

१. तस्मादङ्गाभिधानां तु इति क।

तच्छिरः सर्वमन्त्राणामङ्गत्वेन प्रकल्पितम्।
निबध्य मुष्टिमं हन्यादङ्गुष्ठाग्रेण तर्जनीम्॥१८॥

स्थापयित्वा ललाटान्ते मुद्रा शिरसः कथ्यते।
या भूरिशक्तिभिः पूर्णा शक्तिर्वै पारमेश्वरी॥१९॥

ऊर्ध्वतेजोवहा शुद्धा विद्धि मान्त्री शिखा तु सा।
बद्धवा मुष्टिं दृढां ब्रह्मन्! कुर्यादङ्गुष्ठमूर्ध्वगम्॥२०॥

स्थापयित्वा शिखादेशे शिखामुद्रेयमिष्यते।
धैर्यं यन्नापरं प्राणादाच्युतं धृतिलक्षणात्॥२१॥

तदेव कवचं विद्धि मन्त्राणां हि बलात्मकम्।
प्रवेश्याभ्यन्तराङ्गुष्ठं बद्धवा मुष्टिप्रवेशनम्॥२२॥

उन्नम्य किञ्चिदग्रे च विततास्तेन मुष्टिना।
भावयेद् वर्मणो बद्धं चैषा कवचमुद्रिका॥२३॥

यदप्रतिहतं वीर्यमैश्वर्यं परमात्मनः।
तद्विप्र! मन्त्रमूर्तीनामस्त्रमप्रतिमप्रभम्॥२४॥

तर्जन्याङ्गुष्ठशिरसि स्फोटयेत् चक्रवत्स्मरन्।
दिक्षु सर्वासु शेषाभिः मुष्टिं बद्धवा तु नारद!॥२५॥

सैषास्त्रमुद्रा विज्ञेया नेत्रमाहात्म्यमुच्यते।
नेत्राभ्यां तु परिज्ञानादनौपम्यं जगद्गुरोः॥२६॥

यदनन्तप्रकाशत्वमात्मनि यद् भवेत्स्थिरम्।
[1]तन्नेत्रं सर्वमन्त्राणां सर्वसौख्यकरं शुभम्॥२७॥

अस्त्रमुद्रा[2] तु विज्ञेया शिखामुद्रा ह्यधोमुखी।
भ्रुवोर्मध्ये तु संस्थाप्या मूलमुद्रामथोच्यते॥२८॥

---

१. तन्नैत्रं इति क।
२. नेत्रमुद्रा इति ख। तच्च योग्यम् अस्त्रमुद्रायाः प्राक् प्रदर्शनात्।

वासुदेवं परं ध्यात्वा दक्षिणादङ्गुलित्रयम्।
स्पष्टमूर्ध्वशिखं चैव ज्येष्ठाक्रान्ता कनीयसि(सी?) ॥२९॥

दर्शयेद् हृदये ब्रह्मन् मूला(मुद्रा?) मुख्या तु कीर्तिता।
तुर्याख्ये यजने विप्र! योज्या मोक्षप्रदायिनी ॥३०॥

व्यूहमुद्रां सुषुप्त्याख्य-चातुरात्म्यस्य[1] पूजने।
योज्यां तां कथयाम्यत्र भोगमोक्षप्रदायिनीम् ॥३१॥

शिष्टौ विकसितौ हस्तौ योज्यौ च मणिबन्धनात्।
तद्बाहुकूर्परौ द्वौ च नाभौ संरोध्य दण्डवत् ॥३२॥

ईषद्वै डोलयेत्पश्चादध ऊर्ध्वे तु तौ करौ।
गुप्तिं कृत्वा तु योज्यैषा मुद्राराधनकर्मणि ॥३३॥

मूती(र्ती?)नां केशवादीनां ततोऽन्याः[2] तु निबोध मे।
श्लेष्य पाणितले द्वे प्राङ्नम्रं कुर्याल्लतागणम् ॥३४॥

विमुक्तमन्तरीकृत्य सहाङ्गुष्ठद्वयेन तु।
मणिबन्धद्वयं कुर्यात् सुलग्नमतिनिश्चलम् ॥३५॥

करयुग्मं सगर्भं तु सन्धार्य स्वधियाऽचलम्।[3]
ऊरुमध्ये निषण्णे तु कुर्याद्वै बाहुकूर्परे ॥३६॥

गुप्तां कृत्वा प्रयत्नेन बन्धमस्याः समाचरेत्।
एषैव विभवाख्यानां मुद्रा योज्या तथार्चने ॥३७॥

प्रणवेन प्रयोज्येयं लोकभोगफलप्रदा।
साधक इच्छति यद् यत् सर्वं राति मुदा च सा ॥३८॥

मुद्राणामस्ति बाहुल्यं शिष्यैः शिक्ष्या गुरोर्मुखात्।
योग्यादाचार्यसंज्ञात्तु साफल्यं नान्यथा क्वचित् ॥३९॥

---

१. चातुर्मासस्य इति क।
२. ततोऽन्या इति क-ख।
३. अधोरेखास्थं श्लोकार्धम् ख-मातृकायामेवेपलभ्यते।

कथिताः साम्प्रतं विप्र! उपयुक्ता मुमुक्षुभिः।
मन्त्रसिद्धिमथो वक्ष्ये संक्षेपेण महामते!॥४०॥

सिद्धिं कामयमानस्य लक्षणानि शृणु द्विज!।
श्रद्दधानो नित्ययुक्तो विकल्पोज्झितमानसः॥४१॥

गुणगणान्वितो भक्तः सात्त्विको भक्तिमान् नरः।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा स्वपदस्थितः॥४२॥

ब्रह्मचारी गृहस्थो वा कृतकृत्यो यथावधिः।
विनयावनतः शिष्य आचाय(र्यं?) प्राप्य ब्राह्मण!॥४३॥

त्वत्प्रसादेन भगवन्! सिद्धिं प्राप्स्यामि मानद!।
दयां कुरु त्वनाथस्य निमग्नस्य भवार्णवे॥४४॥

तदर्थं देहि मां दीक्षां वैष्णवीं परमां प्रभो!।
एवमादि यदा भूयात् करुणं वाक्यसञ्चयम्॥४५॥

प्रवर्तेत तदा धीमान् दीक्षाविधौ गुरुर्मुने!।
वैष्णवी परमा दीक्षा मन्त्रसिद्धार्थप्रापिणी॥४६॥

मुक्तिभुक्तिप्रदात्री च लभेत् शिष्यो गुणान्वितः।
सम्प्राप्य दैक्षं जन्मेदं जातिदोषाद्विमुच्यते॥४७॥

सद्धर्मपालनेनैव सिद्धिं स लभते शुभाम्।
दीक्षितः फलसिद्ध्यर्थं जपेन्मन्त्रं दिने दिने॥४८॥

महतस्तु महाकालः कालश्चाल्पः फले लघौ।
न जातु यस्य कस्यापि क्षुद्रस्यात्मन एव वा॥४९॥

लौकिकेऽर्थे विधिः कार्यः[१] क्षुद्रकृत्यं हि तत्स्मृतम्।
परपीडानिमित्तं यद् वैष्णवः साधयेत् क्वचित्॥५०॥

---

१. कार्यं इति क।

स्वयमेव विनश्यन्ति ह्यापदो विष्णुयाजिनः।
त्रैलोक्यस्याथ[1] रक्षायै शान्तये आततायिनाम्॥५१॥

बहूनां पुष्टये दोषो नास्त्यत्र नारदस्तथा।
मोक्षार्थमात्मनश्चैवं विश्वशान्तिकहेतुकाः॥५२॥

जप्तव्याः खलु मन्त्रास्ते निष्कामेन च सन्ततम्।
फलमर्थयमानोऽपि कामसङ्कल्पवर्जितः॥५३॥

पूजयित्वा परं देवं तत्फलं लभते ध्रुवम्।
केन मन्त्रेण का [2]सिद्धिस्तद्वदिष्यामि नारद!॥५४॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां मन्त्ररात्रे
हृदयाद्यङ्गमुद्रा-मन्त्रदीक्षादिनिरूपणनामा
षष्ठोऽध्यायः।

---

१. त्रैलोक्यग्नयाथ इति क।
२. सिद्धि तद्वदिष्यामि इति क।

## मन्त्ररात्रे सप्तमोऽध्यायः

यथावन्मन्त्रविज्ञानाज्जपाद् ध्यानात् समर्चनात्।
हवनात् तन्मयत्वाच्च यथेष्टं पदमृच्छति॥ १॥

मन्त्रेषु बीजरूपाणां ज्ञानात् स्थैर्यपदं फलम्।
पिण्डादि-भगवन्मूर्ति-मन्त्राणामेवमेव च ॥ २॥

संज्ञापदाख्यमन्त्राणां ज्ञानाल्लौकिकसिद्धयः।
यथेष्टाः प्राप्नुवन्त्यत्र साधका नाऽत्र संशयः॥ ३॥

सबीजं सह पिण्डेन मन्त्राणां यत्र साधना।
विदधति फलं तत्र पदसञ्ज्ञात्मरूपिणः॥ ४॥

क्षेत्ररूपेण व्याप्यत्वात् तेषां फलं तु सिद्ध्यति।
क्षेत्रबीजपिण्डात्मा निरावरणलक्षणः॥ ५॥

ज्ञानं तस्यामलं शुद्धं माध्यमं मोक्षसाधने॥
लौकिकीसाधनायाञ्च बीजं साधनमुच्यते॥ ६॥

साधारणमिदं ब्रह्मन्! यततां मन्त्रसिद्धये।
परव्यूहादिभेदेन सिद्धिं वक्ष्यामि नारद!॥ ७॥

आद्यमन्त्रस्तु[१] सर्वत्र पिण्डबीजात्मकोऽथवा।
केवलो मोक्षदो वाच्यो योगिध्येयो हृदाशये॥ ८॥

---

१. परवासुदेवमन्त्रः इति।

सिद्ध्याख्यं तु फलं तस्मान्नेच्छन्ति योगिनः कदा।
परेषामधिकारस्तु नाऽत्र लौकिककामिनाम्॥ ९॥

तथैव चातुरात्म्यस्य केवलस्याथवा सह।
बीजपिण्डादिभिः सार्धं जप्तस्य फलमस्ति हि॥१०॥

मोक्षदं, लौकिकान् कामान् नेच्छन्ति जापकाः खलु।
भगवद्भाविताः सिद्धाः साधका वा महामते!॥११॥

मोक्षभिन्नं यदुद्दिष्टममिश्रं मिश्रमेव वा।
फलं भाववशाच्चैव तत्तथा प्राप्यते मुने!॥१२॥

व्यूहान्तरेण सिद्धानां केशवादिपरात्मनाम्।
मन्त्रसिद्धिं तु वक्ष्यामि साधारण्येन नारद!॥१३॥

साधकः संयतो भूत्वा मन्त्रव्रतपरायणः।
महोत्साहः शुभाचारो धीरः सर्वगुणान्वितः॥१४॥

पुण्यक्षेत्रेषु तीर्थेषु नदीनां सङ्गमेषु च।
देवतामुनिजुष्टेषु कुर्यात् स्थानपरिग्रहः(हम्?)॥१५॥

यस्य मासाधिपस्यात्र मन्त्रसिद्धिं स इच्छति।
तस्मिन् मासे सिते पक्षे द्वादश्यां पूर्णिमातिथौ॥१६॥

नवम्यामथ पञ्चम्यां साधको व्रतमारभेत्।
सङ्क्रान्त्यामयने चैव विषुवस्थेऽथवा मुने॥१७॥

सूर्यचन्द्रोपरागे वा तथा सितेतरेऽपि च।
ब्रह्मचर्यस्थितो मौनी दुष्टाहारविवर्जितः॥१८॥

क्षारारनालतैलानां पलाण्डुलशुनात्मनाम्।
भक्ष्यभोज्यादियुक्तानां परित्यागी ह्यलोलुपः॥१९॥

विलिख्य मातृकाचक्रं प्रातः ब्राह्मे मनोरमे।
मुहूर्ते साधकः स्वस्थः पुष्पधूपादिभिर्मुने!॥२०॥

अर्घ्यैश्च तत्र मन्त्रेशम् आहूयाऽऽपूज्य संजपेत्।
त्रिरात्रं सप्तरात्रं वा यावत्सिद्ध्येन्मनोरथः॥२१॥

प्रतिवर्षं प्रतिमासं श्रद्धया स्वस्थमानसः।
दशांशैश्च ततो होमं तण्डुलैस्तिलमिश्रितैः॥२२॥

कुशैः समिद्भिराज्येन पुष्टिकार्ये तु संहुनेत्।
विघ्नानां शान्तिकार्ये तु कृष्णपक्षेऽपि संयजेत्॥२३॥

रात्रौ च फलमूलाशी सर्षपैः गुग्गुलेन च।
तिलैः कृष्णैश्च देवर्षे! सिद्धिस्तस्य न संशयः॥२४॥

पितृमोक्षोऽथ यज्ञस्य फलाऽप्तिर्गोधनादिकम्।
लोकत्रयाधिपत्यं वा ब्रह्मवर्चसकामना॥२५॥

इष्टकन्याऽथवा तेज आयुरारोग्यमेव च।
धान्याप्तिर्दुःखनाशञ्च(श्च?) शत्रुजयोऽथ नारद॥२६॥

यद् यदिच्छति मन्त्री स प्राप्नोति मन्त्रमाध्यमात्।
लक्षं वाऽयुतसङ्ख्यं वा जप्यं सिद्धिमभीप्सुभिः॥२७॥

सर्वदोषनिवृत्त्यर्थं प्रायश्चित्तार्थमेव वा।
भगवत्प्रीणनार्थञ्च निष्कामभावनान्वितः॥२८॥

हृत्पुण्डरीकमध्येऽथ स्मरेन्मन्त्रं समाहितः।
तन्मयश्च स्वचैतन्यं कृत्वा तन्मन्त्ररश्मिभिः॥२९॥

मार्तण्ड इव पक्षीश आस्ते मन्त्रस्वरूपधृक्।
लौकिकीं प्राप्य संसिद्धिं ब्रह्म सम्पद्यते स्वयम्॥३०॥

ब्रह्मात्मा ब्रह्मरूपश्च पुनरागच्छति न सः।
व्यूहान्तराणां मन्त्राणां सिद्धयः कथिता मया॥३१॥

विभवमन्त्रसिद्धिस्तु(द्धिं तु?) कथयिष्यामि नारद!।
एकैकामथ तां वक्ष्ये सफलां मोक्षदां तथा॥३२॥

लोकेऽस्मिन् विभवानां तु फलार्थमवतीर्णता।
आवाह्य पूर्वविधिना पूजयेद् भक्तिपूर्वकम्॥३३॥

पाद्यार्घ्यपुष्पधूपैस्तु दानैर्हैमगवादिकैः।
स्रग्वरैः षड्रसैर्युक्तनैवेद्येनाथ नारद!॥३४॥

फलं कामयते यावत् तावत्कालमतीन्द्रियः।
तावत्सङ्ख्येन देवर्षे! जप्यो मन्त्रो यथाविधिः॥३५॥

दशांशेन च यष्टव्यो मन्त्रैर्बीजयुतैर्मुदा।
प्रवालमुक्तामाणिक्यैर्भक्त्या तु विभवे सति॥३६॥

बिल्वैरामलकैः पद्मैः खादिरैः श्रीफलैरथ।
सुरदारुमयैर्ब्रह्मन् समित्खण्डैश्च संहुनेत्॥३७॥

समित्प्रदेशमात्रा तु रक्तचन्दनसम्भवा।
घृताक्ता ब्रह्मवृक्षस्योदुम्बरस्याऽथवा समित्॥३८॥

प्राग्राजार्कतरूत्थानां समिदादाय साधकः।
अथवा कुङ्कुमघृतक्षीरसम्प्लुततण्डुलैः॥३९॥

तिलैर्वाऽऽज्यपरिप्लुतैरथ सिद्धार्थकैर्मुदा।
कुशाङ्कुरैश्च देवर्षे! श्रद्धया संहुनेद् यदा॥४०॥

अचिरात्सिद्धिमाप्नोति यां यां साधक इच्छति।
जप्त्वा विशाखयूपस्य मन्त्रं बीजेन नारद!॥४१॥

सर्वाभीष्टमवाप्नोति लौकिकं पारलौकिकम्।
पद्मनाभस्य मन्त्रस्य प्रभावं शृणु मन्त्रवित्!॥४२॥

विद्यां यशस्करीं शुभ्रां प्राप्नोत्येव न संशयः।
अनन्तमन्त्रजापाच्च सम्पत्तिं विभवं तथा॥४३॥

विपुलं धनमाप्नोति स्वर्गं तस्य तृणायते।
शक्त्यात्मपूजनेनाथ बलमृच्छति स ध्रुवम्॥४४॥

देवैश्च राक्षसैः किं वा पराजय्यो न कर्हिचित्।
किं पुनर्मानुषैर्लोके शस्त्रास्त्रान्वितसैनिकैः॥४५॥

मदुसूदनमन्त्रस्य प्रभावं तु निबोध मे।
दुर्जयानां महर्षीणां देवगन्धर्वरक्षसाम्॥४६॥

अन्तःस्थितानां शत्रूणां पराभाव्यो भवेन्न सः।
बलमतुलमाप्नोति मानसं मन्त्रिराड् मुने!॥४७॥

ब्रह्मविद्याफलं मन्त्री विद्याधिदेवसेवया।
अतर्क्या सिद्धगन्धर्वैः फलमूलाशिभिश्च सा॥४८॥

अब्भक्षैर्वायुभक्षैर्वा साधक ऋच्छति ततः।
कपिलस्य मनोर्जापात् लभतेऽनश्वरं फलम्॥४९॥

संसारं तृणवन्मन्त्री मनुते मन्त्रसिद्धिभिः।
न स्पृहा तस्य लोकेऽस्मिन् अङ्गनारागमण्डने॥५०॥

फलं लब्ध्वा कृतार्थो स प्रभावाद् अमलेक्षण!।
कृपाप्तो विश्वरूपस्य मन्त्रस्य साधकः शुचिः॥५१॥

शृणोति लौकिकान् शब्दान् दूरस्थानपि सोऽचिरात्।
प्राप्नोति पश्यति सर्वं ब्रह्माण्डस्थं तु सत्वरम्॥५२॥

तिष्ठन्नपि स एकत्र विश्वं व्याप्नोति नारद!।
विहङ्गमस्य देवस्य मन्त्रजापाद् विहायसा ॥५३ ॥

गति(तिं?) प्राप्नोति मन्त्रेशः स्वर्गं गच्छति चाञ्जसा।
भूर्भुवःस्वःजनेष्वत्र स्वयं विहरति मुने! ॥५४ ॥

अप्रतिरोधिनीशक्तिं वायवीमृच्छति शुभाम्।
क्रोडात्मनो मनोः विप्र! जपाद् विजयते ध्रुवम् ॥५५ ॥

पृथिव्यां[1] पृथ्वीपालः शीघ्रं भवति साधकः।
शत्रवो वशमायान्ति नोत्पद्यन्तेऽथारयः[2] ॥५६ ॥

वडवावक्त्रः प्रसन्नः स्याज्जापान्मन्त्रस्य तस्य वै।
सर्वे देवाः प्रसन्नाः स्युरिष्टं प्राप्नोति स ध्रुवम् ॥५७ ॥

आनुकूल्याच्च[3] देवानां वृष्टिकामोऽथ साधकः।
सद्यो वृष्टिमवाप्नोति वह्निर्न दहते तथा ॥५८ ॥

सूर्यस्तस्य सदा भाति चन्दनमिव शीतलः।
कुबेराद् धनमाप्नोति प्राप्तञ्च रक्षति दिशा ॥५९ ॥

धर्ममन्त्रस्य देवर्षे! जपाद्यज्ञाच्च मन्त्रिराट्।
साधकः शमतां दान्तिं सौमनस्यञ्च चेतसः ॥६० ॥

प्राप्नोति यच्च देवानामप्राप्यं साधनैः शतैः।
वागीश्वरप्रसादात्तु मूको वाचस्पतिर्भवेत् ॥६१ ॥

किं वा साधकसंस्पर्शादन्योऽपि फलमाप्नुयात्।
आगमान् निगमान् सद्यो भाषते विदुषांवरः ॥६२ ॥

एकार्णवे च यो(यः) शेते तस्य देवस्य मन्त्रराट्।
जपते यस्तु श्रद्धालुः सञ्जीवनी(नीं?) स प्राप्नुयात् ॥६३ ॥

---

१. पृथ्वीं इति क।
२. नोत्पद्यतेऽथारयः इति क।
३. आनुकुल्याच्च इति क।

मृतोऽपि जीवति सद्योऽमृतत्वं लभते तथा।
कूर्मदेवस्व कार्यं तु स्थैर्यं राज्यस्य भूपते:[1] ॥६४॥

यशसो वा भूमावत्र मन्त्रार्थिणो(नो?) महामते!।
वाराहस्य प्रभावेण मनोर्यज्ञफलं शुभम् ॥६५॥

शीघ्रमृच्छति यज्ञान्ते विजयं लभते तथा।
नारसिंहस्य मन्त्रस्य प्रभावं शृणु नारद ॥६६॥

दुष्टानां दुःखदातॄणां रक्षसां मारणं भवेत्।
स्तम्भनं वा वशीकार्यम् इच्छति लभतेऽचिरात् ॥६७॥

अमृताहरणो देवः प्रयाति भेषजं शुभम्।
आयुरारोग्यमायुष्यं मन्त्रार्थिभ्यः प्रयच्छति ॥६८॥

रोगानां दुष्प्रभावानां नाशकः स तु मन्त्रराट्।
आनन्दं वाञ्छितां सिद्धिं लक्ष्मीं श्रीपतिदैवतः ॥६९॥

मन्त्र आप्नोति ब्रह्मज्ञ! मान्त्रिकाय सदा स्थिरम्।
कान्तात्मनः प्रभावात्तु शरीरं भवति दृढम् ॥७०॥

सौन्दर्यं लभते कान्तिं मायिकानां जयं तथा।
वशीभवन्ति दैत्येन्द्राः प्रभावादस्य नारद! ॥७१॥

राहुजिन्मन्त्रराजस्य फलं भीतिविभेदनम्।
अत्युग्रेभ्यो ग्रहेभ्यश्च रक्षति मान्त्रिणं मनुः ॥७२॥

कालनेमिघ्नदेवस्य कृपया मन्त्रसाधकः।
दुष्टान् जयति लोकेऽस्मिन् स्वर्गेऽधस्तात्तथा मुने! ॥७३॥

पारिजातहरः स्वामी प्रसीदति यदा तदा।
मन्त्रीशः फलमाप्नोति स्वर्गसम्पत्तु सत्वरम् ॥७४॥

---

१. भूपते इति क।

दीर्घायुष्यञ्च लोकेऽस्मिन् अश्नुते तत्सुखं मुदा।
लोकनाथस्य मन्त्रस्य जापकः योऽभिवाञ्छति ॥७५॥

मनःस्थैर्यं प्रसादञ्च सन्तोषमृच्छति ध्रुवम्।
दत्तमन्त्रप्रभावेण वर्णाश्रमीयवर्ष्म सः ॥७६॥

प्राप्त्वाऽपकीर्तिमत्युग्रां प्रतिबध्नाति साधकः।
धर्मस्थैर्येण लोकेऽस्मिन् सत्यं तस्य वचो भवेत् ॥७७॥

न्यग्रोधशायिनो मन्त्रं जपते यस्तु कामभुक्।
विश्वदर्शनमेकत्र स्थितावपि स ऋच्छति ॥७८॥

शक्त्यैवात्र स जानाति लौकिकं पारलौकिकम्।
एकशृङ्गतनुर्देवः संसारार्णवतारकः ॥७९॥

जपेन तस्य मन्त्रस्य प्रलयेऽपि स रक्षति।
वामनस्य प्रतापेन पृथिवीं जयते जनः ॥८०॥

बौद्धिकीं शक्तिमाप्नोति छलयितुञ्च राक्षसान्।
दुष्टानाञ्चागमानाञ्चाजेयो भवति साधकः ॥८१॥

त्रिविक्रमतनुर्देवः यस्योपरि प्रसीदति।
प्रभावं स तु प्राप्नोत्यपरिमितमक्षयम् ॥८२॥

नरमन्त्रप्रसादेन वशी खानां स जायते।
सहस्राप्सरोभिश्च न लुभ्यते[1] स साधकः ॥८३॥

नारायणप्रभावेन(ण?) परमानन्दमृच्छति।
नास्य शोको न चोद्वेगो दुःखेऽपि दुष्टरक्षसाम् ॥८४॥

हरिर्हरति पापानि दुष्टचित्तैरपि स्मृतः।
यौगिकीं सिद्धिमाप्नोति तन्मन्त्रजापको यतिः ॥८५॥

---

१. लुप्यते इति ख।

कृष्णस्तु कर्षणाद् देव आर्षं राति फलं मुने!।
ब्राह्मीं स्थितिं च सिद्धायालभ्यां तां यक्षराक्षसैः॥८६॥

मनीषि-सिद्ध-गान्धर्वैस्तपस्वि-दानिभिस्तथा।
प्रयच्छति प्रसादेनावृत्तिस्तस्य न जायते॥८७॥

परशुरामदेवस्य प्रसादात् परमात्मनः।
शत्रून् दमयते सिद्धः छिनत्ति स भवाटवीम्॥८८॥

राममन्त्रस्तु लोकेऽस्मिन् दाति सौख्यं महामते!।
मनस आत्मनश्चापि देहस्यापि महामनुः॥८९॥

यथेष्टं तनुमाप्नोति प्रसादात्तस्य साधकः।
वेदविन्मन्त्रमाहात्म्यं निबोध गदतो मम॥९०॥

वेदानामागमानाञ्च रहस्यं दुर्लभं भुवि।
ऋच्छति परमार्थाञ्च शक्तिं प्राप्नोति सत्वरम्॥९१॥

कल्किः राति शुभं सर्वं यतये हन्ति दुःखदम्।
अशुभं साधकायात्र प्रतिबध्नाति किञ्चन॥९२॥

नैवं कदापि कुत्रापि मन्त्रमाहात्म्यतो मुने!।
पातालशायिनो मन्त्रं जपन्ते ये फलार्थिनः॥९३॥

तेषां सर्पादिकं विषं नैव दुखं प्रयच्छति।
यथेष्टं गच्छति मन्त्री पाताले भोगभाजने॥९४॥

वैभवानां तु देवानां मन्त्रवैभवमत्र मे।
कथितं नारद! तुभ्यं किमन्यच्छ्रोतुमर्हसि॥९५॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां
मन्त्ररात्रे मन्त्रसिद्धिवर्णननामा
सप्तमोऽध्यायः।

## मन्त्ररात्रेऽष्टमोऽध्यायः

नारदः पप्रच्छ

मन्त्राणां विविधानां मां( मे ?) विविधं कथितं फलम्।
ऐहिकं मोक्षरूपञ्च भौतिकमाधिभौतिकम्॥ १॥

मानसं तनुजं वाऽत्र दैविकं लाङ्गलिन्! त्वया।
त्वमेवासि समर्थोऽस्मिन् मन्त्रफलं हि बोधितुम्॥ २॥

शास्त्रार्थान् रहसि बोध्यान् जानासि तन्त्रपारग!।
वासुदेवप्रसादात्तु कृपाहेतोः प्रभो! मयि॥ ३॥

जनानां श्रेयसे ब्रह्मन्! करुणोदधि! वत्सल!।
फलं सर्वमथैकस्मिन् मन्त्रेऽस्ति चेन्निबोध मे॥ ४॥

येन मन्त्रेण सिद्धेन मन्त्री निःसंशयो भवेत्।
इच्छन् अथाप्यनिच्छन् वा रक्षति सर्वथा मनुः॥ ५॥

सर्वथा पुष्टिदो मन्त्रः शान्तिदोऽधर्मतस्तथा।
मातुरिव स निर्हेतुः प्रेमदाता हि मन्त्रिणः॥ ६॥

पितुरिव च पुष्ट्यर्थं यत्नशीलो भवेन्मनुः।
सर्वसुखप्रदातृत्वं मन्त्रस्य स्वपतिरिव॥ ७॥

सर्वविद्याफलप्राप्तिः शिष्यस्य स्वगुरोरिव।
किं बहुना हरेस्तुल्यं योगक्षेमप्रदो भवेत्॥ ८॥

शङ्कानां विविधानाञ्च भक्तानां श्रेष्ठकर्मिणाम्।
नाशकमभिधेह्यत्र मन्त्रं शान्तिर्भवेत् सदा॥ ९॥

एकं त्वत्र मया पृष्टमन्यच्चाप्यत्र पृच्छ्यते।
ये च त्वदाश्रयं प्राप्ताः सकामा भक्तमण्डलाः॥१०॥

लौकिकफलप्राप्त्यर्थं यततां प्राणिनां हलिन्!।
नाऽन्यत्र त्वद्विना ब्रह्मन् गन्तव्यं स्यात् फलाप्तये॥११॥

तदर्थं यदवशिष्टं मन्त्रवृन्दं निबोध वै।
तदपि मां प्रभो! लब्धं वासुदेवप्रसादतः॥१२॥

**सङ्कर्षण उवाच**

साधु पृष्टं त्वया ब्रह्मन्! श्रेयसे प्राणिनां द्विज!।
यस्य मन्त्रस्य लाभाद्धि प्राप्नुयात् साधकः खलु॥१३॥

अवाप्तव्यं समस्तं वै त्वयोक्तं तद्धि विस्तरात्।
मन्त्राणां पञ्चकं विप्र! आख्यास्ये सर्वलाभदम्॥१४॥

प्रणवः[1] केवलस्त्वत्र प्रथमं विद्धि नारद!।
सन्ति मन्त्रास्तु सर्वेऽपि निहिता बीजवृक्षवत्॥१५॥

फलदा मोक्षदाश्चैवं विघ्नशमनहेतुकाः।
यस्योच्चारणे नास्ति नियमः कश्चनो मुने!॥१६॥

यत्रार्घ्यपुष्पधूपादि फलमूलादिकं तथा।
सुगन्धतैलरत्नादिवैभवमपि सर्वथा॥१७॥

नावश्यं नैव योज्यञ्च हृदयादिषडङ्गकम्।
हुंफडादियुतं ब्रह्मन् घृताक्तैस्तण्डुलादिभिः॥१८॥

सिद्धार्थकान्वितैर्होमो नावश्यको हि नारद!।
तारको नाम यो भावः सारः सर्वगिरामयम्॥१९॥

---

१. ॐकारः स्वयमेव मन्त्र इत्यर्थः।

प्रभवन्ति ह्यतः शब्दा अपियन्ति च[1] तं पुनः।
अनेनाप्यायिताः शब्दा भावं पुष्णन्ति च स्वकम्॥२०॥

ओतमस्मिन् मितं सर्वं चिदचिदात्मकं जगत्।
अकाराद्यक्षरास्त्वत्र शक्तिरूपेण सम्मताः॥२१॥

अकारशक्तिर्विश्वाख्या उकारोत्था तु तैजसी।
मकारशक्तिः प्राज्ञाख्या पराख्या चार्धमात्रका॥२२॥

चातुरात्म्यं तथा व्यूहं यस्मिन् सर्वं प्रतिष्ठितम्।
अकारो ह्यनिरुद्धोऽत्र प्रद्युम्नः पञ्चमः स्वरः॥२३॥

मकारादहमुद्दिष्टो वासुदेवोऽर्धमात्रकः।
ओमित्युच्चरतः सम्यक् शक्तिः प्रादुर्भवेच्छुभा॥२४॥

प्राप्य तां साधको लोके यथेच्छं लभतेऽचिरात्।
ब्रह्मलोकञ्च गच्छेत् स वासुदेवप्रसादतः॥२५॥

षडक्षरो द्वितीयस्तु मन्त्रं वच्मि महामुने!।
प्रणवं पूर्वमुद्धृत्य नेमिपञ्चममाहरेत्॥२६॥

नाभितृतीयेनाक्रान्तं बाह्यञ्च सप्तमं ततः।
अष्टमात् प्रथमं वाच्यं स्वराद्येन तथाङ्कितम्॥२७॥

पञ्चमञ्च ततो नेमेरेकादशस्वराश्रितम्।
प्रणतिपूर्वको मन्त्रस्त्रिपदश्च षडक्षरः[2]॥२८॥

प्रणवार्थो मया प्रोक्तोऽन्यपदार्थान् अथ शृणु।
व्याप्नोति सकले विश्वे चेतनाचेतनादिषु॥२९॥

जायते चैव यस्मात् तत् समवैति च तत्र हि।
पुरुषार्थञ्च प्रस्नौति सदा सद्भ्यश्चतुर्विधम्॥३०॥

---

१. य इति क।
२. ॐ विष्णवे नमः इति।

विष्णुस्तदेव व्याख्यातो नमस्कारार्थकं शृणु।
मत्परो भगवान् नित्यम् अवरोऽस्मि ततो ह्यहम्॥३१॥

भावोऽयं नमसः प्रोक्तः कथयिष्यामि वर्णकान्।
यत्किञ्चित् प्राप्यते वस्तु फलं वा हेतुपूर्वकम्॥३२॥

शुभं वाऽशुभमात्मीयं ममत्वं भवति ततः।
तदेतन्नास्ति किञ्चिन्मे नम इत्यर्थभावना॥३३॥

मन्त्रोऽयं सर्वदा जप्यः शुभेऽशुभेऽपि सर्वथा।
रक्षति पितृवन्मन्त्रः प्रीणाति मातृवत्तथा॥३४॥

अष्टाक्षरस्तृतीयो हि मन्त्रो नारद! सर्वगः।
नतिप्रणवसंयुक्ते पदे द्वे तत्र पूर्ववत्॥३५॥

तृतीयमत्र वक्ष्यामि स्वरद्वितीयपूर्वकम्।
दशमादपरं योज्यं नेमेस्तथा तृतीयकम्॥३६॥

द्वितीयं नाभिपूर्वञ्च प्रथममष्टमात्ततः।
द्वितीयादपरं पश्चात् पुनर्नेमेर्द्वितीयकम्॥३७॥

स्वराद्यमत आदाय त्रिपद[1]मन्त्रमुद्धरेत्।
नारा नरस्य संसर्गाद् नरस्तु पुरुषोत्तमः॥३८॥

विज्ञानं नयति सर्वं नाशयत्यखिलं तमः।
नाराणामयनं वासं यस्मिन् स लभ्यते मनोः॥३९॥

अर्थस्त्वत्र सुविज्ञेयो नाराणां स परा गतिः।
आपो नारा इति प्रोक्ता आपो वै नरसूनवः॥४०॥

तेषु चैवायनं यस्य मन्त्रार्थमवधेहि तत्।
सर्वलभ्यस्तु मन्त्रोऽयं काले देशे च सर्वथा॥४१॥

---

१. ॐ नमो नारायणाय इति।

फलं सर्वं समाप्नोति प्रसादादस्य नारद!।
तुर्यं मन्त्रं कथिष्यामि[1] द्वादशाक्षरवर्णक:(कम्?)[2] ॥४२॥

द्वयं पदं तु पूर्वोक्ताद् अनुवर्त्यं महामते।
अरान्तं प्रथमं योज्यं द्वितीयात्प्रथमं ततः ॥४३॥

आक्रान्तं नाभिपूर्वेण द्वयं कुर्यात् तपोनिधे!।
तृतीयार्णं तदाक्रान्तं बहिष्ठपञ्चमं तथा ॥४४॥

अष्टमात्परमुद्धृत्य स्वरैकादशभूषितम्।
पदं परार्थकं[3] ग्राह्यं ततो देवान्तमेव च ॥४५॥

चतुर्थ्यन्तमलङ्कृत्य जपं कुर्यात् सदा जपी।
मन्त्रोऽयं सर्वथा योज्यः क्रियासु यत्र कुत्रचित् ॥४६॥

बिभर्ति सकलं विश्वं गीयते पाञ्चरात्रिकैः।
त्रयीकर्मात्मभिश्चैवं प्रोच्यते यागकर्मणि ॥४७॥

वहति चिदचिद्भारं त्रायते यो[4] निजाश्रितान्।
मन्त्राक्षरैर्मुनिमान्यैर्लभ्यतेऽर्थो महर्षिभिः ॥४८॥

विश्वं यतो वसत्यस्मिन् विश्वे च वसति प्रभुः।
दीप्यते स्वत एवायं महासृष्टौ रतः स्वयम् ॥४९॥

प्रार्थ्यते च सदा देवैः देवार्थोऽयं समीरितः।
कामानां यो प्रदाताऽस्ति देहिनां शोधकस्तथा ॥५०॥

रक्षकः सर्वभूतानां वोढा च सकलात्मनाम्।
देवशब्देन गन्धर्वैः सिद्धैश्च संस्तुतो हरिः ॥५१॥

---

१. कथयिष्यामि इति ख।
२. ॐ नमो भगवते वासुदेवाय इति।
३. 'वासु' इति सत्या, भामा इतिवत् परार्थकं वासुदेवशब्दस्य पदं तद् ग्राह्यमित्यर्थः।
४. य इति क।

सार्वत्रिको हि मन्त्रोऽयं मोक्षान्तं फलमाप्नुयात्।
जापको मनसा नित्यं शान्तेन जपति यदा ॥५२॥

पञ्चममपि मन्त्रं त्वमवधेहि फलप्रदम्।
द्वात्रिंशार्णस्तु[1] मन्त्रोऽस्ति जितं प्रथममाहरेत् ॥५३॥

ते पदं पुण्डरी चैवं काक्षं[2] संयोजयेत्ततः।
नमस्ते पदमादाय विश्वञ्च तदनन्तरम् ॥५४॥

भावन तदनु दद्यात् नमस्तेऽस्तु तथाहरेत्।
हृषीकेश चतुर्वर्णं महापुरुष ब्राह्मण! ॥५५॥

पूर्वजान्तं पदं दत्त्वा मन्त्रार्थं व्याहरेत् सदा।
चतुष्पादात्मको मन्त्र एकादशपदात्मकः ॥५६॥

चातुरात्म्यन्तु मन्त्रेऽस्मिन् निहितं सह शक्तिभिः।
यत्फलं लभते यज्वा राजसूयादिभिः शतैः ॥५७॥

तत्फलं साधकस्त्वस्य मन्त्रस्योच्चारणाल्लभेत्।
पञ्चैते व्यापका मन्त्रास्तन्त्रेऽस्मिन् तु प्रकीर्तिताः ॥५८॥

पञ्चस्वपि न भेदोऽस्ति फलेऽर्थे सर्वथा मुने!।
तवाद्यस्य तु प्रश्नस्य समाधानमिदं भवेत् ॥५९॥

वासुदेवेन प्रोक्तत्वाद् महिमानं तु साधकः।
कथं प्राप्नोति पारं तु व्यापकास्तमसः पराः ॥६०॥

मिथ्याज्ञानादीनां सद्यो नाशका भवतारकाः।
पूज्या ध्येयास्त्विमे मन्त्रा सिद्धगन्धर्वकिन्नरैः ॥६१॥

भवब्रह्मादिभिर्देवैर्मर्त्यैस्तु किमु कथ्यते।
तस्मात् सर्वप्रयत्नेन जप्य एतेषु कश्चन ॥६२॥

---

१. जितं ते पुण्डरीकाक्ष! नमस्ते विश्वभावन!।
नमस्तेऽस्तु हृषीकेश! महापुरुष! पूर्वज!॥ इति जितन्तामन्त्रः।

२. काङ्क्षं इति क।

मन्त्रास्तु त्रिविधा विप्र! सात्त्विका राजसास्तथा।
तामसास्तत्र पञ्चोक्ता व्यापकाः सात्त्विका मताः॥६३॥

फलं यच्छन्ति सर्वं ते नेच्छति साधकः फलम्।
वासुदेवप्रसादाच्चानिच्छन् वै लभते यती॥६४॥

परव्यूहाख्यमन्त्राश्च सात्त्विकाः कथिताः शुभाः।
मोक्षाख्यं फलमग्र्यं तु रान्ति ते मन्त्रिणेऽचिरात्॥६५॥

मनसः सौमनस्यञ्च स्वात्मनः शान्तिमेव च।
वैभवाः कथितास्तुभ्यं राजसास्ते प्रकीर्तिताः॥६६॥

साधकानां राजसत्वाद् दोषा मन्त्रेषु सन्ति न।
फलं यच्छन्ति मन्त्रास्ते राजसं वैभवं द्विज!॥६७॥

पारिवारिकान् मन्त्रान् तामसान् संवदाम्यथ।
तामसा अपि भक्ता ये कामयन्ते हि तान् इह॥६८॥

भूषणाख्याश्च[1] शस्त्राख्याः सम्बन्धात् परब्रह्मणः।
दिव्यशक्त्यन्विता लोके ददति स्वेच्छितं फलम्॥६९॥

सात्त्विकं राजसं वाऽपि तामसमपि नारद।
भयस्तत्राऽधिको ज्ञेयः साधने घोरकर्मणि॥७०॥

वासुदेवेन सार्धं च पूजने निर्भयो भवेत्।
साधको मन्त्रणात् तेषां केवलानां यथामतिः॥७१॥

साधने दुर्गमत्वं तु क्षतौ दुःखं शताधिकम्।
वैष्णवः कामनां त्यक्त्वा निर्भयोऽतो हरिं भजेत्॥७२॥

इत्येवं पाञ्चरात्रस्य सिद्धान्तोऽस्ति मतो महान्।
तथाऽपि साध्यकामे तु परिवारं प्रपूजयेत्॥७३॥

---

१. ख्यास्तु इति ख।

किरीटः कौस्तुभो दिव्यः श्रीवत्सोऽमृतलक्षणः।
वनमाला पक्षिराट् च चक्रं शङ्खस्तथा गदा॥७४॥

पद्मश्चेति हरेर्मुख्या[१] आराध्याः पारिवारिकाः।
गुरोर्मुखात् तु विज्ञेया साधना चास्य नारद!॥७५॥

स्वातन्त्र्येण कृतौ चास्यां विघ्नानि स्युर्न संशयः।
विधिं त्वत्रातिसंक्षेपान्मन्त्रं सिद्धिश्च ब्राह्मण!॥७६॥

कथयिष्यामि चेदिच्छा विस्तरात् तान्त्रिकाद् गुरोः।
वैष्णवात् प्रापणीयानि नाऽत्र मेऽस्त्यधिका रुचिः॥७७॥

प्रणवं पूर्वमादाय 'क्रं'बीजेन स भूषयेत्।
सहस्रदीधितिपदं तेजस्तु द्व्यक्षरं ततः॥७८॥

विग्रहाय किरीटाय मन्त्रोऽयं षोडशाक्षरः[२]।
सौम्यं चतुर्भुजं ध्यात्वा कोटिसूर्यसमप्रभम्॥७९॥

तरुणादित्यवद् देहं पञ्चलक्षं जपेच्छुचिः।
मध्याह्ने सरितस्तीरे निश्चलीकृतमानसः॥८०॥

जुहुयात् कुङ्कुमेनैव[३] समध्वाज्यपरिप्लुतम्।
मन्दारकुसुमप्रौढमच्युतं द्विजपुङ्गव!॥८१॥

होमान्ते स लभेत्सिद्धिं शोभा शारीरिकी शुभा[४]।
वृद्धोऽपि यौवनं लब्ध्वा सुन्दरीचित्तमोहकः॥८२॥

लोके च ज्ञातिबन्धूनां स किरीटवदग्रणीः।
राज्ये चैवं न तस्य स्यादवमानं कदापि वै॥८३॥

---

१. हरेमुख्या इति क।

२. ॐ 'क्रं' सहस्रदीधितितेजोविग्रहाय किरीटाय नमः।

३. कुकंमेनैव इति क।

४. शोभां शारीरिकीं शुभां?

'क्रों' बीजं छन्दसामाद्यं[1] विपर्ययेण चाङ्कयेत्।
आदाय वाञ्छितपदं ततो ह्यर्थप्रदाय च॥८४॥
प्रभात्मने पदं दद्यात् कौस्तुभायेत्यनन्तरम्।
पदं देयं तु शास्त्रज्ञ! मन्त्रः पञ्चदशाक्षरः[2]॥८५॥
इन्दुबिम्बनिभं देहं ध्यायेद् देवं चतुर्भुजम्।
राजाढ्यं कान्तरूपञ्च [3]शङ्खचक्रगदाधरम्॥८६॥
निधिकुम्भयुतं मन्त्री लक्षषट्कं जपेत् ततः।
जपान्ते जुहुयान्मौनी ह्युपांशुमन्त्रजापकः॥८७॥
बिलाग्रेऽस्तङ्गते सूर्ये दाडिमायुतपञ्चकम्।
पूर्णाहुत्यवसाने तु निधिकुम्भयुतः पुमान्॥८८॥
दिव्यरसायनं लब्ध्वा जायते नेत्रगोचरः।
महार्घ्याणि सुरत्नानि मन्त्रिणे सम्प्रयच्छति॥८९॥
यल्लब्ध्वा नाऽपरं लोके रत्नं प्राप्तव्यमीहते।
कौस्तुभमन्त्रसिद्धिर्मे दर्शिता भृगुलाञ्छनम्॥९०॥
श्रीवत्सं शृणु देवर्षे! ध्यायेन्नीलाम्बुदच्छविम्।
रक्तवस्त्रधरश्चासौ गदाचक्रधरस्तथा॥९१॥
शङ्खधृक् वामहस्तश्चाभयप्रदस्तु मन्त्रिणे।
ध्यायेत्तं पूजयेद् भक्त्या पाद्यार्घ्यधूपदीपकैः॥९२॥
वच्मि मन्त्रं महासिद्धं प्रणवं प्रथमं मुने!।
'त्रं' बीजं तत आदाय सर्वसम्पत्पदं ततः॥९३॥
पदाय श्रीनिवासाय श्रीवत्सायेति संहरेत्।
षोडशार्णस्तु[4] मन्त्रोऽयं सिन्धुतीरे जपेद् द्विज!॥९४॥

---

१. छन्दसामाद्य इति क।
२. ॐ 'क्रों' वाञ्छितार्थप्रदाय प्रभात्मने कौस्तुभाय नमः।
३. अधोरेखायुतं ख-मातृकायामेवोपलभ्यते।
४. ॐ 'त्रं' सर्वसम्पत्पदाय श्रीनिवासाय श्रीवत्साय नमः।

सप्तलक्षं फलाहारी पौर्णमास्यां महामते!।
जपान्ते शङ्खमादाय तदन्तर्मधुना हुनेत् ॥९५॥

पञ्चायुतं घृतेनैवं श्रीवत्सस्तु प्रसीदति।
रत्नान्यादाय स्वयं देवो रत्नाकरः प्रयच्छति ॥९६॥

पूर्णिमायाञ्च रत्नानां श्रीवत्सार्चाऽनन्तरम्।
पूजने तस्य मन्त्रेण सफलाः स्युर्मनोरथाः ॥९७॥

ॐकारं प्रथमं दद्यात् 'स्त्रीं' बीजं ततो भूषयेत्।
सौभाग्यशब्दमादाय जनन्यै त्र्यक्षरं ततः ॥९८॥

वनमाला तु चतुर्थ्यन्ता वर्णा एकादशात्र[1] वै।
नीलनीरजवर्णा सा प्रसन्नवदनेक्षणा ॥९९॥[2]

पीताम्बरधरा ध्येया चित्रपुष्पान्विता तथा।
पुष्पोद्यानेऽथ जप्या सा सिते पक्षे पयोभुजा ॥१००॥

अष्टलक्षं जपं कृत्वा दशांशं होममाचरेत्।
पयोघृतविमिश्रेण तण्डुलेनाऽथ कामुकः ॥१०१॥

जातिचम्पकपुष्पाणां कदम्बानां तु होमयेत्।
अयुते द्वे ततः सिद्धिं मालाख्यामृच्छति यतिः ॥१०२॥

दिव्यां दिव्यसुगन्धाढ्यां नित्या.........

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां
मन्त्ररात्रे सिद्ध्यन्तरवर्णननामा
अष्टमोऽध्यायः।[3]

**इति मन्त्ररात्रं समाप्तम्।**



१. ॐ 'स्त्रीं' सौभाग्यजनन्यै वनमालायै नमः।
२. इत आरभ्याधोरेखास्थं १०० ABC पर्यन्तं ख-मातृकायामेवोपलभ्यते।
३. पुष्पिका उभयमातृकयोर्नास्ति।

# आचाररात्रम्

## प्रथमोऽध्यायः

**नारद उवाच**

श्रुता मन्त्राः प्रभो! सर्वे त्वत्प्रसादान्मयाऽनघ!।
सबीजाः सिद्धियुक्ताश्च[1] पिण्डसञ्ज्ञाभिधास्तथा॥ १॥

आसृष्टेरपि मन्त्राणां सत्ताऽन्येषां धरातले।
फलमेकान्तिकं तेषां कथं न प्राप्यते खलु॥ २॥

मन्त्रेऽथवा प्रयोगे वा न्यूनता स्यान्निरञ्जन!।
किं वा मन्त्रविदां नृणां दोषग्रस्तं हि जीवनम्॥ ३॥

त्वदुक्तानां मनूनां नो तादृशी स्यात् परिस्थितिः।
तदर्थं मन्त्रिभिः भूमन्! किं कार्यं वसुधातले॥ ४॥

तदाख्याहि परात्मन् मां येन निश्चिन्तमानसाः।
भुवि तावकीनान् मन्त्रान् जप्त्वा सिद्धिमवाप्नुयुः॥ ५॥

**सङ्कर्षण उवाच**

सामर्थ्यं देवतानां यद् यादृक् तादृग् फलं मुने!
दीयते मन्त्रिणेऽवश्यं प्रयोगस्य यथार्थतः॥ ६॥

जापकस्य सदाचारो हेतुस्तत्रापि नारद!।
निषिद्धाचरणत्वाद्वा वैधाऽनाचरणत्वतः॥ ७॥

---

१. पिण्डयुक्ताश्च इति क।

फलं नैव भवेद् ब्रह्मन्! पातकी स्यात्तु साधकः।
सदाचारस्तु धर्मोऽस्ति तन्त्रैर्यः प्रतिपादितः॥ ८॥

ऋषिभिः सिद्धि(द्ध?)गन्धर्वैः पञ्चरात्रविशारदैः।
आचाराल्लभते [1]कीर्तिमाचाराल्लभते धनम्॥ ९॥

आचारात् पूज्यते लोके ह्यनाचारी तु निन्द्यते।
सदाचारे हि सर्वोऽर्थो नाचारादधिकं भुवि॥१०॥

तस्मात्सर्वप्रयत्नेन सदाचारी भवेन्नरः।
मन्त्रं मन्त्रार्थयुक्तश्च फलं प्राप्नोति संयतः॥११॥

**नारद उवाच**

आगमे कः सदाचारः कतिविधः स उच्यते।
लक्षणं किं कथं प्राप्यो वैष्णवैस्तन्निबोध मे॥१२॥

सदाचारस्य माहात्म्यं श्रुत्वा मनः प्रसीदति।
आचारो द्विविधो विप्र! सामान्यश्च विशेषकः॥१३॥

साधारणस्तु सर्वेषां वैष्णवानां हि कथ्यते।
वासुदेवे परा भक्तिः श्रद्धाऽऽस्तिक्यश्च सेवनम्॥१४॥

वासुदेव(वः?) परं ज्ञानं वासुदेवः परा गतिः।
वासुदेवः परा चिन्ता वासुदेवः परा क्रिया[2]॥१५॥

अनन्यभावना तस्मिन् नान्यस्मिन् देवतागणे।
परिवारतया मान्या अनर्च्यास्तु प्रधानतः॥१६॥

स एव प्रथमो धर्मः सदाचारश्च[3] कथ्यते।
तद्धर्मरक्षणं येन विघ्नोपशमनं तथा॥१७॥

---

१. कीति इति क।

२. ख-मातृकायां 'वासुदेवः परा क्रिया' इति द्वितीयं चरणम्, चतुर्थश्च 'वैष्णवानां हि कथ्यते' इति।

३. सादाचारश्च इति क।

नियमाचरणेनाऽपि स सेव्यो नेतरः क्वचित्।
सामान्यो द्विविधः प्रोक्तो बाह्य आभ्यन्तरस्तथा ॥१८॥

आभ्यन्तरो मनोगम्यो गम्यो ज्ञानेन्द्रियैर्द्विज!।
सौम्यता मृदुता मैत्री कारुण्यञ्च कृतज्ञता ॥१९॥

तितिक्षा चोपकारित्वं धृतिः श्रद्धा प्रसन्नता।
एषाञ्च ये विभागाः[1] स्युः मानसाचार उच्यते ॥२०॥

श्रद्धावान् लभते ज्ञानं श्रद्धावान् साधुसम्मतः।
श्रद्धा धर्मः परः सूक्ष्मः श्रद्धा दानं परं तपः ॥२१॥

श्रद्धा स्वर्गश्च मोक्षश्च श्रद्धा सर्वमिदं जगत्।
शास्त्रमात्ररसाः सूक्ष्मा विधिनिषेधतत्पराः ॥२२॥

श्रद्धामात्रेण गृह्यन्ते न करेण न चक्षुषा।
श्रद्धा मातेव सर्वेषां ज्ञानवैराग्ययोस्तथा ॥२३॥

श्रद्धया साध्यते धर्मो नान्योपायेन केनचित्।
धर्मार्थकाममोक्षाणां श्रद्धा परमसाधनम् ॥२४॥

तस्मात् श्रद्धान्वितैर्भाव्यं श्रद्धाहीनो पतत्यधः।
श्रद्धया वासुदेवस्य प्रसादः स्यादसंशयम् ॥२५॥

प्रसादो मानसस्तस्मान्नारद! स्यादसंशयम्।
प्रसादे मानसाचाराः प्राप्यन्तेऽन्ये निरूपिताः ॥२६॥

तस्मात् श्रद्धा प्रसादश्च मुख्यौ गुणौ व्यवस्थितौ।
श्रद्धया यत्नशील(ला?)स्तु वासुदेवप्रसादतः ॥२७॥

संप्राप्य मानसीं शान्तिं मात्सर्यं लोभमेव च।
कामं क्रोधं तथा लोभं[2] जयन्ति नाऽत्र संशयः ॥२८॥

---

१. विभागा इति क।
२. मोहं इति ख।

बाह्याचारमहं वक्ष्ये भक्तिकार्योपकारकम्।
वचसा कर्मणा नित्यं पालनीयो मुमुक्षुभिः॥२९॥

परापवादं पैशुन्यमनृतं च न भाषते।
अन्योद्वेगकरं वाक्यं परनिन्दात्मकं तथा॥३०॥

सत्यं प्रियं हितं वाच्यं गुणवार्तासु सर्वथा।
धर्मवार्तासु सर्वासु पाञ्चरात्रविदा सदा॥३१॥

न ताडयति नो हन्ति प्राणिनोऽन्यांश्च[1] देहिनः।
मनसा वचसा वाऽपि कर्मणा धर्मतत्परः॥३२॥

देवद्विजगुरूणाञ्च शुश्रूषासु सदोद्यतः।
मद्यान्मांसात् पारदार्यात् स्तेयाच्च विरतः सदा॥३३॥

अभक्ष्यभोजनाच्चैवं मनसाऽपि दिवानिशम्।
यथात्मनि यथा पुत्रे सर्वभूतेषु यस्तथा॥३४॥

हितकामो हरिस्तेन सर्वदा तोष्यते सुखम्।
साधारणान् सदाचारान् उक्त्वा वच्मि विशेष्यकान्॥३५॥

वर्णकुलाच्च देशाच्चाश्रमात् सन्ति पृथक् पृथक्।
ब्राह्मणः क्षत्रियो वैश्यः शूद्रश्चेति[2] चतुर्विधाः॥३६॥

वर्णास्तेषां प्रविभागाश्च कुलसंज्ञा निरूपिताः।
यजनं याजनं दानं वेदाद्यध्यापनक्रिया॥३७॥

प्रतिगृहञ्चाध्ययनं विप्रकर्माणि नारद!।
दानमध्ययनञ्चैव यजनञ्च यथाविधिः(धि?)॥३८॥

क्षत्रियस्य च वैश्यस्य कर्मापि परिकीर्तितम्।
क्षत्रियस्य विशेषेण प्रजानां परिपालनम्॥३९॥

१. प्राणिनोऽन्यांश्चे इति क।
२. शुद्रश्चेति इति क।

कृषिगोरक्ष्यवाणिज्यं विशो वैशेषिकी प्रथा।
शूद्रस्य द्विजशुश्रूषा धर्मो वृत्यर्थमेव च ॥४०॥

वर्णेषु ब्राह्मणः श्रेष्ठस्तेषु वैष्णव उच्यते।
सद्वैष्णवेष्वप्येकान्ती पाञ्चरात्रविशारदः ॥४१॥

देशानाञ्च तथाऽऽचारो निगमेषु निरूपितः।
यस्मिन् देशे य आचारो न्यायदृष्टः सुकल्पितः ॥४२॥

हरिभक्तावनुकूलो न त्याज्यः स कथञ्चन।
आराधने हरेर्यस्तु प्रतिकूलो न चाचरेत् ॥४३॥

सदाचारस्तु विज्ञेयः सच्छास्त्रादागमादिकात्।
यस्तु कुले सदाचारः शास्त्रेष्वपि न वर्णितः ॥४४॥

न विरुद्धश्च सम्प्राप्तः पितृपरम्परादिना।
यत्रात्मनो भवेत्तुष्टिः वासुदेवप्रसन्नता ॥४५॥

कुलाचारः स चाचर्यो न तत्र प्रतिपत्तयः।
सदाचारं विदित्वैवं मन्त्रजप्ता सुखी भवेत् ॥४६॥

न चाचारं विना किञ्चित् सिद्धं भवति नारद!।
दुराचारो हि पुरुषो लोके भवति निन्दितः ॥४७॥

दुःखभागी च सततं व्याधितोऽल्पायुरेव च।
सदाचारे तु स्थातव्यं जीवनावधि मानद! ॥४८॥

आचार्यैर्गुरुभिश्चैवं सच्छिष्येणाऽपि सर्वदा।
दैनन्दिनं सदाचारं वक्ष्यामि तत्त्ववेदिनाम् ॥४९॥

पाञ्चरात्रागमज्ञानां प्रक्रियां पाञ्चकालिकीम्।
ब्राह्मे मुहूर्ते उत्थानं कुर्यात् प्रागुदयाद्रवेः ॥५०॥

नामसङ्कीर्तनं तत्र शयनस्थ एव प्रारभेत्।
वासुदेवं चातुरात्म्यं व्यूहं व्यूहान्तरं तथा ॥५१॥

नमःपूर्वं सप्रणवं प्रभाते वैष्णवो द्विज!(जः?)।
कीर्तनादेव भगवान् तत्त्वतो भावितात्मनाम् ॥५२॥

दैनिकमखिलं कालं सेचयत्यमृतेन वै।
हरिर्हरिर्ब्रुवंस्तल्पादुत्थाय भुवि विन्यसेत् ॥५३॥

नमः क्षितिधरायोक्त्वा वामपादं महामते।
स्नानार्थमथ गन्तव्यं मलशुद्ध्यर्थमेव हि ॥५४॥

लिङ्गं गुदां करौ पादौ मृद्भिः क्षाल्या यथार्थतः।
स्नानमाचम्य कुर्वीत दन्तधावनपूर्वकम् ॥५५॥

अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः।
स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् ॥५६॥

स्नानकाले हरितीर्थं गङ्गादिकं विचिन्तयेत्।
कूपसरःसरित्तीर्थं स्नाने श्रेष्ठमनुक्रमात् ॥५७॥

सरित्स्वपि समुद्रान्ता(न्ताः?) तासु प्राग् जलवाहिनी।
उदङ्मुखे तु स्नातव्यं मूलमन्त्रं स्मरन् मुदा ॥५८॥

जलाञ्जलिमथादाय स्वमन्त्रेण हरिं स्मरन्।
सूर्यं सन्तर्पयेत् ब्रह्मन्! वासुदेवेन काशितम् ॥५९॥

देवानृषींश्च सन्तर्प्य पितॄन् पितामहादिकान्।
तर्पयेत् स तदन्तःस्थं वासुदेवं निरीक्षकः ॥६०॥

स्नानवस्त्रं परित्यज्य धृत्वा शुद्धाम्बरं ततः।
प्रासादं देवदेवीयं स्नानतीर्थसमीपगम् ॥६१॥

पाञ्चरात्रिकमाचार्यं सत्समूहं गुरोर्गृहम्[1]।
दूरात्प्रदक्षिणं कुर्यात् निकटात् प्रतिमां विभोः॥६२॥

दण्डवत् प्रणिपातैस्तु नमस्कुर्याच्चतुर्दिशम्।
भगवदालयं गच्छेत् तद्ध्यभिगमनं स्मृतम्॥६३॥

दिव्यं सैद्धं मानुषं वा पञ्चरात्रप्रमाणकम्।
एकान्तं तदलाभे वा निर्जनं दोषवर्जितम्॥६४॥

अनुकूलं मनोज्ञञ्च स्थानं गच्छेत् सुकर्मकृत्।
आचम्य प्राणानायम्य कुर्यात् स ऊर्ध्वपुण्ड्रकम्॥६५॥

चन्दनाद्यैः[2] सुगन्धैर्वा मृदा तीर्थजयाऽथवा।
विष्णुपादाकृतिं चैव पद्मपत्राकृतिं तथा॥६६॥

तन्मध्य एव कर्तव्यश्चन्द्रकाकृतिकोऽथ च।
व्याहरन् द्वादशार्णं स प्रत्यहं शान्तिकामिकः॥६७॥

द्वादशेऽथ चतुःस्थाने केशवादिकमुच्चरन्।
करन्यासं मनोयागमन्यन्न्यासादिकं तथा॥६८॥

कृत्वाऽष्टार्णं जपन् भक्त उपादानान्यथाहरेत्।
आहृतं कुसुमाद्यं वा शुद्ध्यर्थं संनिरीक्षयेत्॥६९॥

यत्किञ्चित् पत्रपुष्पाद्यं परिदृश्येत पीठगम्।
पाणिना तत्समाहृत्य शुचिस्थाने निधाय च॥७०॥

गव्यैर्वा चामरैर्वालैर्भद्रपीठं सुमार्जयेत्।
वस्त्रपूतजलेनाऽथ द्वादशार्णं समुच्चरन्॥७१॥

प्रक्षाल्य पूजयेद् देवमङ्गन्यासादिपूर्वकम्।
सर्वाधारमयं ध्यायेत् सर्वदेवसमाश्रयम्॥७२॥

---

१. गुरोगृहम् इति क।
२. चन्दनाद्यै इति क।

अर्घ्यालभनपुष्पैस्तु माल्यैर्नानास्रगुद्भवैः।
अष्टाङ्गं प्रणमेन्मन्त्री सुकृतानन्त्यप्राप्तये ॥७३ ॥

ललाटोदरजान्वङ्घ्रियुगाग्रानूर्ध्वगौ[1] करौ।
भूमौ सन्धाय मनसा वासुदेवमनुस्मरन् ॥७४ ॥

इज्याकालमिदं ज्ञात्वा कुम्भाग्निं पूजयेत्ततः।
यागोऽयं विविधः प्रोक्त आहृत्प्राणाग्निरूपकः ॥७५ ॥

जपयज्ञोऽथ देवर्षे! विद्धयन्यो भोगमोक्षभाक्।
आमध्याह्नं समिज्याद्यं सम्पाद्याध्ययनं चरेत् ॥७६ ॥

आगमा निगमाश्चैव यस्मिन् भागवतं यशः।
कीर्तितं तद्धि श्रोतव्यमध्येतव्यं पुनः पुनः ॥७७ ॥

माहात्म्यादेव देवस्य सर्वा सिद्धिः करस्थिता।
यावज्जीवावधिर्ब्रह्मन् स्वाध्यायमाचरेद् द्विज!(जः?) ॥७८ ॥

पूजाकालाश्च चत्वारोऽन्ये स्युः पुष्टिप्रदास्तथा।
प्राप्तेऽथ[2] सन्ध्यासमये स्नात्वा वा जघनावधि ॥७९ ॥

क्षालयित्वा ततः कुर्याद् वाससः परिवर्तनम्।
अर्चयित्वाऽर्घ्यपुष्पाद्यैर्देवमग्निं यजेत् ततः ॥८० ॥

यथाशक्तिं(क्ति?) जपं कुर्यादासाद्य शयनं ततः।
समाधाय मनो देवेऽन्तर्वृत्तियुतो[3] भवी ॥८१ ॥

यावन्निद्रा समायाति तावत् तद्यशसि मनः।
निद्रान्ते पञ्चमं कालं योगं कुर्याद्विचक्षणः ॥८२ ॥

समुत्थायार्धरात्रेऽथ जितनिद्रो जितश्रमः।
प्रशान्तमानसो योगी समाचम्य तु वारिणा ॥८३ ॥

---

१. नुर्ध्वगौ इति क।
२. प्राप्तऽथे इति क।
३. देवेऽन्तर्वृत्तिर्युतो इति क।

गुरुं देवं नमस्कृत्य ह्युपविश्याजिनाऽऽसने।
न्यासं मन्त्रचतुष्केण चातुरात्म्येन साधकः॥८४॥

आनखशिखपर्यन्तं गुर्वादिष्टेन संश्रयेत्।
स्मरेत् हृत्कमलं मन्त्री चातुरात्म्यैरधिष्ठितम्[1]॥८५॥

अनिरुद्धस्य मन्त्रं तु तदभिन्नेन चेतसा।
परावर्त्य शतं बुद्ध्या तादात्म्यस्थितिबन्धकम्॥८६॥

अभ्यसेद् वत्सरमन्ते तदद्वैतं समाप्नुयात्।
अथ प्रद्युम्नमन्त्रं तु परावर्त्य शतद्वयम्॥८७॥

योऽयं सोऽहमनेनैवाप्यद्वैतेन सदैव हि।
ब्रह्माऽहं परदेवस्य दासोऽस्म्यहमपि भावयेत्॥८८॥

एवमेव समभ्यासान्मतिमांच्छिन्नसंशयः।
जपवृद्ध्या तु तेनैव सङ्कर्षणस्य मन्त्रराट्॥८९॥

ततश्च वासुदेवस्य जप्यस्ततः परात्परे।
परब्रह्मणि देवेशे जपवृद्ध्याऽन्तिमेन तु॥९०॥

निखिलं चाप्ययीकुर्या[2]न्मन्त्रवृन्दं पुरोहितम्।
समाधायात्मनाऽऽत्मानं यावत् तन्मयतां व्रजेत्॥९१॥

अभ्यासाद् भगवद्योगी ब्रह्म सम्पद्यते तदा।
ततः श्रमजयं कुर्यात् त्यक्त्वा ध्यानासने क्रमात्॥९२॥

समाप्ते शयनस्थश्च कालं[3] रात्रिक्षयावधिः[4]।
आचारस्तन्मया प्रोक्तो वैष्णवानां दिनावधिः॥९३॥

---

१. चातुरात्म्यैरधिष्ठतम् इति क।
२. कुया इति क।
३. काले इति ख।
४. रात्रिक्षयावधि इति ख।

यावज्जीवावधि(धिः?)चैवं सदाचारे नियच्छति।
स्वेन्द्रियाणि मनःप्राणान् तस्य मन्त्रस्तु सिद्धिदः॥९४॥

निःसंशयेन भवत्यत्र किं विज्ञेयमतः परम्।
श्रोतारो दुर्लभा लोके[१] त्वादृशा ज्ञानतत्पराः॥९५॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायाम्[२] आचाररात्रे पाञ्चरात्रिकाजीवनदैनिकसदाचारवर्णननामा प्रथमोऽध्यायः।

---

१. दुर्लभा लोंके इति क।
२. अधोरेखास्थं 'सङ्कर्षणसंहितायाम्' इति ख-मातृकायामेवोपलभ्यते।

## आचाररात्रे द्वितीयोऽध्यायः

**नारदः**

सदाचारस्य माहात्म्यं भवन्मुखाद्विनिःसृतम्।
श्रुतं संशयच्छेदायालं भगवद्रतात्मनाम्॥ १॥

माहात्म्यं शास्त्रतः श्रुत्वा कथं नैव प्रवर्तते।
सदाचरणस्य मार्गे वै समूहः पापकर्मिणाम्॥ २॥

कथं वा तामसीं दीक्षां प्राप्य भोगरता जनाः।
मद्यमांसादिकं भुङ्क्त्वा प्राप्नुवन्ति च दुर्गतिम्॥ ३॥

कथं ते मोक्षभाजः स्युः छित्त्वा मोहान्धकाननम्।
भगवन्! तदेव वाञ्छामि श्रोतुं त्वन्मुखपद्मतः॥ ४॥

सङ्कर्षणः

सत्यं नारद! वाक्यं ते पापकर्मरतात्मनाम्।
कथं मोक्षेऽधिकारः स्यात् तद्वदामि विशेषतः॥ ५॥

अपारेऽस्मिन् हि संसारे ज्ञानं बहुविधं श्रुतम्।
ज्ञानिनो गुरवश्चापि विविधाः सन्ति भारते॥ ६॥

योग्यं गुरुं प्रपद्यात्र दीक्षयित्वाऽथ नारद!।
भक्तिं श्रीवासुदेवस्य प्राप्नोति स तु कर्मकृत्॥ ७॥

आचारान् गुरुतो ज्ञात्वा वर्तते[१] तत्परः शुचिः।
स एव सुखमाप्नोति नान्ये सांसारिका द्विज!॥ ८॥

---

१. वर्तन्ते इति क ।

देशकालक्रियासङ्गात् पूर्वकर्मानुसारतः।
लभन्ते गुरवो भूमौ मुमुक्षोः मोक्षकारिणः॥ ९॥

**नारदः**

का दीक्षा कथमाप्तव्या केनाचार्येण लाङ्गलिन्!।
कतिविधा च सा शास्त्रे वर्णिता किं फलान्विता॥१०॥

तत्सर्वं दैक्षजन्माद्यं विज्ञापय जगद्गुरो!।
यज्ज्ञात्वा तादृशं प्राप्याऽऽचार्यं निःश्रेयसं भवेत्॥११॥

**सङ्कर्षणः**

गुह्याद् गुह्यतरं ब्रह्मन् दीक्षाद्यं विषयं भूमौ।
वर्णितमपि शास्त्रेषु नाप्यते कुशलं विना॥ १२॥

शान्तं धर्मादितत्त्वज्ञमशेषगुणभाजनम्।
सत्कर्मनिरतं प्राप्य प्राप्यते नाऽत्र संशयः॥ १३॥

योग्यलक्षणसम्पन्नं त्वां ज्ञात्वा विदुषांवरम्।
सदाचारयुतम् आर्य! वक्ष्येऽहं तद्धि विस्तरात्॥१४॥

दीयते विमलं ज्ञानं दिव्यभावं परात्मनि।
क्षीयते पापसन्तानं सा दीक्षा तन्त्रसम्मता॥१५॥

ईक्ष्यते भगवान् येन कर्मणा पुरुषोत्तमः।
द्यते संसारमखिलं सा दीक्षाऽऽगमसम्मता॥१६॥

दीक्षामूलं जपं सर्वं दीक्षामूला क्रियाऽखिला।
दीक्षामूलो सदाचारो दीक्षामूलाश्च सिद्धयः॥१७॥

अदीक्षितास्तु कुर्वन्ति जपपूजादिका(काः?) क्रियाः।
न भवन्ति श्रियै तेषां शिलायामुप्तबीजवत्॥१८॥

तस्मात् प्राक् सर्वतो दीक्षां सम्प्राप्य साधनान्तरम्।
अनुष्ठेयं गुरोर्दृष्ट्या तदक्षय्यफलं भवेत् ॥१९॥

दीक्षा सा त्रिविधा प्रोक्ता वैभवी व्यूहरूपिणी।
ब्रह्माख्या चैव दीक्षोक्ता शरणागतवत्सला ॥२०॥

वैभवी भोगदा ज्ञेया द्वितीया भोगमोक्षदा।
तृतीया ब्रह्मसंज्ञाऽस्ति ह्यपुनर्भवलक्षणा ॥२१॥

प्रथमा वैभवी दीक्षा विभवमन्त्ररूपिणी।
द्वितीया चातुरात्म्यस्य केशवादेश्च मन्त्रिणी ॥२२॥

तृतीया पररूपस्य वासुदेवस्य मन्त्रिणी।[1]
सर्वश्रेष्ठा तु सा वाच्या सर्वश्रेष्ठफलप्रदा ॥२३॥

आचार्याणामहं वक्ष्ये लक्षणानि महात्मनाम्।
गुरुर्दीक्षानुसारेण वरणीयो फलेप्सुभिः ॥२४॥

भोगेच्छुना धनादिकमिच्छुकेनैव सन्ततेः।
लौकिकार्थस्य कामेन वरणीयं गुरुं शृणु ॥२५॥

ब्राह्मण्यां ब्राह्मणाज्जातः सत्यभाषी प्रियंवदः।
विषयेषु यो निःस्पृहः सत्कर्मनिरतः शुचिः ॥२६॥

मद्यमांसाद्यभक्ष्यस्य निषेधकृद् विमत्सरः।
नित्यस्नायी शुद्धवासाः शुद्धवेषः शुभाशयः ॥२७॥

सिद्धान्तभेदविच्छान्त ऊहापोहविचक्षणः।
तत्त्वज्ञो यन्त्रमन्त्राणां पञ्चरात्रपरायणः ॥२८॥

षोडशन्यासविन्मन्त्री विष्णोराराधनापरः।
सिद्धमन्त्रः क्षमाशाली निःस्पृहश्च षडङ्गवित् ॥२९॥

---

१. अधोरेखायुक्तः श्लोकार्धः ख-मातृकायामेवोपलभ्यते।

पञ्चसंस्कारसम्पन्नस्तन्त्रशास्त्रे कृतश्रमः।
प्रीतिमान् देवपूजादौ आश्रमाचारतत्परः ॥३०॥

धृतिमान् सात्त्विकः शुद्धः सुशीलो योगसंयतः।
न स्थूलो न कृशो ह्रस्वो न काणो बधिरस्तथा ॥३१॥

न्यूनातिरिक्तनिर्मुक्तकल्याणावयवी युवा।
प्राप्याचार्यं दर्शनीयं तं गच्छेद् भोगवाञ्छुकः ॥३२॥

तद्दर्शितप्रकारेण सदाचारे यतः शुचिः।
भोगं यथेच्छितं प्राप्य लोकेऽस्मिन्[1] मोदते जनः ॥३३॥

प्राप्त्यर्थं व्यूहदीक्षाया अभ्युपेयं गुरुं शृणु।
श्रेष्ठवंशसमुद्भूतो योगसंसिद्धमानसो(सः?) ॥३४॥

वेदवेदाङ्गतत्त्वज्ञः स्थितिसंहारवेदकः।
स्वाध्यायनिपुणः सौम्यः करुणापूर्णमानसः ॥३५॥

वृत्तवान् शीलवान् शुभ्रो जिज्ञासुः श्रद्धया सह।
स्मितपूर्वाभिलाषी च कर्मठस्तपसि स्थितः ॥३६॥

पञ्चकालविधानज्ञः पाञ्चरात्रेषु[2] कोविदः।
सर्वसिद्धान्तवेदी च सर्वागमविशारदः ॥३७॥

धृतोर्ध्वपुण्ड्रको वाग्मी प्रसन्नात्मा च कोमलः।
रूपवान् आस्तिको दाता धान्यधनाद्यलोलुपः ॥३८॥

प्राप्येदृशं सदाचार्यम् अभिगच्छेत् फलेप्सुकः।
वाञ्छितार्थफलं प्राप्य ततः स्वर्गे स मोदते ॥३९॥

गुरुदत्तेन मनुना विधिना चैव संयतः।
शास्त्रार्थान् संग्रहीकृत्य स्वाचारे स्थापयेद् बुधः ॥४०॥

---

१. लोकेऽस्मन् इति क।
२. पाचरात्रेषु इति क।

ब्रह्मदीक्षागुरुं श्रेष्ठं देशिकं कथयामि भो!।
सदन्वये तु सञ्जातः सर्वलक्षणसंयुतः॥४१॥

जितेन्द्रियो जितक्रोधः कर्मठो धर्मवत्सलः।
समः सर्वेषु जन्तुषु ह्यनाचारेषु निःस्पृहः॥४२॥

शुभ्रमूर्तिर्दयासिन्धुः कीर्तिमाननहङ्कृतिः।[१]
सुशीलो नीतिमान् शान्तो ह्यनसूयमतिस्तथा॥४३॥

श्रुतवान् कोमलो दान्तः सर्वशास्त्रार्थपारगः।
सर्वमन्त्रार्थवेदी च दीक्षितश्चक्रमण्डले॥४४॥

अध्यात्मविद् ब्रह्मवादी आस्तिको ध्यानतत्परः।
प्रीतिमान् देवपूजादौ नारायणपरायणः॥४५॥

गुरुभक्तो गुरौ(रु?)प्राणो वासुदेवैकमानसः।
स्वर्णे लोष्टे रिपौ मित्रे रम्यरूपकुरूपयोः॥४६॥

माने चैवापमाने च समत्वं यस्य सर्वदा।
ताडने वा गजारोहे खरारोहेऽपि कर्हिचित्॥४७॥

यस्य नोद्विजते चित्तं तादृशः कीर्तनपरः।
सर्वदा ब्रह्मसंपन्नः शङ्खचक्रादिचिह्नितः॥४८॥

अहिंसाब्रह्मचर्यादिनियमान् रक्षति सदा।
तत्त्वं बुद्ध्वा परं मौनी तद्गतः तत्स्वरूपकः॥४९॥

प्राप्य तं देशिकं लोके शरण्यं मुक्तिमिच्छुभिः।
वासुदेवस्तु स साक्षात् चररूपी न संशयः॥५०॥

सर्वधर्मान् परित्यज्य तमेव शरणं व्रजेत्।
भगवन्तं वासुदेवं परानन्दविभूतिदम्॥५१॥

---

१. कीर्तिमानहङ्कृतिः इति क।

स्वान्तः रक्षति तस्माद्धि ब्रह्मानन्दमवाप्यते।
शिष्येण[1] देशिकात्तस्मान्नेप्सितव्यं हि लौकिकम्॥५२॥

भोगादिकं यतो तस्य सिद्धिः करे रता सदा।
स्वाश्रितान् रक्षति साक्षाद्योगक्षेमं वहत्यपि॥५३॥

नित्यनैमित्तिककर्महीनत्वं दृश्यते यदि।
तस्मिन् तन्नैव दृ(द्र?)ष्टव्यं शिष्यश्रेयस्करं स हि॥५४॥

गृहस्थो ब्रह्मचारी वा परब्रह्मैकतत्परः।
गुरुः स एव कर्तव्यः शिष्यश्रेयस्करो मुने!॥५५॥

भगवद्भक्तियुक्तत्वात् भगवत्येव मानसात्।
भगवज्ज्ञानयुक्तत्वात्[2] स वै भागवतः स्मृतः॥५६॥

अच्युतस्य हृदिस्थत्वादच्युतानन्दभोजनात्।
अच्युतांशस्वरूपत्वादच्युतगोत्रको मतः॥५७॥

अच्युतगोत्रिणस्ते स्युर्भागवताश्च तच्छ्रिताः।
तद्वंशे ये समुत्पन्नास्तेऽपि भागवता मताः॥५८॥

अच्युता वासुदेवीया वैष्णवा(वाः?) पाञ्चरात्रिकाः।
दीक्षादानाय योग्यास्ते प्रतिष्ठाकर्मकौशलाः॥५९॥

त एवाधिकृता लोके वासुदेवेन धिष्ठिताः।
तदाज्ञां व्यतिक्रम्याऽत्र सुखी कः स्याद्धि नारद!॥६०॥

वंशत्वं तु गृहस्थस्य देशिकस्यास्य सन्ततौ।
विद्यावंशस्तु विज्ञेयो ब्रह्मचर्यर[3]तात्मनाम्॥६१॥

भागवतगुणैर्युक्तः पञ्चरात्रार्थविन्मुनिः।
तस्मात् सर्वेप्सुना ग्राह्यो मन्त्रः परात्परः सदा॥६२॥

---

१. शिष्येन इति क।
२. अधोरेखायुक्तं ख-मातृकायामेवोपलभ्यते।
३. व्रतात्मनाम् इति ख।

गार्हस्थ्यं वानप्रस्थ्यं वा भैक्षं वा जातिचिह्नितम्।
न दृ(द्र?)ष्टव्यं गुरौ तस्मिन् सर्ववर्णाग्रणी हि सः॥६३॥

वर्णी गृही वनी वाऽपि त्यागी बहुविधोऽपि सः।
गृह्णीयाद् गृहिणो मन्त्रं वासुदेवस्य विमुक्तये॥६४॥

ब्राह्मणः सम्पदाढ्योऽपि क्षत्रियो राजभूषणः।[1]
गृह्णीयात्परमन्त्रं तु ब्रह्मचारी गुरोः[2] सदा॥६५॥

अनन्यभक्तो[3] देवस्य स्वधर्मेष्वचलस्थितिः।
स एव हि गुरुः श्रेयान् इतरस्त्याज्य एव हि॥६६॥

कुवृत्तिश्च कुसङ्गश्च बहुदेवपरायणः।
गर्वितोऽसंस्कृतो घृणो देशिकस्त्याज्य एव हि॥६७॥

द्विजातिगुरुदेवानां निन्दकः समयच्युतः।
व्यसनी पिशुनो गर्दी देशिकस्त्याज्य एव हि॥६८॥

भागवते कुले जातो दुर्गुणो निन्द्यकर्मयुक्।
मद्यमांसादिभक्षी च देशिकस्त्याज्य एव हि॥६९॥

संसारकाननासक्तः स्त्रीपुत्रादिषु लम्पटः।
लुब्धः क्रोधी दुराचारो देशिकस्त्याज्य एव हि॥७०॥

गुरोरप्यवलिप्तस्य कार्याकार्यं विजानतः।
उत्पथं प्रतिपन्नस्य परित्यागो विधीयते॥७१॥

नारद! लक्षणं दृष्ट्वा परीक्ष्य च पुनः पुनः।
प्राप्याचार्यं च ब्रह्मिष्ठं ब्रह्मदीक्षामवाप्य च॥७२॥

---

१. अधोरेखायुक्तं ख-मातृकायामेवोपलभ्यते।

२. ब्रह्मचारिगुरोः इति ख। तदेवोचितं, प्रथमान्तवर्णिपदग्रहणे सति पुनरुक्तेः, आनर्थक्याच्च। 'ब्रह्मचारि गुरोः' इति समासे तु गुरुशब्दस्य विशेषणत्वेन सार्थक्यात्।

३. अनन्यभक्त इति क।

यः करोति हि लोकेऽस्मिन् पूजार्चाञ्च विधानतः।
स ऐहिकं सुखं प्राप्य ब्रह्मलोके महीयते॥७३॥

देशभेदान्मतौ भेदात् कालभेदाच्च सुव्रत!।
इच्छाभेदाच्च वैविध्यं साधनानां भवेत् सदा॥७४॥

गुरोर्भेदञ्च(श्च?) तेनैव तस्मात् सच्छास्त्रवर्त्मना।
भोगार्थं वैभवी दीक्षा ततोऽधिकतरं सुखम्॥७५॥

इच्छति चेद् व्यूहाख्या दीक्षा प्राप्या महामते।
फलं कामयते प्राणी सर्वसुखोत्तमं शुभम्॥७६॥

अक्षय्यमनपोह्यञ्च शाश्वतं सर्वसिद्धिदम्।
देशिकमुत्तमं प्राप्य ब्रह्मनिष्ठं परे रतम्॥७७॥

सदाचारं सदाभक्तिं सदासुखं स अश्नुते।
अन्ये संसारिणो ये स्युः वैष्णवाः शुभकर्मिणः॥७८॥

वैभवीमथ व्यूहां वाऽऽप्य हरौ स्थापयेन्मनः।
सात्त्विकीं[1] पाञ्चरात्रोक्तां नीतिं प्राप्य सुखी भवेत्॥७९॥

संसार......... नीतिवि.........
कोमलचित्तग्रन्यस्तरे........ जुगी........ हि........
..........................................................
..........................................................

इति श्री[2]नारदपञ्चरात्रे सङ्कर्षणसंहितायामाचाररात्रे
दीक्षाप्रकारवर्णननामा
द्वितीयोऽध्यायः।

---

१. सात्त्विकी इति क।
२. 'श्री' इति ख-मातृकायामेवोपलभ्यते।

## आचाररात्रे तृतीयोऽध्यायः

**सङ्कर्षण उवाच**[1]

शिष्याणां लक्षणान्यत्र वदिष्यामि मुनीश्वर!।
साधारणानि सर्वेषां भक्तिमार्गानुवर्तिनाम्॥ १॥

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो वा देवसम्मतः।
सुशीलो गुणसंयुक्तो गुरुशुश्रूषणे रतः॥ २॥

मित्राणामनभिद्रोही द्वेष्यसङ्गविवर्जितः।
मुमुक्षुः क्षान्तिशीलश्च दोषाणां संक्षयोद्यतः॥ ३॥

कृतज्ञश्च प्रसन्नात्मा श्रौतस्मार्तक्रियापरः।
मातुः पितुश्च शुश्रूषुः स्थिरबुद्धिरतन्द्रितः॥ ४॥

साधुसङ्गसमाकाङ्क्षी जिह्वाचापलवर्जितः।
परदारस्पृहामुक्तः सत्त्ववान् शाठ्यवर्जितः॥ ५॥

प्रशस्तोज्ज्वलवेषश्च शुभ्रवस्त्रैरलङ्कृतः।
ब्रह्मचारी गृहस्थो वा वानप्रस्थोऽथ भिक्षुकः॥ ६॥

संसारभयभीतश्च निर्वाणमभिवाञ्छुकः।
लक्षणैः कथितैरेतैः प्रायशोऽलङ्कृतो द्विज!(जः?) ॥७॥

अथवा श ारणार्थित्वं मुमुक्षुत्वञ्च भूरिशः।
दृष्ट्वाऽऽचार्येण दीक्ष्यः स आत्मनः शुभमिच्छुना॥ ८॥

---

१. उभयमातृकयोर्नास्ति।

दुराचारोऽपि सर्वाशी कृतघ्नो नास्तिकस्तथा।
लम्पटोऽपि समायाति संशुध्य दीक्ष्य एव हि॥ ९॥

वासुदेवप्रभावाद्धि दुष्टानां पापकर्मणाम्।
मुमुक्षा चेद् विशुद्धिः स्यात् पूर्वजन्मोदयात् शुभात्॥१०॥

गुरोश्चैवातिसामर्थ्यात् पापयोनिर्भवेच्छुभ:(भा?)।
किं पुनर्लक्षणैर्युक्तो[1] निश्चयान्मोक्षमाप्नुयात्॥११॥

शिष्यश्चतुर्विधो ज्ञेयः समयी पुत्रकस्तथा।
साधको बुध! आचार्यो लक्षणानि वदाम्यहम्॥१२॥

शुचिः द्रढव्रतो धीरः सत्यवाक् सङ्गवर्जितः।
गुर्वाराधनसंयुक्तः शास्त्रार्थस्वादलम्पटः॥१३॥

निषिद्धाचारवैरागी सद्विवेकपदाश्रितः।
मानमात्सर्यकार्पण्यपरित्यागस्य कामुकः॥१४॥

आचार्यभक्तियुक्तश्च विष्णुभक्तौ च तत्परः।
गुरोः पत्न्यां तथा पुत्रे गुरुवत्पूज्यधीयुतः॥१५॥

सन्निधौ देशिकस्यायं मौनी भुव्युपवेशकः।
प्राप्तानुज्ञां गुरोः शुभ्रः सेवायामनिशं रतः॥१६॥

दृष्ट्याऽऽचार्यस्य सद्दीक्षां प्राप्तः कृतार्थतायुतः।
शास्त्रार्थश्रवणे सक्तो नयाचारसमन्वितः॥१७॥

शङ्ख-चक्र-गदा-पद्म-मुद्रा-मूर्ति-समन्वितः।
ऊर्ध्वपुण्ड्रं सदा धत्ते कुम्भपूजाधिकारयुक्॥१८॥

शास्त्रार्थान् प्राप्य सर्वान् हि नाभिमानं दधाति सः।
न विक्रियामवाप्नोति ह्याक्षिप्तोऽप्यथ संसदि॥१९॥

---

१. पुनर्लक्षणैयुक्तो इति क।

पुत्रकादिकमुख्यानां स्वाग्रानां सेवने रतः।
तेषां पादाभिसेवाञ्च कृत्वा प्रसन्नमानसः॥२०॥

प्रदत्तान् देशिकेन्द्रेण समयान्[1] पालने रतः।
समयी स एव विज्ञेयः पुत्रकमथ मे शृणु॥२१॥

लिङ्गानि कथितानि प्रागाचारे स्थापकः सदा।
मण्डले दीक्षितो वाग्मी योग्यतां वीक्ष्य नारद!॥२२॥

स्वपुत्रादधिकः शिष्यस्तस्मात् स पुत्रकः स्मृतः।
नित्यपूजाभियुक्तश्च देशिकस्याज्ञया मुने!॥२३॥

देशिकादाप्तशास्त्रार्थान् आलोचयति सर्वदा।
योगक्षेमादिकं शक्त्या गुरोः निरीक्षकस्तथा॥२४॥

गुर्वाराधननिष्ठश्च तच्चित्तस्तत्परायणः।
तदादेशाच्च शास्त्रार्थान् ब्रूयात् सदसि धीयुतः॥२५॥

कीर्त्यर्थं स्वगुरोर्नित्यं नाहङ्कारमथाप्नुयात्।
वैष्णवानां समाजे च मात्सर्यरहितो भवेत्॥२६॥

हृदिस्थस्तस्य विश्वात्मा पद्मपत्रदलायतः।
ददाति निर्भयं नित्यं प्रकर्षमेति पुत्रकः॥२७॥

साधकाख्यस्य शिष्यस्य लिङ्गानि शृणु नारद!।
गुरुशुश्रूषया भक्त्या प्रसन्नो देशिको मुदा॥२८॥

ददाति परमं ज्ञानं यागरूपं रहःस्थितम्।
सिद्धये गुरुज्ञानस्य स्वगृहे वा मनोरमे॥२९॥

क्षेत्रे दिव्येऽथ सिद्धे वा नारायणनिकेतने।
एकान्ते निर्जने यायाद् बान्धवेभ्यो दूरे मुनिः॥३०॥

---

१. समयात् इति क।

संसारग्रस्तलोकेभ्यो दूरे सिद्ध्यर्थमिच्छुकः।
तपःसन्तोषशौचादिगुणान् संपूर्य स्वात्मनि ॥३१॥

ईप्सितं साधयेन्मन्त्रं शास्त्रं शास्त्रार्थमात्मनः।
भावसंशुद्धिसंयुक्तः साधको भगवन्मयः ॥३२॥

मुद्रामन्त्रसमोपेतो नित्योद्युक्तः स्वकर्मणि।
मन्त्राणां पदरूपाणां पदानि सार्थकानि सः ॥३३॥

साङ्गानङ्गवशेनैव(वं?) जानाति वाच्यवाचकम्।
आगमानां विभेदा ये तान् जानाति विचक्षणः ॥३४॥

साङ्कर्यमनुजानाति यथावद् गुरुसम्मतः।
तत्र वै त्रिविधं वाक्यं दिव्यञ्च मुनिभाषितम् ॥३५॥

पौरुषं सर्वशास्त्रज्ञ! विजानाति यथार्थतः।
यदर्थाढ्यमसन्दिग्धं स्वच्छमल्पाक्षरं स्थिरम् ॥३६॥

तत्पारमेश्वरं वाक्यमाज्ञासिद्धञ्च मोक्षदम्।
प्रसंशकं वै सिद्धीनां संप्रवर्तकमप्यथ ॥३७॥

सर्वेषां रञ्जकं गूढं निश्चयीकरणक्षमम्।
मुनिवाक्यं तु तद्विद्धि चतुर्वर्गफलप्रदम् ॥३८॥

अनर्थकमसम्बद्धमल्पार्थं शब्दडम्बरम्।
अनिर्वाहकमाद्योक्तेर्वाक्यं तत्पौरुषं स्मृतम् ॥३९॥

हेयं चानर्थसिद्धीनामाकरं नरकावहम्।
प्रसिद्धार्थानुवादं यत् संगतार्थं विलक्षणम् ॥४०॥

अपि चेत् पौरुषं वाक्यं ग्राह्यं तन्मुनिवाक्यवत्।
एवमादेयवाक्योत्थ आगमस्त्वं महामते! ॥४१॥

सन्मार्गदर्शनं कृत्स्नं विधिवादञ्च वेत्ति सः।
तत्प्रामाण्यात्तु यत्किञ्चित् समभ्यूह्य यथार्थतः॥४२॥

पूर्वापराविरोधेन निर्वाहयति सर्वदा।
सिद्धोऽपि यस्य मन्त्रात्मा शास्त्रञ्च द्विजपुङ्गव!॥४३॥

नाभिमानं न वा भोगे सम्माने वर्तते मतिः।
चरुभुग्वा फलाहारः भिक्षाशी वा पयोभुजः[1]॥४४॥

पर्यङ्के शयनं तस्य भूमौ वा नारद! समम्।
हृष्टस्तुष्टः प्रसन्नात्मा गुर्वाज्ञायां वसेत् सदा॥४५॥

साधकोत्तमरूपं त्वां कथितं विस्तृतं द्विज!।
आचार्यलक्षणान्यत्र विज्ञापयामि सुव्रत!॥४६॥

पञ्चकालविधानज्ञः सर्वतन्त्रार्थकोविदः।
गुरुणा देशिकत्वे वै योजितः स्वप्रसादतः॥४७॥

प्रतिष्ठापूजनादीनां कार्याणां सोऽधिकारवान्।
कुम्भपूजा समयिनः मन्त्रार्चा पुत्रकस्य नु॥४८॥

साधकस्याग्निपूजा वै मूर्तिपूजार्हो देशिकः।
पूर्वोक्तास्वपि पूजासु योग्योऽधिकारी स मुने!॥४९॥

सर्वोत्तमे पदे संस्थः सामयिकं नु वन्दते।
भक्तानां संशयछेत्ता[2] लौकिकान् पारलौकिकान्॥५०॥

कर्षणाद्यं प्रतिष्ठान्तं भक्तिबुद्ध्या करोति सः।
न लाभेन न रागेण न स्वार्थेन न नामतः॥५१॥

स्वसिद्धिं स्वीयमैश्वर्यं प्रभोरनुग्रहं तथा।
गोपायति न लोकेषु प्रदर्शयति सर्वदा॥५२॥

---

१. पयःपिबः इति ख।
२. संशयान् छेत्ता इति ख।

स्वगुरुं ख्यापयत्यत्र तत्कृपामेव केवलाम्।
उच्चपदारोहणे हेतुरिति निश्चलमानसः ॥५३॥

शिष्येष्वनुग्रहं कोपं[1] स्वार्थाय न करोति वै।
अनुग्रहो वा क्रोधो वा शिष्यहिताय केवलम् ॥५४॥

मन्त्रं मुद्रां विधिं सर्वं योग्याय यच्छति प्रभुः।
आचार्यत्वेऽभिषेच्यः सो गुरुणा मोक्षहेतुना ॥५५॥

एवं चतुर्विधाः शिष्या दीक्ष्या विधिविधानतः।
न ज्ञातिर्नैव लिङ्गञ्च न वर्ण आश्रमस्तथा ॥५६॥

दृ(द्र?)ष्टव्यमात्मबुद्ध्या तु दीक्षणीया मुदा मुने!।
मन्त्रो मुद्रा च दातव्यौ त्रैवर्णिकाय केवलम् ॥५७॥

शूद्रेभ्योऽपि मनुर्देयो हुंफट्तारादिवर्जितः।
पापात्माऽपि दुराचारो दीक्ष्यो नास्त्यत्र संशयः ॥५८॥

प्राप्य भागवतीं दीक्षां भक्तो भूत्वाऽपि वैष्णवः।
वर्षं वा द्वित्रिवर्षान्तो (न्तं?) वीक्षणीयो हि शुद्धये ॥५९॥

कल्मषस्य विघातार्थं प्रायश्चित्तव्रतादिकम्।
ब्रह्मकूर्चादिकं ब्रह्मन् शुद्ध्यर्थं तस्य नैकधा ॥६०॥

अपि शुद्धिर्भवेन्नाऽस्य दुराचारं त्यजेन्नहि।
नास्तिकत्वमधर्मश्च क्रौर्यं शाठ्यञ्च दुर्मतिः ॥६१॥

कृतघ्नत्वं त्यजेन्नायं त्याज्यः स शिष्यवृन्दतः।
अन्यथा तु भवेत् स्वेषामन्येषां [2]संगदोषतः ॥६२॥

अभद्रं नास्तिकत्वादिदोषाणां वर्धनं भृशम्।
देशिको दोषितः स स्याल्लोके तन्त्रे च सर्वदा ॥६३॥

---

१. शिष्येष्वनुग्रहः कोपः इति क।
२. तत्प्रसङ्गतः इति ख।

तदेवं दीक्षणीयानां वैविध्यं नारद! श्रुतम्।
दीक्षाविधिविधानञ्च तन्त्रशास्त्रेऽतिविस्तृतम्॥६४॥

वक्ष्याम्यत्र विधानेन संक्षेपेण महत्तमम्।
कथितं नारद! तुभ्यं साधु त्वं तत् प्रवर्तय॥६५॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायाम्
आचाररात्रे दीक्षणीयशिष्यनिरूपणनामा
तृतीयोऽध्यायः।

## आचाररात्रे चतुर्थोऽध्यायः

**सङ्कर्षण उवाच**[1]

दीक्षां वक्ष्ये शृणु ब्रह्मन् त्रिविधां सर्वसिद्धिदाम्।
वैभवीयां तथा व्यूहां ब्रह्माभिधाञ्च नारद!॥ १॥

देवाग्निगुरुपूजास्वधिकारस्य प्राप्तये।
सिद्धये शुभमन्त्राणां मुक्तये भवबन्धनात्॥ २॥

मण्डलाद्येन पूर्णेन विधिना गृहमेधिनाम्।
वित्ताढ्यानां तु कर्तव्या स्वल्पवित्तस्य देहिनः॥ ३॥

संस्थितस्य विरागेण गुरोर्गेहे चिरं मुने!।
सतिलैः केवलैर्बीजैरग्नावाज्यान्वितैस्तथा॥ ४॥

संसारभयभीतस्य द्रव्यहीनस्य कर्मिणः।
वाचैवानुग्रहं कुर्याद् गुरुर्मोक्षप्रदः सदा॥ ५॥

ज्ञात्वा मुमुक्षुतां तस्य पृष्ट्वा वृत्तञ्च पूर्वजम्।
दोषान् विज्ञाय शिष्यस्य प्रायश्चित्तैर्यथोदितैः॥ ६॥

शोधनीयः प्रयत्नेन कृच्छ्रातिकृच्छ्रपूर्वकैः।
अशक्तं तद्व्रतं कर्तुं यावन्मनःप्रसन्नता॥ ७॥

द्वादशं वा दिनं योज्योऽयाचिते नक्तभोजने।[2]
अहोरात्रोपोषितो वा पवित्रीकृतमानसः॥ ८॥

---

१. उभयमातृकयोर्नास्ति।

२. योज्योऽयाचितैर्नक्तभोजने इति क।

पञ्चगव्यमथो पेयं यावच्चित्ते प्रसन्नता।
पञ्चदिनं चतुर्दिनं ब्रह्मकूर्चं पिबेदथ॥ ९॥

गोमयेन समं मूत्रं दधि स्याद् द्विगुणं ततः।
दध्नश्चतुर्गुणं सर्पिः सर्पिषोऽष्टगुणं पयः॥१०॥

पाने तु पञ्चगव्यानां [1]प्रमाणमिदमीरितम्।
चूर्णेन यववेणुभ्यां समेतं तु कुशोदकम्॥११॥

ब्रह्मकूर्चमिति ख्यातं सर्वाघौघविनाशकम्।
वित्ताढ्ये सति स्वर्णादिदानं विप्रेभ्य आचरेत्॥१२॥

विज्ञाय मानसीं शान्तिं प्रायश्चित्तमनु प्रभुः।
प्रसादं वासुदेवस्य शिष्ये विज्ञाय देशिकः॥१३॥

विभवव्यूहसूक्ष्माख्यां दीक्षां कुर्यादनन्तरम्।
चित्तप्रसादस्त्वतुलस्तेजोवृद्धिरतीव हि॥१४॥

धैर्यमुत्साहसन्तोषोऽथ कार्पण्यादयो गुणाः।
येभ्यस्तेभ्यस्तु शिष्येभ्यो दीक्षा देयाऽचिरादपि॥१५॥

शिष्यैस्तु प्रार्थ्यमानत्वे सानुकम्पेन नारद!।
प्रतिपन्नैः प्रदेयाः[2] सा स्वयं वाऽप्रार्थितेन च॥१६॥

ज्ञात्वा तद्योग्यतां विप्र! दीक्षणीया हि सुव्रताः।
एकादश्या दिने पूते द्वादश्यामथवा गुरुः॥१७॥

शुद्धे ताराबले चैवं नक्षत्रादेः पवित्रिते।
समये पुण्ययुग्देशे मनोज्ञे साधुसेविते॥१८॥

मृत्तिकावारिपुष्पाढ्ये समित्कुशप्रसंशिते।
हिंसकैः रहितै(ते?) पूते सरिताद्वयसङ्गमे॥१९॥

---

१. प्रमाणंमिदमी इति क।
२. प्रदेया इति ख।

महोदधितटे रम्ये यत्र वा रमते मनः।
वनैरुपवनैर्ग्रामैर्नगराङ्गैर्वा[1] समावृता ॥२०॥

अलाभे सति देशानां पुरोक्तानां निजे गृहे।
भुवो निर्दोषतां ज्ञात्वा खननपूरणादिना ॥२१॥

समां कृत्वा भूमिं पश्चात् पञ्चगव्येन सेचयेत्।
उपलिप्याऽथ संपूज्य वाराहं तत्र नारद! ॥२२॥

भूतानां बलिदानञ्च सुरभीणाञ्च तर्पणम्।
द्विजानां दक्षिणां दत्त्वा मण्डपमारभेत् शुभम् ॥२३॥

द्वादश दश वा हस्तं विस्तीर्णं मण्डनान्वितम्।
मध्यगेन च पीठेन पार्थिवेनातिशोभितम् ॥२४॥

चतुर्द्वारमनुकूलं ध्वजतोरणसंवृतम्।
समुत्सेधस्तु पीठस्याष्टाङ्गुलः समीरितः ॥२५॥

मुख्यपीठेन संलग्नस्तन्मानेन च सोन्नतः।
उपपीठस्तु कर्तव्यो नैवेद्यार्थं मनोरमः ॥२६॥

वारुण्यां दिशि सम्पाद्या तथैवाऽऽसनपिण्डिका।
तस्य दक्षिणदिग्भागे त्वन्तर्गमनसंयुतम् ॥२७॥

विविक्तलोचनोपेतं पिण्डिकाकुण्डभूषितम्।
सुकवाटो(टा?)र्गलोपेतं कुर्याद्भवनमण्डपम् ॥२८॥

कुण्डस्तु चतुरस्रोऽत्र कार्यः संसिद्धिमिच्छता।
वृत्तो वा कमलाकारः षडस्रश्चाथ पण्डितैः ॥२९॥

वित्तस्य विरहे कार्यः सोऽधिवासो निजाङ्गणे।
द्विजालये गुरोर्गेहे तत्र कुर्यात् परिग्रहः ॥३०॥

---

१. ङ्गर्वा इति क।

दशम्यां यागसम्भारा दीक्षायामुपयोगिनः।
सम्पाद्या(द्याः?) पुष्पपत्रादि नैवेद्यञ्च व्रते दिने॥३१॥

सङ्ग्राह्यं पशुपक्ष्यादिशूद्रादिस्पर्शवर्जितम्।
लाजान् सिद्धार्थकान् शुभ्रान् श्रीफलादिफलानि च॥३२॥

चन्दनादीनि द्रव्याणि रत्नानि काञ्चनादिकम्।
सर्वौषधीत्वगै(गे?)लाद्यं सुगन्धनिचयं शुभम्॥३३॥

श्यामकशालिनीवारतण्डुलं भूरि संस्कृतम्।
षड्बीजानि समानानि धान्यानि सप्त सप्त च॥३४॥

नवान्युपयोगार्हाणि भाण्डानि चैव नारद!।
हेमाद्युत्थानि पात्राणि वस्त्रयुग्मानि वाससी॥३५॥

पञ्चलोहमयं चक्रं सशङ्खं द्वादशारगम्।
कुतपं नेत्रवस्त्रञ्च पादुके गुग्गुलं तथा॥३६॥

वर्तिका दीपतैलञ्च मृष्टधूपञ्च नारद!।
पालिका घटिका चैवं शरावाश्चैव शोभनाः॥३७॥

स्थाली कमण्डलुः दर्वी श्वेतं सूत्रञ्च कर्तरी।
चुल्लिका भद्रपीठञ्च दन्तधावनसञ्चयम्॥३८॥

शुष्कगोमयसंयुक्तामरणीं(णिं?) वह्निजं मणिम्।
सम्पादनीयमिदं सर्वं प्राग्दिने परिचारकैः॥३९॥

नवम्यां वा दशम्यां वाऽधिवासदिनाद्धि प्राक्।
पुण्याहसलिलैः शोध्यः पञ्चगव्यैः समन्त्रकैः॥४०॥

मण्डपादीनि सर्वाणि ह्यारभेताङ्कुरार्पणम्[1]।
मृत्सङ्ग्रहादिविधिना पालिकाघटिकादिषु॥४१॥

---

१. ह्यारभेताकुंरार्पणम् इति क।

अधिवासविधिं वक्ष्ये दीक्षाविधावलङ्कृतम्।
स्नातः कृताह्निको विद्वान् श्वेतवस्त्रैरलङ्कृतः ॥४२॥

ससहायो गुरुः ब्रह्मन्! प्रविशेन्मण्डपं मुदा।
वारुणीं दिशमालभ्योपविशेत् पूर्वदिङ्मुखः ॥४३॥

भूतशुद्धिं प्राणायामं कृत्वा देहं तु शोधयेत्।
यस्य विभवदेवस्य दीक्षा देया हि कर्मिणे ॥४४॥

तेन मन्त्राधिकारेण सर्वं कर्म समाचरेत्।
भूतशुद्धिश्च पूर्वोक्ता तेनैव देशिकश्चरेत् ॥४५॥

समस्तैर्वैभवैर्मन्त्रैः कार्यो वाऽनुग्रहः शिशोः।
सर्वाराधनदानार्थं वा द्विषट्काप्तये द्विज! ॥४६॥

विशाखयूपमन्त्रेण साङ्गं तद्धारणाद्वयम्।
तद्बीजेन तनोर्व्याप्तिः कार्या विधिविशारदैः ॥४७॥

कृत्वा स्वं योगपट्टेन ततः शुभेन संस्थितम्।
देशिकः शिशुना युक्तो विभवन्यासमारभेत् ॥४८॥

हृत्पुण्डरीकमध्ये तु संन्यसेद् बीजमैश्वरम्।
करयोरब्जनाभीयं ध्रुवाख्यमथ विग्रहे ॥४९॥

शेषैरालभ्य पादान्तमामूर्ध्नश्चापि पूर्ववत्।
हस्तयोर्विग्रहे साङ्गं विन्यसेद् बीजमैश्वरम् ॥५०॥

मुद्रावसानं कृत्वैवं सम्यक् तदनु चाहरेत्।
रेणुसम्मार्जितां मध्यां वेदिकां गोमयेन च ॥५१॥

उदकेनोपलिप्तां तामस्त्रेण प्रोक्ष्य नारद!।
मण्डलं विलिखेत् पश्चात् मुख्ये पीठे तु देशिकः ॥५२॥

चतुरस्रं चतुर्द्वारं पीठाद्यवयवान्वितम्।
षट्त्रिंशद्दलपद्मेन मध्यतश्चाप्यलङ्कृतम्॥५३॥

वितानध्वजसंवीतं किङ्किणीदर्पणान्वितम्।
तोरण-व्यजनच्छत्र-चामर-स्रग्विमण्डितम्॥५४॥

यथावत् कथयिष्यामि मण्डलं ध्यानलक्षणम्।
यदुक्तं वासुदेवेन मुक्तिसिद्धिप्रदं ध्रुवम्॥५५॥

संसाध्य यष्टियोगेन[1] सूत्रात् पूर्वापरे पुरा।
तद् दिग्द्वयान्तरे दद्यात् प्राग् वै सूत्रचतुष्टयम्॥५६॥

समांशेन द्विधा कृत्वा स्फुटं मध्यात् तदङ्क्य च।
साधितेनार्धमानेन प्राक्प्रत्यक्स्थेन तन्तुना॥५७॥

दक्षिणोत्तरभागाभ्यां समुत्पाद्य चतुष्पथौ।
सूत्रं [2]पूर्वापरसमं कृत्वा तदुपरि क्षिपेत्॥५८॥

पुनरर्धसमं दिक्षु दत्त्वा कोणचतुष्टयम्।
चतुष्पथचतुष्केण नयेद् भक्तिं प्रसार्य च॥५९॥

सूत्रं समं चतुष्कञ्च[3] चतुरस्रास्रसिद्धये।
तद् विभज्याष्टदशभिश्चतुर्दिक्षु पदै: समै:॥६०॥

क्षिपेत् सूत्रगणं तत्र घटिकारेणुरञ्जितम्।
मध्ये पद्मावनिं कुर्याद् भागपङ्क्तित्रये क्रमात्॥६१॥

तद्बहि: पदपङ्क्त्या तु पीठमष्टदिगन्वितम्।
तस्य भागचतुष्कोत्थं दिक्चतुष्कं प्रकल्प्य च॥६२॥

विदिक्चतुष्कं त्रिपदं पङ्क्त्या पीठप्रदक्षिणम्।
प्रदक्षिणं क्षितेर्बाह्याच्चतुष्कं दिक्चतुष्टयात्॥६३॥

---

१. यष्टियागेन इति क।
२. पूर्वापरं समं इति ख।
३. समं सूत्रचतुष्कञ्च इति ख।

चतुर्णां तु चतुर्णां तु बाह्याद् बाह्यं द्वयं द्वयम्।
शोधयित्वा तु तद्बाह्याच्चतुष्कं द्वारसिद्धये ॥६४॥

चतुष्टयक्रमेणैवं भूयो दिक्षु पदं पदम्।
सबाह्याभ्यन्तरगतं शोधनीयं प्रयत्नतः ॥६५॥

पुनः सर्वपदाभ्यां तु षट्कं षट्कं तु चान्तरात्।[1]
संमार्ज्य पूर्णशोभार्थं तत्र रक्तोत्पलाष्टकम् ॥६६॥

यथा दिक्षु स्थितं कुर्यात् पूजनाय दिवौकसाम्।
बाह्यस्थपदपार्श्वात्तु त्रीणि त्रीणि च लोपयेत् ॥६७॥

त्रयाणामन्तरस्थं यत्पदमेकात्मतां नयेत्।
उपशोभं तु तं विद्धि कुर्यान्नीलाब्जभूषितम् ॥६८॥

पञ्चकं पञ्चकं कोणाद् वीथौ नीत्वा लयं पुरा।
शेषैः कोणं तु निर्वर्त्य सान्तरञ्च ततो बहिः ॥६९॥

दद्यात् सूत्रत्रयं चैव मध्येऽथ कमलं लिखेत्।
षट्त्रिंशद्दलसंयुक्तं तस्य लक्षणमुच्यते ॥७०॥

पीठावनिसमीपे तु चतुर्थांशपदात् पुरा।
समुद्धृत्य भ्रमं कुर्याद् ब्रह्मस्थानाच्च तन्तुना ॥७१॥

दिक्सूत्राणां चतुर्ण्णां वै एकैकं हि यदनन्तरम्।
वृत्तावधेः समैर्भागैः पत्रसङ्ख्यैर्विभज्य च ॥७२॥

षड्भिर्हीनं शतं सार्धं सूत्राणां तत्र निक्षिपेत्।
सूत्रं प्राक्पदसंस्थं यत् तदाश्रित्याब्जपल्लवम् ॥७३॥

---

१. पार्श्वयोः पूर्णशोभायामर्धं त्रिपदमन्वयात्।
द्वारस्य निकटे कुर्यादुपशोभाद्वयं तथा॥
पूर्णशोभाद्वयं चैव षट्केनार्धं विदांवर!
इति श्लोकः ६५ तथा ६६ AB इत्यत्राधोरेखायुक्तस्थाने ख-मातृकायां भिन्नम्।

कुर्याद् भागचतुष्केण[1] यथा तदवधारय।
सव्यापसव्ये ये सूत्रे अन्तरस्य निरन्तरे ॥७४॥

तयोरंशं समं कुर्याद् दलाग्रादङ्कमन्तरे।
तदुद्देशात् तु सूत्रेण तदङ्कान्तर्गतेन वै ॥७५॥

अर्धचन्द्रद्वयं कुर्याद् तेन सूत्रेण वै समम्।
पुनरभ्यन्तरे सूत्रं तत्सूत्राभ्यां निरोध्य च ॥७६॥

पत्राग्रमानयेत् तस्माद् बहिस्तं शृङ्गसन्निधेः।
लाञ्छ्यमानं दलाग्रं तु विधिनाऽनेन सिद्ध्यति ॥७७॥

दलाग्रब्रह्मदेशाभ्यां तुरीयांशेन चान्तरात्।
भ्राम्य वै कर्णिकावृत्तं द्व्यंशमानेन केसरम् ॥७८॥

दलाग्रगांशं वै मध्याद् व्योमार्थं भ्रामयेत् ततः।
कृत्वैवं वर्णकैः पूतं पूरणीयं महोज्ज्वलैः ॥७९॥

उच्चाग्रविततां पीतां सबीजां विद्धि कर्णिकाम्।
रेखान्वितानि पत्राणि सर्वाणि सुसितानि च ॥८०॥

केसरत्रितयं कुर्यात् पत्रे पत्रेऽरुणप्रभम्।
दलान्तरालमसितं वृत्तबाह्यं ज्वलत्प्रभम् ॥८१॥

सितानि पीठकोणानि रक्तं तद्दिक्चतुष्टयम्।
राजोपलप्रभां[2] वीथीं पत्रमालाद्यलङ्कृताम् ॥८२॥

पश्चिमांशाद् विना सर्वद्वाराण्यम्बुजपत्रवत्।
कृष्णानि सर्वशोभानि द्वारोद्देशस्थितानि च ॥८३॥

तदर्धाकृतितुल्यानि तूपशोभानि गर्भवत्।
कोणानि केसराभानि सितशङ्खान्वितानि च ॥८४॥

---

१. भागतुष्केण इति क।
२. राजोलप्रभां इति क।

शोणादिहेमवर्णञ्च क्रमाद् रेखागणं बहिः।
विलिख्य मण्डलं दिव्यं गन्धपुष्पाद्यलङ्कृतम्॥८५॥

देशिक आसने स्थित्वा पूर्ववन्न्यासमाचरेत्।
मुद्राप्रदर्शनान्तञ्च कृत्वा पूजनमाचरेत्[1]॥८६॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामाचाररात्रे
दीक्षोपयोगिसम्भारार्जन-मण्डलविलेखननामा
चतुर्थोऽध्यायः॥

---

१. पूजनमारभेत् इति ख।

## आचाररात्रे पञ्चमोऽध्यायः

विलिख्य मण्डलं धीमन् करुणार्द्रमना गुरुः।
मुद्रान्तं कर्म सम्पाद्य पूर्वोक्तं संयतेन्द्रियः॥ १॥

हस्ताभ्यां शङ्खचक्रे द्वे स्वमन्त्रेणाभिमन्त्रिते।
तादात्म्यमथ सम्पाद्य ते निधाय महीतले॥ २॥

सम्भारान् प्रेक्ष्य ब्रह्मर्षे! मनोयागं विधाय च।
गोमयेनोदकेनाथ सास्त्रं सम्प्रोक्ष्य नारद!॥ ३॥

यागशालां तथार्घ्यादि परिकल्प्यं चतुर्विधम्।
चन्दनं शशिबाह्लीकदूर्वासिद्धार्थकानि च॥ ४॥

साक्षतानि कुशाग्राणि तण्डुलानि तिलान्यथ।
काञ्चनं रजतं ताम्रं रत्नानि च फलानि च॥ ५॥

कदलीफलपूर्वाणि प्रधानेऽर्घ्ये विनिक्षिपेत्।
द्वितीये दधिमध्वाज्यक्षीरबिन्दुचतुष्टयम्॥ ६॥

कुशाग्रेण सबाह्लीकं सपुष्पतिलतण्डुलम्।
दूर्वा च विष्णुक्रान्ता च श्यामाकं शङ्खपुष्पिकाम्॥ ७॥

पद्मकं कुन्दरेणुञ्च पाद्यपात्रे विनिक्षिपेत्।
एलालवङ्गतक्कोलैः सह जातिफलानि च॥ ८॥

चन्दनञ्च सकर्पूरं क्षिपेदाचमनीयके।
कुष्ठं मांसीं हरिद्रे द्वे मुराशैलेयचम्पकान्॥ ९ ॥

वचाकच्चोरमुस्ताश्च स्नानीये तु विनिक्षिपेत्।
पात्रन्यासक्रमेणैव तानि पात्राणि कल्पयेत्॥१०॥

भद्रासनस्य कोणेषु सास्त्रेण प्रोक्ष्य वारिणा।
अर्घ्याम्बुकलशं न्यस्य वायव्ये द्विजपुङ्गव!॥११॥

आचमनीयमीशाने आग्नेये स्नानसंज्ञितम्।
नैर्ऋत्ये पाद्यसञ्ज्ञञ्च पात्राण्येवं तु विन्यसेत्॥१२॥

हार्देन मनुना कुर्यात् सर्वेषां द्रव्ययोजनम्।
षडङ्गसहितेनैवं तेनैव कुसुमार्चना॥१३॥

आवाहने सन्निधाने सन्निरोधे तथाऽर्चने।
विसर्जनेऽर्घ्यदानं तु प्राक् पात्रान्नित्यमाचरेत्॥१४॥

सम्पूजने च भोगानां गुर्वादीनां महामते!।
दक्षशिष्यात्मपूजार्थं पाद्यदानं समाचरेत्॥१५॥

पूजाकाले तथा स्नानात् पूर्वमाचमनं चरेत्।
स्नानीयं स्नानकालेऽथ प्रोक्षणादावपि मुने!॥१६॥

स्वर्णं वा राजतं वाऽथ ताम्रजं सुदृढं नवम्।
मृत्तिकाजं शुभं कुम्भं करकेण युतं पुरा॥१७॥

निर्मलोदकसम्पूर्णं न्यस्तरत्नसुवर्णकम्।
सूत्रवेष्टितसर्वाङ्गमलङ्कृत्य यथा पुरम्॥१८॥

सोपकुम्भञ्च वासोभ्यां छादितं दोषवर्जितम्[1]।
मण्डलात् पूर्वभागे तु धान्योपरि सुस्थापयेत्॥१९॥

---

१. दोषवजितम् इति क।

दक्षिणे कलशं वामे करकं सन्न्यसेन्मुदा।
विशाखयूपमस्मिन् हि मध्ये आवाह्य पूजयेत्॥२०॥

अस्त्रेण शतवारं[1] तु करकं चाभिमन्त्रयेत्।
चक्रमावाह्य तन्मध्ये तन्मन्त्रेण च पूजयेत्॥२१॥

अच्छिन्नधारया सिञ्चेत् प्रादक्षिण्येन पूर्वतः।
वेदिकां तन्निधायाऽथ निदध्याद् भद्रपीठके॥२२॥

मन्त्रकुम्भं तु सम्पूज्य सास्त्रं प्रणामपूर्वकम्।
तोरणध्वजपूर्वाणां कार्यमर्घ्यादिनाऽर्चनम्॥२३॥

ततो मण्डलदेवानां न्यासं पूजनमारभेत्।
विशाखयूपरूपेण स्थितेऽस्मिन् कारणात्मके॥२४॥

ध्रुवात्मा मण्डले मध्ये आवाह्यो भावपूर्वकम्।
दिक्चक्रमभिवीक्षन्तं प्राग् दलादितो तन्न्यसेत्॥२५॥

पातालशायिपर्यन्तमनन्ताद्यं महामते!।
न्यसेत् कमलबाह्ये तु ईशाद् वह्निपदावधि॥२६॥

चतुष्टयं किरीटाद्यं मन्त्राणां पूर्वं चोदितम्।
उदग्दक्षिणपूर्वाद्ये पश्चिमे दिक्चतुष्टये॥२७॥

न्यस्य बीजादिना मन्त्र्य पूजयेन्नतिपूर्वकम्।
अर्घ्यपुष्पादिनाऽभ्यर्च्य संविशेद् यागमन्दिरम्॥२८॥

मथित्वा विधिवद् वह्निं कुण्डे तं विनिवेशयेत्।
समिद्भिः सप्तभिः वह्निं सन्तर्प्यार्चनपूर्वकम्॥२९॥

पूर्णाहुतिं ततो दद्याद् बलिमादाय पात्रगम्।
माषोदनं च भूतेभ्यः क्षिपेद् यागगृहाद् बहिः॥३०॥

---

१. शंतवारं इति क।

ये विष्णुभाविनो भूता ये च तेषामनुयायिनः।
आहरन्तु बलिं तुष्टाः प्रयच्छन्तु शुभं मम ॥३१॥

प्रक्षाल्य पाणिपादौ स चुल्लीं संस्कृत्य प्राग्दिशि।
संक्षाल्यास्त्रेण गन्धेन स्थालीं विलिप्य बाह्यतः ॥३२॥

गोमयेनाथ सन्ताप्य कुशैः प्रज्वलितैस्ततः।
सन्ताड्य कुसुमास्त्रेण सितसूत्रेण कण्ठतः ॥३३॥

कवचेन चतुर्धा तां संवेष्ट्याघ्र्यादिनाऽर्च्य च।
स्थालीं चुल्ल्यां समारोप्य निक्षिपेत् तण्डुलांस्ततः ॥३४॥

मधु घृतं पयस्तस्यामस्त्रेणारोप्य चालयेत्।
मूलमन्त्रेण दृष्ट्वाऽथ नेत्रमन्त्रेण संस्कृता(त?)म् ॥३५॥

सिद्धमुत्तारयेत् कुण्डाच्छिखामन्त्रेण घट्टितम्।
शिरसा स्थगितं ब्रह्मन् चरुं संविभजेत् ततः ॥३६॥

चतुर्धा तेषु भागं वै एकं निवेद्य मण्डले।
मध्वाज्यसंप्लुतं कृत्वा द्वितीयं कुम्भदैवतम् ॥३७॥

तृतीयं भागमादाय तमग्निस्थे तु होमयेत्।
आधारदानमाज्येन कुर्यात् तेजोऽभिवर्धकम् ॥३८॥

विशाखयूपबीजेन पद्मनाभेन नारद!।
चरुं मूलास्त्रमन्त्रेण जुहुयाच्च शतत्रयम् ॥३९॥

पूर्णान्ते पूर्णया होमः कृत्वा शिष्यं समादिशेत्।
शुचिं शान्तं जितक्रोधं समाङ्घ्रिं[1] स्तब्धविग्रहम् ॥४०॥

भूषितं चानुलिप्ताङ्गं प्राङ्मुखञ्च धृताञ्जलिम्।
अस्त्रोदकेन सम्प्रोक्ष्य तेनैव ताडयेत्तिलैः ॥४१॥

---

१. समाघ्रिं इति क ।

सिद्धार्थकैः गुरुर्मूर्ध्नि[1] वासनाजालच्छेदकः।
फडन्तेनाऽथ चास्त्रेण कुशाग्रेणाङ्घ्रिगोचरात्॥४२॥

शिखान्तं ऋजुमार्गस्य सिद्ध्यर्थं ताडयेत्पुनः।
बध्नीयाद् वाससा नेत्रे तस्य नेत्रेण देशिकः॥४३॥

दत्त्वाऽर्घ्यं शिरसि विप्र! कृत्वा पूर्णाञ्जलिं पुरा।
निक्षिपेद्[2] देवधाम्नि तां विनयेनाञ्जलिं गुरुः॥४४॥

विमुच्य नेत्रबन्धं तं शिष्यमानन्दपुल्कितम्।
वीक्ष्य हर्षान्वितं भक्तं दृष्ट्वा विशुद्धमानसम्॥४५॥

सर्वाङ्गालभनं कुर्याच्चक्रहस्तेन देशिकः।
वासनानाञ्च विश्लेषं कुर्याद् ध्यानार्चनादिना॥४६॥

क्ष्मादिप्रकृतिपर्यन्तं देहे निवसतां ततः।
सप्तकानां तु बीजेनाभेदेनार्च्य पुरा मुने!॥४७॥

प्रकृत्यन्तं महीपूर्वं ध्यात्वा षट्पत्रवत् पुरा।
तन्मध्ये ईश्वरं ध्यायेत् प्राग्भागे केसरोर्ध्वगम्॥४८॥

वाराहाद् विश्वरूपान्तं षट्कं[3] नारद! विन्यसेत्।
भेददृष्ट्या यजेत् सम्यग् वासनाच्छेदहेतुना॥४९॥

पीतं वज्रयुतं ध्यायेत् सबीजं तुर्यलक्षणम्।
तत्त्वं हेमाब्जसंभूतं पृथिव्यास्तत्र मध्यतः॥५०॥

वाराहं संयजेत् साङ्गं हृन्मन्त्रं चार्चयेन्मुदा।
अप्तत्त्वे कारणे पृथ्वीं संहृत्याधे(र्धे?)न्दुरूपकम्॥५१॥

---

१. गुरुर्मूर्ध्नि इति क।
२. निक्षेपयेद् इति क।
३. वाराह-सरःशय-नृसिंह-खगासन-वागीश्वर-विश्वरूप-इति क्रमशः पृथ्वी-जल-तेजः-वायु-आकाश-अन्तःकरणानां देवतारूपं षट्कम् इत्यर्थः।

स्थितं पद्माङ्कितं स्मृत्वा सितपद्मोदरं महत्।
अप्तत्त्वं स्वेन बीजेन शिरोमन्त्रेण पूजयेत्॥५२॥

सर:शयं तदन्त:स्थं पूज्य तेजसि संहरेत्।
तेजोमयं तदूर्ध्वे तु त्रिकोणं स्वस्तिकाङ्कितम्॥५३॥

रक्तज्वालाकलाकीर्णं सबीजं नरकेसरी(रीम्?)।
पूजयेत् तस्य संहारो वायौ कुर्याच्च देशिक:॥५४॥

तारागणाङ्कितं श्यामं वृत्ताकारं समीरणम्।
सबीजं देवता तस्य खगासनेन संयुतम्॥५५॥

कवचेन तथाऽऽमन्त्र्य पूज्याऽऽकाशे तु संहरेत्।
नीरूपं खं तदूर्ध्वे तु स्मरेच्छब्दैकलक्षणम्॥५६॥

तदन्त:पङ्कजे ध्यायेद् वागीश्वरं हि दैवतम्।
अस्त्रमन्त्रं तथाऽभ्यर्च्यान्त:खतत्त्वे[१] च संहरेत्॥५७॥

चतुष्पत्रं तु पद्मं तन्मनोऽहङ्कारचित्तधि:(धी?)।
नानारत्नप्रभं तत्त्वं विश्वं यत्र समन्वितम्॥५८॥

तदुच्छेदे तु संसारवासनोच्छेदनिश्चय:।
बटो:[२] सम्भवति तस्मात् तं सम्पूज्याथ संहरेत्॥५९॥

तत्कारणे प्रकृत्याख्ये विशाखयूपमर्चयेत्।
अव्यक्तं तद्धि चिद्गर्भं मूलं संसारकारणम्॥६०॥

दोषान् विज्ञाय[३] तत्त्वानां निर्दोषं परब्रह्म वै।
अनादिवासनां स्वस्मिन् स्थितां जन्मान्तरात्मिकाम्॥६१॥

वैषयात् तत्त्वरूपाच्च निरासक्तं शिशुं मुने!।
कृत्वा तिलघृतैर्युक्तां जुहुयाद् द्वादशाहुति:(ती:?)[४]॥६२॥

---

१. अन्त:करणे इत्यर्थ:।
२. बटो इति क।
३. विज्ञाप्य इति ख।
४. द्वादशाहुतीम् इति ख।

होमयेद् वर्मणाऽस्त्रेण कर्मविश्लेषहेतुना।
वासुदेवं परानन्दमनुसन्धाय स्वेन च ॥६३॥

दद्यादष्टाहुतीश्चात्र[1] मूलेन सघृताः पुरा।
उत्तमाङ्गं शिशोः स्पृष्ट्वा स्रुवेणाज्यान्वितेन च ॥६४॥

हुत्वा हृदादिना भूयः षडङ्गेन तपोनिधे!।
कृत्वा सम्पातहोमं तदाज्येनाथ सकृत् सकृत् ॥६५॥

मन्त्राणां तर्पणं कृत्वा प्रायश्चित्तं यजेत् ततः।
एतावता महाबुद्धे! शिशोर्जन्माश्रितस्य च ॥६६॥

याति जन्मान्तरस्याथ हेयरूपस्य संक्षयः।
अथादायारुणं सूत्रं कृत्वा सप्तगुणं पुरा ॥६७॥

दृशा निरीक्षितं चास्त्रवारिणा परिशोधितम्।
तदङ्गुष्ठावधिं यावच्छिखान्तं तं समाहरेत् ॥६८॥

क्ष्मातत्त्वात् प्रकृतितत्त्वं वेष्टितं पाञ्चभौतिके।
मधुसूदनपर्यन्तं पातालशयनादथ ॥६९॥

सप्तकं[2] सप्तकं षट्कं सम्पश्येत् क्ष्मादिपञ्चके[3]।
अन्तःकरणसङ्घस्थं शक्त्यात्मादिचतुष्टयम्[4] ॥७०॥

[5]प्रकृतावीशतत्त्वं तु सर्वश्रेष्ठं विचिन्तयेत्।
भूतानां देवतात्मान आधिदैवतरूपकाः ॥७१॥

---

१. दद्यादष्टावाहुतीश्च इति ख।
२. तुरीयं इति ख।
३. चत्वारि सप्तकानि, एकं षट्कम् इत्यर्थः। तत्र पातालशयनादूर्ध्वं हरिपर्यन्तं पृथिव्याम्, नारायणादूर्ध्वं दत्तात्रेयपर्यन्तं द्वितीयं सप्तकं जले, लोकनाथादूर्ध्वम् अमृताहरणं यावत् सप्तकं तेजसि, नरसिंहाद् वडवावक्त्रं यावच्चतुर्थं सप्तकं वायौ, क्रोडात्मनो मधुसूदनपर्यन्तं षट्कमाकाशे इत्यर्थः।
४. मनोबुद्धिचित्ताहङ्कारात्मकान्तःकरणचतुष्टयस्य शक्त्यात्मा-अनन्त-ध्रुव-पद्मनाभाख्या देवता विज्ञेया इत्यर्थः।
५. प्रकृतौ अब्जनाभस्य ध्यानमित्यर्थः।

तत्त्वाभिमानिनो विप्र! न जीवानां तु दुःखदाः।
एते वैभवदीक्षायामधिवासनकर्मणि ॥७२॥

अधिष्ठिता हि विज्ञेया व्यूहे सङ्कर्षणादयः।
त्रयः षडध्वनि व्याप्तारे(प्ता ए?)कैका अध्वनोर्द्वयोः ॥७३॥

स्थिताः सङ्कर्षणान्ताश्चाप्यनिरुद्धादयस्तु ते।
सप्तमे वासुदेवस्तु मूलमन्त्रात्मकः प्रभुः ॥७४॥

ब्रह्मदीक्षाप्रदाने तु परात्परः स्थितः प्रभुः[१]।
स्थितः पूर्वोक्तमन्त्रेण समायोज्यः षडध्वनि ॥७५॥

अन्यत् सर्वं समानञ्च बुद्ध्यादिकञ्च तत्त्वजम्।
शरीरे हि परिज्ञाय विश्लेषणमथारभेत् ॥७६॥

आकृतिसप्तकं स्मृत्वा ह्यस्त्रमन्त्रेण नारद।
सितेन रजसा कायं शिशोः संताडयेद् गुरुः ॥७७॥

विश्लेषयाऽमुकं ब्रूयात् पदं वीर्यपदानुगम्।
धरादीन् चिन्तयेत् सूत्रे विश्लिष्टान् च शिशोस्तनोः ॥७८॥

तत्सूत्रं सप्तधा भङ्क्त्वा शरावेऽन्यत्र निक्षिपेत्।
कुम्भपार्श्वे[२] शरावेण पिधायान्येन देशिकः ॥७९॥

कवचाच्छादितं कृत्वा कुम्भं मण्डलमर्चयेत्।
सशिष्योऽथार्चनं कुर्यात् पुनर्विश्वात्मनो विभोः ॥८०॥

प्रदक्षिणैः प्रणामैस्तु नानास्तुतिपदैः सह।
पञ्चगव्यमथो पेयं नेत्रहृन्मन्त्रमन्त्रितम् ॥८१॥

चरुशेषं च भुञ्जीत शिष्येण सह देशिकः।
ततः शिशुः समायोज्यो दन्तकाष्ठस्य धावने ॥८२॥

---

१. अधोरेखायुक्तं ख-मातृकायामेवोपलभ्यते।
२. कुम्भपार्श्वं इति क।

भुक्त्वोज्झिते दन्तकाष्ठे गुरुः कुर्याद् विचारणाम्[1]।
पूर्वपश्चिम ईशाने उदिच्यां दिशि[2] ॥८३॥

तत् सिद्धिसूचकं ज्ञेयं विपरीतमतोऽन्यथा।
वैपरीत्यं(त्य?) विनाशाय वीर्यमन्त्रेण वै शतम् ॥८४॥

जुहुयाद् दोषशान्त्यर्थं सघृतैस्तिलकैर्मुदा।
धूपानुलेपनादीनि पूजाद्रव्याणि सर्वतः ॥८५॥

उत्तरे ह्यस्त्रमन्त्रेणैकीकृत्याथ[3] छादयेत्।
वाससाऽऽहतेनाथ मण्डलं कुम्भमर्चयेत् ॥८६॥

अथ शुद्धे च भूभागे हृन्मन्त्रितकुशास्तरे।
कृत्वा प्राङ्मस्तकं शिष्यं स्वप्नलाभाय स्वापयेत् ॥८७॥

हृन्मन्त्रितांस्तिलांस्तत्र सिद्धार्थकयुतान् बहिः।
आसनात् परितो विप्र! विकी(कि?)रेद्रक्षणार्थकान् ॥८८॥

गुरुश्च दर्भशय्यायां कृत्वा दक्षिणतः शिरः।
संस्पृशन् स्वाङ्घ्रियुग्मेन शिशुं शयनसंस्थितम् ॥८९॥

भगवन्तं हि मनसा प्रार्थयन् मोक्षदं शिवम्।
भगवन् देवदेवेश! सर्वज्ञ! हृदयेशय! ॥९०॥

स्वप्नेऽहं योजयाम्येनं शिशुं त्वदाश्रितं प्रभो!।
यत्र यत्र मनो गच्छेत् तत्र त्वं सन्निधौ भव! ॥९१॥

इति श्रीनारदपाञ्चरात्रे सङ्कर्षणसंहितायामाचार-
रात्रेऽधिवासनिरूपणनामा
पञ्चमोऽध्यायः।

---

१. विचारणा इति क-ख।
२. यदि पूर्वदिगाननम् इति ख।
३. ह्यस्त्रमन्त्रेणैकत्रीकृत्याथ इति ख।

## आचाररात्रे षष्ठोऽध्यायः

**सङ्कर्षण उवाच**

ततः प्रभाते उत्थाय देशिकः शयनान्मुने!।
आदाय करकं पादौ प्रक्षाल्याचम्य नारद!॥ १॥

स्मृत्वाऽस्त्रं प्रविशेदन्तः हुतभुग्राशिसन्निभम्।
निद्रामोहस्य नाशाय मान्त्रं स्नानं समाचरेत्॥ २॥

शङ्कून् संस्थाप्य संरक्ष्य मण्डपं मण्डलान्वितम्।
निर्वर्त्य दैनिकीपूजां पुरा वै स्नानपूर्वकम्॥ ३॥

शिष्यमाहूय सुस्नातं वस्त्रालङ्करणैर्युतम्।
ततः स्वप्नान् विजानीयाद् निद्रोपस्थान् शुभाशुभान्॥ ४॥

चतुर्मूर्तिसमूहं[1] तु केशवादिकदेवताः।
शङ्ख-चक्र-गदा-पद्म-गान्धर्वनगरादिकम्॥५॥

रुद्रेन्द्र-चन्द्र-सूर्याम्बु-हुतभुग्वात-लक्षणम्।
देवद्विजगुरुप्राज्ञसाधुभिश्च समागमः॥ ६॥

पञ्चरात्रविदो विप्रा आराधनपरायणाः।
यतयः शुद्धसत्त्वाश्च सद्ब्रह्मपदसंस्थिताः॥ ७॥

देवागारो रथश्चैव श्रीवृक्षश्च सरस्वती।
चामरं तालवृन्तञ्च देवार्घ्यपात्रकं तथा॥ ८॥

गोगजाश्च नदी यानं कन्या सालङ्कृता शिशुः।
नरनागादिसौधानां शिबिकाफलवृक्षयोः॥ ९॥

---

१. चतुमूर्तिसमूहं इति क।

शकटासनशय्यायां सुखेनैवाधिरोहणम्।
पुष्पस्रक्चन्दनादीनि सुगन्धानि तरूत्तमः॥१०॥

प्रदीप्तमग्निहोत्रञ्च निगदन्तश्च वा द्विजाः।
सत्पक्षिमृगसङ्घातं सुरार्चा रत्नवैभवम्॥११॥

मङ्गल्यगीतिगानञ्च मातरं पितरं तथा।
पुत्रान् भ्रातॄन् सुहृद्वर्गं महामेघोदयं[1] नभे॥१२॥

सद्वृष्टिर्हिमपातश्च खप्लुतिर्मदिरालयः।
स्वाप्नान् एवंविधान् श्रुत्वा शिशोर्मुखात् शुभान् गुरुः॥१३॥

शीघ्रेण दीक्षणीयः सोऽनिष्टानि शृणु नारद!।
स्वात्मानं वस्त्रहीनं तु नग्नं कुचेष्टितं तथा॥१४॥

म्लानता क्षितिकम्पश्च शुष्कवृक्षाधिरोहणम्।
खरोष्ट्रमहिषव्याघ्रवल्मीकारोहणं तथा॥१५॥

रूपकाञ्चनलाभश्च स्विन्नमांसस्य भक्षणम्।
मधुतैलादिपानञ्च नग्नप्रेतस्य दर्शनम्॥१६॥

सलिलोन्मज्जनं शुष्कसरिद्दर्शनमेव च।
चण्डाल-रजकश्वित्री-म्लेच्छ-पाखण्डिदर्शनम्॥१७॥

महिषोऽहिर्नरः कृष्णो दक्षिणाशागमः क्षुधा।
अनुभूयात्तदा ज्ञेयमशुभं स्वप्नदर्शनम्॥१८॥

स्वाङ्गवैकल्यदुःखादि दन्तानां पतनं तथा।
लुञ्छनं नखकेशानामुपरागोऽतिभीषणः॥१९॥

स्वप्ना एते ह्यमङ्गल्या ज्ञेया अन्येऽपि तादृशाः।
ज्ञात्वाऽशुभं स आचार्यो विघ्ननाशाय संयजेत्॥२०॥

---

१. हामेघोदयं इति क।

नारसिंहेन मन्त्रेण तिलैस्तु घृतमिश्रितैः।
अष्टोत्तरशतैर्धीमान्[1] कुर्यात् पु(पू?)र्णाहुतिं ततः॥२१॥

ऐशान्ये ह्यथवा सौम्ये दिशि यागगृहस्य च।
मण्डले निर्मिते पूर्वे वृत्ते वा चतुरश्र(स्र?)के॥२२॥

स्नातं शुद्धं शिशुं तत्र कृतन्यासं निवेशयेत्।
ध्वजतोरणकुम्भादिपूजां कुर्याद् यथा पुरा॥२३॥

निरीक्ष्य नेत्रमन्त्रेण ह्यस्त्राभिमन्त्रितैस्तिलैः।
सिद्धार्थकैश्च सन्ताड्य प्रोक्षयेदस्त्रवारिणा॥२४॥

दर्भैरालभ्य सर्वाङ्गं परामृश्याऽथ मूर्धनि।
तेजस्विमन्त्रहस्तं तु शिशवेऽर्पयेन्मुदा॥२५॥

ततो प्रदक्षिणीकृत्य यागशालाञ्च मण्डलम्।
शिष्यस्य पूर्ववन्नेत्रे बद्ध्वा नूतनवाससा॥२६॥

संच्छाद्य लोचने भूयो दद्यात् सार्घ्यं शुभाञ्जलिम्।
मण्डलं निकटे स्थित्वा क्षेपयेदथ देशिकः॥२७॥

विमोच्य लोचने तस्य संपश्येत् पतिताञ्जलिम्।
यस्मिन् मण्डलभागे स[2] पतति कुसुमाञ्जलिः॥२८॥

तद्भागाधिपमूर्तीनां नाम यस्य यथोचितम्।
तस्मिन्नवसरे कुर्याद् देशिकः शास्त्रपारगः॥२९॥

मुख्यं रहस्यसञ्ज्ञञ्च गौणं वाऽस्य यथास्थितम्।
सामान्यं वासुदेवाद्यं केशवाद्यमथो गुरुः॥३०॥

भट्टं भागवतान्तं वा स्वाम्यन्तं वा द्विजात्मनाम्।
क्षत्रियाणां तु देवान्तं वर्मान्तमथवा मुने!॥३१॥

---

१. अष्टोत्तरशत धीमान् इति क।
२. सा इति क।

वर्धनान्तं तु वैश्यानां मूर्तिलाञ्छनपूर्वकम्।
गुप्तान्तमथवा कार्यं दासान्तं शूद्रजन्मनाम्॥३२॥

भृत्यान्तं नाम वा देयं सौम्यमन्वर्थसञ्ज्ञकम्।
कुण्डस्य पश्चिमे भागे प्राङ्मुखमुपवि(वे?)श्य च॥३३॥

ततः चक्रश्च शङ्खश्च तत्तन्मन्त्रैः प्रतिष्ठितौ।
दक्षिणे बाहुमूलेऽस्य चक्राङ्कनमथाचरेत्॥३४॥

वामे शङ्खाङ्कनं कुर्याद् वैष्णवानां प्रचारकम्।
शङ्खचक्रौ तु क्षीरेणाभिषिच्यार्च्य यथाविधि॥३५॥

मूलमन्त्रेण संपूज्य यजेत् [1]पूर्णाहुतिं द्विज!।
ततस्तु चोर्ध्वपुण्ड्राणि धारयेद् बटुको मुदा॥३६॥

आज्ञया देशिकस्याथ नित्यं तु श्वेतमृत्स्नया।
चन्दनेनाऽथवा ब्रह्मन् केसरादियुतेन च॥३७॥

अस्त्रमन्त्रेण संक्षाल्य घट्टयेत् श्वेतमृत्तिकाम्।
प्रणवेन तु विन्यस्य द्वादशार्णेन तां मृदम्॥३८॥

धारयेदु(दू?)र्ध्वपुण्ड्रं तु यदुक्तं प्राङ् मया मुने!।
सबीजां मन्त्रराशिं तु गुरुरुपादिशेद् बटुम्॥३९॥

मुने[2] पिण्डं पदं सञ्ज्ञां परं व्यूहं च वैभवम्।
साधनं शिक्षयेन्मन्त्रं मोक्षदं सिद्धिदं तथा॥४०॥

संस्कृत्य शिशुकं प्राग्वत् सन्ताड्य हृदयं विशेत्।
दहनाप्यायनाख्येन कुर्याद् भूतौघशोधनम्॥४१॥

उपवीतं ततो नूत्नं दद्याच्छिष्याय धीमते।
दासत्वभावयुक्ताय पञ्चभिः संस्कृताय च॥४२॥

---

१. पूणाहुतिं इति क।
२. ऋषिं इति ख।

त्रैवर्णिकस्य जन्मेदं नूतनं खलु कथ्यते।
ब्रह्मनिष्ठस्य शुद्धस्य कर्मतन्त्ररतस्य च ॥४३॥

शूद्रजातेस्तु गोदानं[1] विहितं मन्त्रबोधनम्।
नमस्कारेण कर्तव्यं वौषट्स्वाहाफडं विना ॥४४॥

ततो मूर्तौ[2] तु कर्तव्यं पुष्पक्षेपञ्च मण्डले।
मूलेनाष्टोत्तरशतं जुहुयात् सघृतैस्तिलैः ॥४५॥

क्ष्मादीनां सप्ततत्त्वानां देहस्थानाञ्च संहरेत्।
कुम्भं सम्पूज्य तत्रस्थं सूत्रं देहे प्रसार्य च ॥४६॥

शिष्यस्य ऋजुभूतस्य दृष्ट्वा सूत्रयुतं वपुः।
अग्निस्थं भगवद्रूपं व्यक्तं मन्त्रात्मकं मुने! ॥४७॥

तस्मिन् हरौ शिशौ सूत्रे स्वात्मन्यध्वानमादिशेत्।
मन्त्रेऽध्यात्मरूपं तु स्वात्मनि चाधिदैवतम्।
अधिभूतमयं सूत्रे शिष्यदेहे त्रयं स्मरेत् ॥४८॥

मूलमन्त्रावसाने तु सनमस्कं परात्मने।
पदं कृत्वा तु जुहुयादाहुतीनां चतुष्टयम् ॥४९॥

ततः सूक्ष्मात्मने चोक्त्वा ततः स्थूलात्मने तथा।
सर्वात्मने च तदनु यजेत् पूर्वविधिं[3] ततः ॥५०॥

संतर्प्य क्ष्मादितत्त्वानि मार्गषट्कमनुस्मरेत्।
पृथिव्यां भुवनाध्वानं जले पदात्मकं तथा ॥५१॥

त्रिगुणं तद्धि विज्ञाय मलिनं तं त्यजेद् बटुः।
प्रकाशतः कृपापूर्णे देवते तदधिष्ठिते ॥५२॥

---

१. गोदान इति क।
२. ततोर्मूर्तौ इति क।
३. पूर्वविधं इति ख।

दुःखरूपमनित्यञ्च ह्यशुचिं देहपञ्जरम्।
नश्वरं स्वर्गलोकादि ततो वैराग्यमाप्नुयात्॥५३॥

मन्त्राध्वा तेजसि ज्ञेयो वायौ तत्त्वाध्वसंस्थितिः।
ज्ञानादिगुणरूपस्य कलामार्गस्तु खात्मकः॥५४॥

वर्णाध्वानं विजानीयात् स्वान्तःकरणरूपकम्।
षडध्वा(ध्व?)नां तु मूलं वै ईश्वरः परमं पदम्॥५५॥

विज्ञेयमसितं सर्वं त्रिगुणं दुःखदं तथा।
त्यक्त्वा तान् प्राकृतान् तत्त्वान् सुस्थेयं परमात्मनि॥५६॥

किन्तु तज्ज्ञानप्राप्त्यर्थम् आरभेत शनैः बटुः।
सम्पूज्य देवतास्तेषां बीजेन जुहुयाद् गुरुः॥५७॥

तत्त्वाध्वनि बटुः स्थित्वा क्रमशो देशिकाज्ञया।
साम्राज्यं प्रकृतेः सर्वं तृणवद् वेत्ति साधकः॥५८॥

माध्यमेन च मन्त्राणां निदेशे दैशिके स्थितः।
वासुदेवात्मको भूत्वा वैष्णवान् मार्गमादिशेत्॥५९॥

सूत्रं शिष्यशरीरस्थं विमुच्य जुहुयाद् गुरुः।
क्ष्मादिबीजेन संयुक्तं तत्तदङ्गेन वेष्टितम्॥६०॥

मन्त्रवृन्दं समुच्चार्य सप्तधा क्रमशो गुरुः।
पूर्णाहुतिं ततो दद्यात् सिञ्चेद् यज्ञावनिं ततः॥६१॥

प्रणीतोदकमालम्ब्य ततो भस्मोर्ध्वपुण्ड्रकम्।
कृत्वा शिष्यललाटेऽथ प्रणम्याग्निञ्च मन्दिरम्॥६२॥

यायादुत्थाय तत्स्थानात् पूजयित्वा परात्परम्।
नियमा देशिकेन्द्रेण बोधनीया यथार्थतः॥६३॥

इतिकर्तव्यता चैवं शास्त्रोक्ता विस्तरात्तथा।
तन्त्रोक्तान्[1] नियमान् वक्ष्ये नारद! सुयशःप्रदान्॥६४॥

---

१. गुर्वोक्तान् इति क।

मण्डपे स्वासने स्थित्वा बटुं स्थाप्य स्वसम्मुखम्।
गुरुणा प्रतिपन्नस्य प्रदेयास्तद्धितावहाः॥६५॥

अर्चयेद् वासुदेवं तु नित्यं सर्वात्मदं विभुम्।
गौरवं धारयेच्चित्ते वैष्णवस्य[1] महात्मनः॥६६॥

अयने विषुवे चैव ग्रहणे शशिसूर्ययोः।
अमावास्यां च जन्मर्क्षे सङ्क्रान्त्यां श्रवणे तथा॥६७॥

स्नपनं पूजनं होमं यथाशक्ति महाहविः।
नावमान्या द्विजा ब्रह्मन् वृद्धाश्च यतयस्तथा॥६८॥

देवगोब्राह्मणान् वृद्धान् सिद्धांश्चैवार्चयेन्मुदा।
गुरुमेवाश्रयेज्ज्ञानिन् सर्वभावेन नारद[2]॥६९॥

गुरुरेव परब्रह्म गुरुरेव परायणः।
गुरुर्दाता हरिर्देयस्तस्मादस्त्यधिको गुरुः॥७०॥

नाक्रम्या गौरवी छाया दैवी यानगता अपि।
गुरुवद् गुरुवर्गश्च पूजनीयो यथाविधि॥७१॥

शयानो देशिकः क्वापि लङ्घनीयो न सुव्रत!।
अतन्द्रितः सदा कुर्यात् तद्गृहे कर्म स्वात्मवत्॥७२॥

नाऽऽसने तत्समक्षञ्च वस्तव्यं न च दक्षिणे।
नोपदेशस्तु दातव्यो विनाऽऽज्ञां देशिकस्य च॥७३॥

न शङ्खचक्रपद्माङ्के पात्रे भोजनमाचरेत्।
काष्ठे लोष्ठे फले चैवोपले तैरङ्किते तथा॥७४॥

न लङ्घयेत् स्वपादेन न स्पर्शेच्चैव साधकः।
नास्तिकान् भिन्नमर्यादान् देवब्राह्मणदूषकान्॥७५॥

---

१. वैष्णस्य इति क।
२. अधोरेखायुतं ख-मातृकायामेवोपलभ्यते।

अभक्तांश्चैव मूर्खान् च न स्पृशेन्नैव भाषयेत्।
औदासीन्यं हि तैः सार्धं नैव निन्द्याश्च केचन ॥७६॥

गुह्यं नाम च गोत्रञ्च मन्त्रञ्चैव महामते!।
न प्रकाश्यं विना पात्रं गोप्यं हिरण्यवत् सदा॥७७॥

कांस्यपात्रे न भोक्तव्यं न तत्र विनिवेदयेत्।
देवाय मधुपर्काद्यं नैव तस्मिन् समाचरेत्॥७८॥

मृण्मयायसपात्रेषु न धूपं निर्दहेत् पुरा।
मासं मद्यञ्च न ग्राह्यं स्वप्नेष्वपि सुवैष्णवैः॥७९॥

लशुनञ्च पलाण्डुञ्च भङ्गादिकमपि बटो!।
पुष्पाणि चिन्वीयाच्छिष्यः सुगन्धीनि सितानि च॥८०॥

चतुष्पथ-शिवावास-स्मशानादि-स्थितानि तु।
क्षतान्यशनिपाताद्यैः क्रिमिकीटान्वितानि च॥८१॥

नैव ग्राह्याणि देवार्थं पत्रफलादिकं तथा।
नोच्छिष्टं संस्पृशेन्नैवं नाश्नीयाद् भगवद्गृहे॥८२॥

निन्दा हास्यं रोदनञ्च न कार्यं देवमन्दिरे।
शिष्याणां कृतदीक्षाणां देयः शास्त्रार्थ एव हि॥८३॥

अन्येषामपि योग्यानां धर्मशास्त्राणि पाठयेत्।
संशये कस्यचित् कार्ये प्रष्टव्यो वृद्धशास्त्रवित्॥८४॥

न संदिग्धं पाठनीयं तथा स्वयं विनश्यति।
भक्तिर्मन्त्रे गुरौ शास्त्रे मूर्तौ कार्या ह्यतन्द्रितैः॥८५॥

वैष्णवान् ब्राह्मणांश्चैवं मानयेद्भोजयेत्तथा।
गाञ्च भूमिं हिरण्यादि भूषणं यानमेव च॥८६॥

दासीदासादि तेभ्यश्च वितरेद् विभवं यथा।
संकीर्तयेद् दिवारात्रं वासुदेवं सनातनम्॥८७॥

इत्येवमाद्यान् समयान् श्रावयेद् देशिको मुदा।
शान्तिहोमं ततः कृत्वा पूर्णाहुतिं समाचरेत्॥८८॥

विसृज्याग्निं ततो कुम्भे मण्डलस्थाश्च[1] देवताः।
विसर्जेरन्(र्जयेत्?) हृदि सद्यो वर्धयेदाशिषा बटुम्॥८९॥

शिष्यश्च गुरवे दद्यात् स्ववैभवानुसारतः।
सम्पूज्य गां हिरण्यञ्च वस्त्रयानादिकं यथा॥९०॥

इत्येवं वैभवी दीक्षा ब्रह्मर्षे! कथिता मया।
सिद्धिमोक्षयुता ब्रह्मन्! दद्याद् योग्याय सर्वदा॥९१॥

व्यूहाख्या च प्रदेयाऽथ ततः षड्गुणप्राप्तये।
सिद्धये मुक्तये चैवम् उत्तमकुलजन्मनाम्॥९२॥

ब्राह्मी दीक्षा परीक्ष्याथ शिष्यं व्यूहमनु मुने!।
प्रदेया मोक्षदा नित्या सर्वकार्यार्थसाधिका॥९३॥

तत्र नेच्छति शिष्यस्तु भूवित्तसिद्धिसाधनम्।
आवश्यकानुसारेण ददन्ते देवताः स्वयम्॥९४॥

ब्रह्मदीक्ष्यो हि योग्यत्वं लभते देवपूजने।
मोक्षदाने प्रतिष्ठायां यज्ञशान्त्यादिसाधने॥९५॥

ब्रह्मदीक्ष्यस्तथाऽऽप्नोति देहान्ते निश्चयात्खलु।
ब्रह्मधाम सुखारामं न स आवर्तते पुनः॥९६॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामाचाररात्रे
दीक्षात्रयनिरूपणनामा
षष्ठोऽध्यायः।

---

१. मण्डलस्थे च इति क।

## आचाररात्रे सप्तमोऽध्यायः

अभिषेकविधिं वक्ष्ये शिष्याणां.........
........................ द(दे?)शिक .............
भद्रपी.............. तस्य .................... स्मरेत्
.................. प ............ अच्युतं..........
समयि........ साध ............ आचार्य.........
............ पुरतः कुर्यात् मण्डलम् ........
कुम्भोपकुम्भं सम्पूज्य .......................
समयज्ञस्य सम्पाद्यं देशिकेनाभिसेचनम् ॥३५ ॥
उच्चरन् स्नापयेन्मन्त्र .........................
पूर्णं मध्वम्बुपयसा ................... चक्रगम्।
मुद्रिकामुष्णि(ष्णी?)षञ्चैव छत्रं शास्त्रञ्च चामरम् ॥६० ॥
........... ........ ....... ........... ....... ..........
अनुव्रज्य .....................................................
........... मध्ये .................. निधाय .....
इत्यं (त्येवं?) कथितं तुभ्यं नारद! ह्यभिषेचनम् ॥७० ॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामाचार-
रात्रेऽभिषेकविधिनिरूपणनामा
सप्तमोऽध्यायः[1]।

---

१. ख-मातृकायां सप्तमोऽध्यायो नास्ति।

## आचाररात्रेऽष्टमोऽध्यायः

नारदः पप्रच्छ

भगवन्! देवदेवेश! धर्मविज्ञानपारग!
पाञ्चरात्रिकधर्मेषु रतानामधिकारिणाम्।
निषेकादिस्मशानान्तं विधिमाख्यातुमर्हसि॥ १॥

कस्मिन् काले कया रीत्या केन मन्त्रेण लाङ्गलिन्!।
को विधिः वासुदेवीयैः कार्यस्तन्मां प्रदर्शय॥ २॥

सङ्कर्षणः

शृणु नारद! वक्ष्यामि दीक्षितानां तु कर्मिणाम्।
हितकृद् वासुदेवेन प्रोक्तः सिद्धैरनुष्ठितः॥ ३॥

गर्भाधानं समारभ्य चरमावधिकं विधिम्।
श्रुत्वैनं श्रितवृन्देषु प्रवर्तयितुमर्हसि॥ ४॥

ऋतुशान्तिं विधायादौ ऋतुस्नातां सुलक्षणाम्।
पञ्चमाह्नः समारभ्य पुत्रार्थे युग्मरात्रिषु॥ ५॥

कन्याकामस्त्वयुग्मासु संविशेदार्तवे स्त्रियम्।
कुम्भमण्डलमूर्त्यादीन् इष्ट्वा षोडशधा मुने॥ ६॥

समिज्याग्नौ घृतैः दत्त्वा नृसूक्तेन चरुं तथा।
होमं विधाय तच्छेषं भक्षयित्वा च दक्षिणाम्॥ ७॥

ब्राह्मणेभ्यश्च भक्तेभ्यो दत्त्वा रमेत दीक्षितः।
तस्मिन्नेव दिने रात्रौ कृत्वा ताम्बूलभक्षणम्॥ ८॥

एकान्ते निर्जने स्थाने श्वेतहारैरलङ्कृतः।
प्राङ्मुखो हृदयं स्पृष्ट्वा हृदयेन मनुना गृही॥९॥

उपास्य सद्गुणैर्युक्तां पत्नी(नीं?) संततिप्राप्तये।
गर्भाधानमिदं प्रोक्तं पुंसवनमथोच्यते॥१०॥

तृतीये मासि कुर्वीत पत्न्याः पुंसवनं शुभम्।
शतमष्टोत्तरं मन्त्रं मूलं जप्त्वा यथासुखम्॥११॥

न्यग्रोधस्याङ्कुरं क्षिप्त्वा तस्या नासापुटे ततः।
सिञ्चेद् दु(दू?)र्वारसं वाऽथ दक्षिणे द्वादशार्णयुक्॥१२॥

पुत्रपतिवती नारी गर्भिणीमुपदेशयेत्।
सच्छास्त्रव्यसनं कार्यं मा कृथा ग्राम्यचिन्तनम्॥१३॥

मा कुरु क्लेशदं कर्म गर्भसंरक्षणं कुरु।
मन्त्रजापं कुरु नित्यं वासुदेवस्य पुत्रके!॥१४॥

[1]षष्ठेवाऽष्टमे मासि सीमन्तं कारयेच्छुचिः।
केशालङ्करणं तस्याः कारयेत् तत्सम्बन्धिभिः॥१५॥

जठरं संस्पृशेद्धीमान् जितन्तस्तोत्रमुच्चरन्।
गाययेन्मधुरैः कण्ठैर्भगवद्गुणकीर्तनम्॥१६॥

जाते सुते पिता स्नायाद् विलोकयेन्मुखं शिशोः।
यवव्रीहिसुवर्णञ्च मधु आघुष्य[2] स्नेहतः॥१७॥

प्राशयेज्जातबालं तद् द्वादशाक्षरमुच्चरन्।
जपेत् तद्दक्षिणे कर्णे मनुमष्टाक्षरं पिता॥१८॥

वामेऽथ वासुदेवस्य द्वादशाक्षरविद्यया।
हृदयेन मनुना तस्य हृदयमालभेत् तथा॥१९॥

---

१. षष्ठके इति ख।
२. मधुमाघुष्य इति क।

स्नात्वा पुनर्हिरण्यं गां वस्त्रं पात्रं भूषादिकम्।
द्विजेभ्यो वैष्णवेभ्यश्च दद्यात् शक्त्यनुसारतः॥२०॥

ततो दश दिनं यावदाशौचमाचरेत् पिता।
अहन्येकादशे कुर्यान्नामकर्म विधानतः॥२१॥

स्वस्ववर्णानुसारेण वासुदेवादिमन्त्रगम्।
यस्मिन् मासेऽथवा जन्म तदधिष्ठितदैवतम्॥२२॥

शतमाज्याहुतीर्हुत्वा मूलमन्त्रेण संयतः।
श्रवणे भगवन्नाम्ना तं सुतं तु समाह्वयेत्॥२३॥

मासे चैव चतुर्थे तु कुर्यान्निष्क्रमणं शिशोः।
दर्शयेद् दिवसे सूर्यं रात्रौ निशापतिं शशिम्[1]॥२४॥

भगवन्मन्दिरं गच्छेद् दिव्यं सिद्धं स्वयंप्रभम्।
मानुषं वैष्णवं तीर्थं समीपस्थं शुभाशयः॥२५॥

प्रणमेन्नामयेद् बालमाचार्यञ्चाथ वैष्णवम्।
पुण्याहं वाचयेद् गेहे वैष्णवैर्मन्त्रवित्तमैः॥२६॥

अथान्नप्राशनं कुर्याच्छष्ठे मासि शिशुं पिता।
अष्टमे वाऽथ दशमे आरोग्यमनुशैशवम्॥२७॥

ऊर्ध्वपुण्ड्रं ललाटेऽथ कुर्यात् चन्द्रकसंयुतम्।
नामानि केशवादीनां समुच्चार्य मुदान्वितः॥२८॥

चरुहोमं ततः कृत्वा सूक्तेन पुरुषस्य च।
प्राशयेद्धुतशेषञ्च विष्णुमन्त्रेण नारद!॥२९॥

सौवर्णे राजते पात्रे ताम्रजे सुदृढे नवे।
क्षीराज्यदधिमध्वन्नं निवेद्य विष्णवे ततः॥३०॥

---

१. शुभम् इति ख।

अमृताहरमन्त्रेण सबीजेन महामते!।
पाणिना सपवित्रेण जलञ्चापि हि पाययेत् ॥३१॥

दत्त्वा विप्राय तत्पात्रं ब्राह्मणान् भोजयेत् ततः।
वैष्णवान् भगवद्भक्तान् देशिकं तत्सम्बधिनः ॥३२॥

स्वयं चैव तु भुञ्जीयात् समाहितमना मुने!।
संवत्सरे तृतीये तु चौलं शिशोः विधीयते ॥३३॥

हुत्वा शताहुतीश्चापि[1] षडक्षरेण सुव्रत!।
प्रातः सन्ध्यादिकं कृत्वा वासुदेवमनुस्मरन् ॥३४॥

दक्षिणादारभेत् केशाद् दर्भाङ्कुरसमन्वितात्।
परशुराममन्त्रेण उच्चरन् प्रणवं तथा ॥३५॥

[2]शिखावर्जं वपेत्तस्य मस्तकं कोमलं शनैः।
स्नानशुद्धस्य बालस्य नूत्नवस्त्रावृतस्य च ॥३६॥

गोमये निक्षिपेत् केशान् नापिताय धनं ददेत्।
गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ॥३७॥

गर्भादेकादशे राज्ञो गर्भात्तु द्वादशे विशः।
षोडशाब्दस्तु विप्रस्य द्वाविंशः क्षत्रियस्य च ॥३८॥

चतुर्विंशतिवर्षान्तं वैश्यस्य परिकीर्तितम्।
स्वशाखोक्ताध्वना विप्रैः पाञ्चरात्रिकदीक्षया ॥३९॥

सहेदं कर्म कुर्वीत निष्णातश्चेद् गुरुर्द्वये[3]।
पश्चाद्वा महिमज्ञानात् पाञ्चरात्रिकपद्धतेः[4] ॥४०॥

---

१. शताहुतींश्चापि इति क।

२. केचिदाधुनिकाः शिखामपि मुण्डयन्ति, तदयुक्तं बौधायनगृह्यसूत्र-मनुस्मृति-धर्मसिन्ध्वादिषु शिखावर्जमुण्डनस्यैव विधानात्।

३. गुरुद्वये इति क।

४. पाञ्चरित्रकपद्धतेः इति क।

देशिकाद् गुणसम्पन्नाद् दीक्षा ग्राह्या तु तान्त्रिकी।
मेखला कौपीनं दण्डं मृगाजिनञ्च कर्करी।
विद्याधिदेवमन्त्रेण गृह्णीयाद्[1] वैदिकेन च ॥४१॥

यज्ञोपवीतमन्त्रेण दद्याद् यज्ञोपवीतकम्।
विद्याभ्यासस्य प्रारम्भ इत(तो?) वेद्यः सुबुद्धिभिः ॥४२॥

आगमा निगमाश्चैवमितिहासपुराणकम्।
आन्वीक्षिक्यादिकी[2] विद्या ज्ञेयाः शास्त्रज्ञपण्डितैः ॥४३॥

आस्तिकं वासुदेवे तं पञ्चरात्रपरायणम्।
शास्त्रार्थज्ञानतात्पर्यवेत्तारमभीयाद् बटुः ॥४४॥

ब्रह्मचर्याश्रमे वास इत आरभ्यते शिशोः।
भिक्षाचर्यं भूमौ शय्या गन्धमाल्यादिवर्जनम् ॥४५॥

देवताभ्यर्चनञ्चैव समिदाधानमेव च।
नित्यं नद्यां सरस्तीरे स्नानं तैलादिवर्जितम् ॥४६॥

प्राणिनां हिंसनत्यागः कामक्रोधादिसंयमः।
राजकार्यस्य वार्ता च जयाजयस्य विस्तरः ॥४७॥

त्यक्तव्यं बटुना तत्र द्यूतं वादस्तथाऽनृतम्।
श्रवणं कीर्तनं केलिः प्रेक्षणं गुह्यभाषणम् ॥४८॥

सङ्कल्पोऽध्यवसायश्च क्रीडानिर्वृत्तिरेव च।
स्त्रीणां तु परित्यक्तव्यं ब्रह्मचर्यस्य पालनम् ॥४९॥

देशिकसेवनं नित्यं कैंकर्यं श्रीहरेरपि।
हीनान्नवस्त्रवेषाणां परित्यागश्च सर्वथा ॥५०॥

---

१. गृह्णीया इति क।
२. आन्वीक्ष्यक्यादिकी इति क।

कार्यस्तस्य गुरोराज्ञा स्वाध्याये रमते मनः।
वेदस्नायी व्रतस्नायी दक्षिणां गुरवे ददत्॥५१॥

प्राप्यानुज्ञां गुरोरिच्छेद् गृहस्थाश्रममारभेत्।
संसारस्य परिज्ञाय तुच्छत्वं[१] सारहीनताम्॥५२॥

परात्मनि परानन्दो नित्यो निरवधिर्महान्।
इति ज्ञानेन वैराग्यं प्राप्य सांसारिकात् सुखात्॥५३॥

यदीच्छेद् ब्रह्मचर्यं स ब्रह्मचारी निजाश्रमे।
आचार्यमेव सेवेत यावज्जीवं यतेन्द्रियः॥५४॥

जिज्ञासुर्लभते ज्ञानं ब्रह्मचारी परं पदम्।
अथ चेद् रोचते तस्मै गार्हस्थ्यं धर्ममुत्तमम्॥५५॥

लब्ध्वाऽनुज्ञां गुरोः स्नात्वा सम्प्राप्य विधिवत्स्त्रियम्।
सवर्णां लक्षणैर्युक्तां प्रशस्तां दारकर्मणि॥५६॥

सपिण्डां धर्महीनाञ्च नास्तिकीञ्च परिहरेत्।
कपिलामधिकाङ्गीञ्च रोगिणीं पिङ्गलान्तथा॥५७॥

परित्यजेत् स्त्रियं विद्वान् स्वधर्मरक्षणेच्छुकः।
पितरं मातरं बन्धून् पोषयेद् धर्मसंस्थितः॥५८॥

गार्हस्थ्यात्तु परो नास्ति धर्मश्चेत् पाल्यते हि सः।
परदारान् परद्रव्यं मनसा नेच्छति[२] क्वचित्॥५९॥

देशिकाज्ञया धर्ममाचरन् भक्तिमान् नरः।
पुत्रानुत्पाद्य सुगुणान् संपोष्य शिक्षयेच्च तान्॥६०॥

वासुदेवस्य माहात्म्यं स्वयंव्यक्तादितीर्थगम्।
देशिकस्य यतेश्चैव शुश्रूषां शिक्षयेच्च तान्॥६१॥

---

१. तुच्छत्वं इति क।
२. नेच्छति इति क।

वृत्तिं स्वां शिक्षयित्वा तान् वानप्रस्थ्यं स आचरेत्।
स्वयंव्यक्तेषु दिव्येषु तीर्थेषु क्षपयन् सदा ॥६२ ॥

सत्सङ्गेनार्चनेनैवं कालं[१] सपत्नीकः क्षमी।
वैराग्यं प्राप्य संसारं त्यक्त्वा सन्न्यस्तमाप्नुयात् ॥६३ ॥

वासुदेवमनाः कालं व्यापयन् कीर्तनादिषु।
अर्चने भजने चैव प्राप्नुयात् पदमुत्तमम् ॥६४ ॥

इत्येवं दीक्षितानां यत् संक्षेपाज्जीवनावधि।
कर्तव्यं कथितं ब्रह्मन् वर्तने स सुखी भवेत् ॥६५ ॥

लोकेऽस्मिन् देहपातेऽथ वैकुण्ठपदमाप्नुयात्।
नास्त्यन्यः सरलः पन्था वासुदेवार्चनान्मुने! ॥६६ ॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामाचाररात्रे
दीक्षितसंस्कारवर्णननामा
अष्टमोऽध्यायः।

## इति आचाररात्रं समाप्तम्।



---

१. कालः इति क।

# अर्चनारात्रम्

## प्रथमोऽध्यायः

**नारदः पप्रच्छ**

सर्वज्ञ! ज्ञानरूप! त्वं षाड्गुण्यविग्रह! विभो!।
विशुद्धज्ञानकृद् ब्रह्मन्! लोकानुग्रहकारक!॥ १ ॥

श्रुतं परात्मरूपं मे ज्ञानं बहुविधं हलिन्।
मन्त्राणां नैकरूपत्वं सिद्धिमुक्तिफलात्मनाम्॥ २ ॥

आचारस्य च माहात्म्यं मुक्तिफलात्मकं शुभम्।
किं सर्वेषां फलं तुल्यं साधनानां महामते!॥ ३ ॥

पुरोक्तानां हि सर्वेषां फलभेदोऽस्ति वा प्रभो!।
सर्वेषां मुक्तिरूपं तु फलं प्रोक्तं त्वयाऽनघ!॥ ४ ॥

तत्र मे संशयो ब्रह्मन्! छिन्धि तं सिद्धपूजित!।

**सङ्कर्षणः**

विज्ञानं पररूपस्य वासुदेवस्य नारद!॥ ५ ॥

व्यूहादीनाञ्च रूपाणां प्रथमं तद्धि कारणम्।
मोक्षे आत्यन्तिके[1] विप्र! आचारस्तु सहायकः॥ ६ ॥

मन्त्रज्ञानञ्च देवानां यथेप्सितफलप्रदम्।
ज्ञानं तु द्विविधं प्रोक्तं क्रियासत्त्वस्वरूपकम्॥ ७ ॥

क्रिया भक्तिरिति प्रोक्ता[2] भक्तिर्ज्ञानाय कल्पते।
आराधना हरेर्नित्या नैमित्तिका च शाश्वती॥ ८ ॥

---

१. मुक्तावात्यन्तिके इति क।
२. प्रोक्तम् इति क।

स्वयंव्यक्तादितीर्थेषु तदपुनर्भवं मुने!।
सत्त्वाख्यमपि ज्ञानं यत् साहाय्यं विदधाति तत्॥ ९ ॥

सत्त्वाख्यस्य परीणामो भक्तौ भवति नारद!।
नित्याराधनरूपायां तदाऽपुनर्भवं भवेत्॥१०॥

भक्तौ परिणतेः शून्यं नात्यन्तं तत् फलात्मकम्।
तस्मान्मोक्षेच्छुना भाव्यं वासुदेवपरायणम्॥११॥

गच्छन् क्रीडन् स्वपन् कुर्वन् यत्किञ्चित् कर्म लौकिकम्।
कथं भागवतं तत्स्याद् विचिन्त्य[1] सर्वदा द्विज!॥१२॥

पाञ्चरात्रेण विधिनाऽनुष्ठाने जीवनावधि।
सुलभं भक्तिरूपं तज्ज्ञानं मोक्षप्रदं भुवि॥१३॥

**नारदः**

ज्ञातुमिच्छाम्यहं देव! विष्णोराराधनं परम्।
येनाऽऽप्यते सदा शान्तिः कृतार्थत्वञ्च जीवने॥१४॥

कथं नित्यः समाराध्यो निमित्ते वा जगद्गुरुः।
कुत्र कस्मिन् कियत्काले तत्सर्वं वद विस्तरात्॥१५॥

**सङ्कर्षणः**

मुनिवर्य! प्रसन्नोऽस्मि जिज्ञासया हि सुव्रत!।
एतदेवाऽस्ति विज्ञेयं भक्तिमार्गानुवर्तिनाम्॥१६॥

प्रेरितो वासुदेवेन यदर्थं नारद! ह्यहम्।
वक्ष्यामि सारभूतं तदर्चनाख्यं महात्मनाम्॥१७॥

पञ्चरात्रविदां नित्यं नारायणरतात्मनाम्।
नित्याराधनरूपेऽत्र द्वयं ज्ञेयं मुनीश्वर!॥१८॥

---

१. विचिन्त्यं इति ख।

मानसं यजनञ्चैव बाह्यं सम्भारपूर्वकम्।
उभयोस्तु फलं तुल्यं भावभक्तिवशात् स्थितम्॥१९॥

यत्फलं सम्पदाढ्यानां हेमरत्नादिनाऽर्चनात्।
विविधैर्भोगजालैस्तन्निरन्नानाञ्च पूजनात्॥२०॥

दरिद्राणाञ्च भक्तानां फलपुष्पादिना विना।
धनिनां विष्णुभक्तानां होमाद्यैरर्चनात् फलम्॥२१॥

यत्तद्विद्धि दरिद्राणां भक्तानां प्रार्थनादिना।
तस्मात् सर्वप्रयत्नेन भक्तिभावं भजेद् दृढम्॥२२॥

फलप्राप्तौ महदन्यत् कारणं त्वं निबोध मे।
भावेनैकान्तिकेनाऽथ विष्णुमाराधयेत् सदा॥२३॥

नान्येषां देवतानाञ्च तुल्यं विज्ञाय नारद!।
देवान्तरेण तुल्यत्वं ज्ञात्वा यजति यो द्विजः॥२४॥

फलं नाऽऽप्नोति यत्किञ्चिदुप्तं क्षारभूमाविव।
तदेवं प्रतिषिद्धं तु देवतान्तरपूजनम्॥२५॥

विप्रा एकायनाख्या ये प्रख्याताः शुद्धयाजिनः।
ते पूजयन्ति देवेशं सर्वदाऽनन्यपूर्वकम्॥२६॥

क्वचिद् व्यूहस्वरूपं तु केशवाद्यं तथा द्विज!।
भगवद्भावरूपेण पूजने नास्ति दोषभाक्॥२७॥

किन्तु या देवताः ख्याताः सुरसिद्धावतारिताः।
स्कन्दरुद्रमहेन्द्राद्याः प्रतिषिद्धाः सहार्चने॥२८॥

तस्य प्रसादरूपेण दिग्देवस्वरूपेण च।
बलिनिवेदने[1] चैवं दोषाभावश्च नारद!॥२९॥

---

१. बलिनिवेदन इति क।

तस्मात् त्यक्त्वा तु साङ्कर्यं मिश्रयाजित्वरूपकम्।
भक्तिरेवाराधनारूपा मोक्षे ज्ञेया गरीयसी ॥३०॥

वक्ष्येऽहं दैनिकं कर्म एकान्तयज्व(ज्वि?)नामतः।
यस्याभ्यासादवाप्नोति वैष्णवः परमं पदम् ॥३१॥

ब्राह्मे मुहूर्ते उत्थाय कृत्वा नित्यविधिं स्वकम्।
भगवदालयं गत्वा प्रक्षाल्याचम्य वाग्यतः ॥३२॥

प्रविश्यान्तः बलेः पीठात् पुरः साष्टाङ्गमानमेत्।
आलयं द्विः परिक्रम्य प्रथमावरणे द्विज! ॥३३॥

विष्वक्सेनं ततो भक्तं गणाग्र्यं प्रणमेन्मुदा।
घण्टानादं शनैः कृत्वा देवं प्रबोधयेद् वशी ॥३४॥

न्यासं कृत्वा षडङ्गस्य हस्ततालं त्रयं ततः।
मूलमन्त्रेण चोद्घाट्य कवाटं नेत्रमन्त्रतः ॥३५॥

नित्यदीपांश्च प्रज्वाल्य हस्तौ प्रक्षाल्य वारिणा।
प्रासादान्तः प्रवेशार्थं ततो द्वारं तु चेतसा ॥३६॥

त्रिभागीकृत्य तन्मध्यं भागमेकं द्विधा पुनः।
विभज्य वामदेशेन दक्षिणेनाङ्घ्रिणा ततः ॥३७॥

शनैः शनैः प्रविश्यान्तश्चास्त्रमन्त्रेण नारद!।
दक्षिणेन पदा भूमिं सन्ताड्य प्रणमेत् प्रभुम् ॥३८॥

भद्रासने स्थितं किञ्चित् पत्रपुष्पादिकं द्विज!।
पाणिना तत्समाहृत्य शुचिस्थाने निधाय वै ॥३९॥

गव्यैर्वा चामरैर्वालैः शिखिपक्षैः कुशैरथ।
सम्मार्ज्य भद्रपीठं वै वाससा सुसितेन वा ॥४०॥

बहुना वस्त्रपूतेन वारिणा तदनन्तरम्।
प्रक्षाल्य द्वादशार्णेन प्रणवाद्यन्तकेन च॥४१॥

अस्त्रमन्त्रेण सन्ताड्य पीठं कुसुमपूर्वकम्।
निर्विघ्नं स्वं परिज्ञाय देवमुत्थापयेत् ततः॥४२॥

संस्थाप्य भद्रपीठं तं मूलमभ्यर्चयेत् तथा।
उशीरवंशकूर्चेन मूलेन क्षालयेत् प्रभुम्॥४३॥

गन्धोदकेन शुद्धेन तथा संक्षाल्य पूजकः।
अभिवन्द्य गुरुं पूर्वं प्रार्थयेदच्युतं हरिम्॥४४॥

त्वदाराधनकामोऽहमिच्छामि पूजितुं प्रभो!।
सङ्कल्पपूरणायाद्य बलं शक्तिं प्रदेहि मे॥४५॥

सम्प्रार्थ्य दक्षिणे पार्श्वे देवस्य प्राङ्मुखं शुचिः।
मूलमन्त्राभिजप्तेन तोयेन प्रोक्ष्य चासनम्॥४६॥

स्थित्वाऽऽसनेऽस्त्रमन्त्रेण करशुद्धिं समाचरेत्।
देवं ध्यात्वा ज्वलद्रूपं सहस्रसूर्यसदृशम्॥४७॥

ज्वालाकोटिसमाकीर्णं वमन्तं ज्वलनं मुखात्।
तेन सम्पूरयेत् सर्वमाब्रह्मभुवनं मुने!॥४८॥

भावयेन्मन्त्रदेवेन दिगौघं भस्मितं खलु।
क्ष्मामण्डलमिदं सर्वं भगवद्वह्निना तथा॥४९॥

मन्त्रजेन भवेत् पक्वं मृण्मयं भाजनं यथा।
स्थानशुद्धिर्भवत्येवं स्वयंव्यक्तसमं तथा॥५०॥

भूतशुद्धिं ततः कुर्यात् प्राणयमनपूर्विकाम्।
देहतत्त्वानि संहृत्य प्रतिसञ्चरवर्त्मना॥५१॥

प्रथमं संहरेत् स्थूलं शरीरं पाञ्चभौतिकम्।
प्राणायामेन चाद्येन रेचकेनाऽथ चिन्तयेत्॥५२॥

गन्धात्मनि ततो गन्धं पूरयेद्वारिणा सह।
क्रमाद्रसं ततो वह्निः रूपं वायुश्च स्पर्शकम्॥५३॥

गगनं शब्दपूर्वञ्च प्राणायामेन संहरेत्।
आत्मानं देहतो भिन्नं चैतन्यं चिन्तयेच्छुचिः॥५४॥

मन्त्रोत्थेनाग्निना देहं निर्दहेत् संयतस्ततः।
रेचकेन स्वमात्मानं प्राणायामेन देशिकः॥५५॥

विष्णोः पादाम्बुजोद्धु(द्धू?)तगाङ्गेन वारिणा ततः।
आप्लावितं संस्मरेद्विप्र! दासोऽहमिति भावयेत्॥५६॥

सञ्जातविग्रहो नूत्नो द्वादशाक्षरविद्यया।
सञ्चिन्त्य हृदये तेजो भास्वरं मण्डलाकृतिम्॥५७॥

कोट्यर्कावधिकं शान्तं तस्मिन् सिंहासनस्थितम्।
वासुदेवं विचिन्त्याथाऽऽरभेताराधनं ततः॥५८॥

हृद्यागं प्रथमं कुर्यान्नियतेन्द्रियमानसः।
पीठं प्रकल्पयेद् दिव्यं तत्र नारायणं हरिम्॥५९॥

शुभे चतुष्किकामध्ये चक्राब्जमयविष्टरे।
आधार-शक्ति-कमठानन्त-धर्मादि-धारिते॥६०॥

पद्मे सोमरविज्योतिःसत्त्वादिपरिवारिते।
देवमुक्तप्रकारेण परिवारैर्निषेवितम्॥६१॥

ध्यायेच्छुभासने देवं समासीनं समासने।
प्रार्थयेद् देवदेवेशं पौनःपुन्येन नारद!॥६२॥

यजामि तावकीनोऽहं त्वद्दत्तैरौपचारिकैः।
कल्पितैः मनसा भावाद्भोगैराभ्यवहारिकैः॥६३॥

सांस्पर्शिकैरिति ब्रूयाद्यजने तत्परः पुमान्।
आवाहयेज्जगन्नाथमासनं कल्पयेत्पुनः॥६४॥

सार्घ्यं पाद्यं विचिन्त्यञ्च शुभमाचमनीयं ततः।
स्नानञ्च परिधानञ्च सोत्तरीयोपवीतकम्॥६५॥

गन्धं सुमनसो दीपं धूपञ्च मधुपर्ककम्।
नैवेद्यं स्वादु ताम्बूलं फलानि कुसुमाञ्जलिम्॥६६॥

आर्तिक्यं स्तुतिगानञ्च क्षमापनं विचिन्तयेत्।
तुष्टं विज्ञाय स्वात्मानं परमात्मानमथो शुचिः॥६७॥

स्त्रीपुत्रधनधामादिसर्वस्वं विनिवेदयेत्।
जप्त्वाऽथ मूलमन्त्रञ्च जितन्तस्तोत्रमुच्चरेत्॥६८॥

मानसेन तु यागेन कृतकृत्यश्च पूजकः।
आरभेद् बाह्ययागं तु सम्भारैर्विविधैर्नवैः[१]॥६९॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामर्चनारात्रे
मानसयागनिरूपणनामा
प्रथमोऽध्यायः।

---

१. सम्भारैर्विविधनैवैः इति क।

# अर्चनारात्रे द्वितीयोऽध्यायः

**सङ्कर्षण उवाच**[1]

बाह्ययागमथो वक्ष्ये सर्वकामफलप्रदम्।
तस्याङ्गानि च कृत्स्नानि संक्षेपाच्छास्त्रसम्मत!॥ १॥

मानसः कल्पितो यागो भावनाभोगवेष्टितः।
तद्यागावयवस्त्वाद्यः सर्वतन्त्रेषु सम्मतः॥ २॥

पूजनं चार्घ्यपुष्पादिभोगैर्यदखिलैः शुभैः।
विद्धि बाह्योपचारैश्च भोगसञ्ज्ञं तु नारद!॥ ३॥

क्षीरमध्वाज्यरूपेण दध्ना वा पशुना तथा।
पूजनं तद्धि यागाङ्गं तुर्यमच्युतयाजिनाम्॥ ४॥

निवेदितस्य[2] यद्दानं भक्तेभ्यो विधिपूर्वकम्।
सम्प्रदानं तु विज्ञेयं यज्ञाङ्गं पञ्चमं मुने!॥ ५॥

वह्निसन्तर्पणं षष्ठं वह्न्यन्तर्विष्णुपूजनम्।
श्राद्धाख्यं पितृयागञ्च[3] सप्तमं विद्धि नारद!॥ ६॥

प्राणाग्निहवनं नाम्ना त्वनुयागस्तदष्टगम्।
भोजनं परिवाराणां दासानामष्टमं तथा[4]॥ ७॥

---

१. उभयमातृकयोर्नास्ति।

२. निवेदनं ततो दानं इति ख। 'तुर्यमन्नेन पूजनम्' इति जयाख्यसंहिता-(२२/७८) पाठानुसारेण अत्रापि निवेदनमिति चतुर्थं पञ्चमञ्च दानरूपं सम्प्रदानमित्यर्थस्य सौकर्याय खमातृकापाठ एव योग्य इति।

३. पितृयागश्च इति क।

४. बाह्ययागस्याष्टावाङ्गानि यथा— १.मानसयागः, २.बाह्यपूजा, ३.होमः, ४.भक्तेभ्यो निवेदनम्, ५.भक्तेभ्यो दानम्, ६.वह्निसन्तर्पणम्, ७.पितृयागः, ८.भोजनं, दासानां भोजनञ्चेति।

प्रथमं कथितं ह्यङ्गं द्वितीयमथ कथ्यते।
आराधनाय देवस्य श्रेयसे तद्रतात्मनाम्॥ ८॥

कथितं श्रीनिवासेन चैकान्तिभिरनुष्ठितम्।
बहुजन्मार्जितानां वै वासनानां विनाशकृत्॥ ९॥

हृदयसद्मनि ध्येयस्तेजोरूपः पुरार्चितः।
तस्मान्नेत्रद्वये नेयः परमात्मा परात्परः॥१०॥

नेत्रमन्त्रेण संवीक्ष्य सम्भारान् अखिलान् ततः।
वामभागे जलात्पूर्णः कुम्भः स्थाप्यः सकर्करः॥११॥

दक्षिणे सर्वद्रव्याणि दहनाप्यायनं ततः।
कृत्वाऽऽसाद्य च पात्राणि पाद्यार्घ्यादीनि नारद!॥१२॥

पुरोक्तेन विधानेन क्षेप्तव्यं चन्दनादिकम्।
हृदयेन मनुना वारि सप्तधा त्वभिमन्त्रितम्॥१३॥

द्वितीयात्कलशान्नीत्वा प्रोक्ष्यमस्त्रेण स्वासनम्।
सम्भारान् यागशालाञ्च धूपपात्रं ततोऽर्चयेत्॥१४॥

धूपपात्रं तु विज्ञेयमायसं[1] वाऽथ राजतम्।
चतुरस्रं समापाद्यं वृत्तं वाऽष्टास्रमेव तत्॥१५॥

स्वस्तिकं तु सहेतीशं विधिवद् भोगभाजितम्।
अस्य मध्ये शुभं कुर्याच्चक्रं च कमलं मुने![2]॥१६॥

कर्तव्यं धूपधर्तारं किङ्किणीजालशोभितम्।
स्वमन्त्राधिष्ठितं कृत्वा शेषाधिनाथकं तथा॥१७॥

पञ्चभूतानि तस्मिन् हि संस्थितानि फलाप्तये।
मूलतः स्वस्तिकास्थाने क्ष्मातत्त्वं विद्धि नारद!॥१८॥

---

१. सात्वतसंहितायां-२१/३५, सङ्कर्षणसंहितायां-३/६/७९ इत्यत्र आयसपात्रे धूपनिषेधादत्र आयसधूपपात्रवर्णनं चिन्त्यम्।
२. अधोरेखास्थशब्दाः ख-मातृकायामेव सन्ति।

सलिलं कमलं विद्धि चक्रमग्निं महत्प्रभम्।
किङ्किणीजालमनिशमाकाशं कर्णिकोदरे ॥१९॥

एवं लक्षणसंयुक्तं धूपपात्रं समर्चयेत्।
हरेरायतने दिव्ये सुरसिद्धनिषेविते ॥२०॥

त्रैकाल्यं बलिदानाय पूज्यते तन्त्रवित्तमैः।
वादयेत् सुस्वनां घण्टां पूजयित्वाऽक्षतादिभिः ॥२१॥

शब्दब्रह्मात्मिका घण्टा सर्वदुष्टनिबर्हिणी।
एषा दूती हि मन्त्राणां सुप्तानाञ्च प्रबोधिनी ॥२२॥

व्यक्तं तत्राश्रिताः सर्वे मातृकावर्णविग्रहाः।
शङ्खचक्रगदोपेता चोर्ध्वं गरुडभूषिता ॥२३॥

सांशेनाथोर्ध्वभागेन कर्णिकाकेसरान्विता।
सुश्लक्ष्णवर्तुला घण्टा मुक्ताकारमिव स्वना ॥२४॥

लाञ्छनेनान्विता विप्र विघ्नविद्रावणी हि सा।
सम्पूज्या पूजनात्पूर्वं वासुदेवपरात्मनः ॥२५॥

अर्घ्ये आवाहने धूपे दीपे नैवेद्यजोषणे।
नित्यमेव प्रयुञ्जीत सम्यङ्मन्त्रार्थसिद्धये ॥२६॥

गन्धपुष्पादिभिस्तस्याः पूजां कृत्वाऽथ नारद!।
वास्त्वीशादिप्रचण्डान्तान् तत्तन्मन्त्रेण पूजयेत् ॥२७॥

विमानदेवतां पश्चात् पूजकः समभ्यर्चयेत्[1]।
धर्मादिभिर्युतं[2] पीठं भद्राख्यं पूजयेत् ततः ॥२८॥

ततश्चाष्टाक्षरान्मन्त्रात् सृष्टिन्यासं समाचरेत्।
स्थितिसंहारन्यासौ च मूर्तौ ततः समाचरेत् ॥२९॥

---

१. समर्भ्यचयेत् इति क।
२. धर्मादिभर्युतं इति क।

समाहूय ततो देवं परमात्मानमव्ययम्।
आगच्छ भगवन् देव! मदनुग्रहकाम्यया॥३०॥

स्थितिं भजस्व मूर्तौ त्वं पूजयामि सुरेश्वर!।
पुरा सिद्धं यदर्घ्यं तद् दद्यादष्टाक्षरेण सह॥३१॥

पुष्पं दत्त्वाऽथ देवस्य पादौ पाद्येन सेचयेत्।
मार्जयित्वाऽथ वस्त्रेण यच्छेदाचमनं ततः॥३२॥

अर्घ्यादि(दी?)न्यवशिष्टानि क्षिपेत् पात्रान्तरे शुचिः।
चन्दनं माल्यदानञ्च धूपं दीपं ततो दिशेत्॥३३॥

पुनराचमनीयञ्च[1] मुखवासं महामते!।
ताम्बूलं च निवेद्याथ प्रणमेत् स्वं निवेदयेत्॥३४॥

इष्ट्वा मन्त्रासने देवं स्नानपीठं ततो नयेत्।
स्थितं स्नानपीठे विष्णुं गन्धपुष्पादिनाऽर्चयेत्॥३५॥

वस्त्रभूषणमाल्यानि व्यपनयेद् हरेस्तनोः।
भक्तिनम्रेण शिरसा दद्यादर्घ्यं तु मूर्धनि॥३६॥

पाद्यं पादाम्बुजे दद्यात् पाद्यकुम्भात् ततः परम्।
पादुके शोभिते चैवं दद्यात् स्नानीयशाटकम्॥३७॥

प्रदाय पादपीठञ्च दन्तकाष्ठं दिशेत् ततः।
जिह्वानिर्लेखनञ्चैव मुखशोधं दिशेदथ॥३८॥

आचमनं पुनर्देयं तैलाभ्यङ्गमनन्तरम्।
रजनीचूर्णसम्मिश्रं चूर्णं गोधूमशालिजम्॥३९॥

उद्वर्तनार्थं देवस्य भक्त्या देयं तु नारद!।
आमलकस्य दानान्ते तोयदानं समर्पयेत्॥४०॥

---

१. अधोरेखायुक्तं ख-मातृकायामेवोपलभ्यते।

शाटिकां देहशुद्ध्यर्थं दत्त्वा नीराजनं चरेत्।
सुधौतमहतं वस्त्रमुत्तरीयं सुवर्णजम्॥४१॥

उपवीतं ततो यच्छेत् पाद्यञ्चाचमनं तथा।
सुगन्धिचन्दनं भाले समर्च्य तदनन्तरम्॥४२॥

महार्हैः सुशुभैर्हारैरङ्गुलीयकनूपुरैः।
पूजयेत् परया भक्त्या नवाब्जोदरगं प्रभुम्॥४३॥

पादनूपुरपर्यन्तम् अलङ्करणम् उत्तमम्।
विचित्रं हि शिरोमाल्यं मुक्त(क्ता?)पुष्पसमन्वितम्॥४४॥

व्यजनैश्चामरैश्छत्रैः[1] दर्पणैर्धातुभिस्तथा।
नानावर्णपताकाभिः सितैः छत्रवितानकैः॥४५॥

घृतादिकैर्महादीपैरर्चयेत् सात्वतांपतिम्।
अञ्जनं सशलाकञ्च ताम्बूलं गन्धभावितम्॥४६॥

ललाटतिलकं हैमं मुखवासनरोचनम्।
अलङ्करणरूपेण प्रयच्छेत् परमात्मने॥४७॥

ततः स्तोत्रं जपेद् दिव्यं भेरीमृदङ्गनिःस्वनम्।
गीतकं विविधं नृत्यं तन्त्रीवाद्यसमन्वितम्॥४८॥

वीणाकाहलभेद्या(र्या?)दिनिनादश्रावणं था।
दर्शयेच्छ्रावयेच्चाथ वासुदेवप्रसादकृत्॥४९॥

भोज्यासनं ततो दद्यादर्घ्यपाद्यादिपूर्वकम्।
भक्ष्यं भोज्यं तथा लेह्यं चोष्यं नानाविधं मुने!॥५०॥

षड्तुप्रभवं सर्वं शाकं मूलं फलं शुभम्।
पावनं पावकस्विन्नमुपदंशादिकान्वितम्॥५१॥

---

१. व्यजनैश्चामरैछत्रैः इति क।

मधुराद्या रसाः[१] सर्वे स्वादूनि पानकानि च।
नारिकेलोदकं शीतं तर्पणीयमनन्तरम् ॥५२ ॥

निवेद्याचमनार्थं तु गन्धोदकमनुत्तमम्।
सपूगफलमुत्कृष्टं ताम्बूलं विनिवेदयेत् ॥५३ ॥

रोचना श्रीफलं पुष्पं दुर्वा धात्रीफलं तथा।
दुकूलमहतं श्वेतं दक्षिणावर्तमम्बुजम् ॥५४ ॥

हैममानं हिरण्यञ्च स्त्रीपुत्रधनधाम च।
सम्भवे सति सर्वस्वं मनसा तदसम्भवे ॥५५ ॥

नारायणाय देवाय समर्प्यं मुक्तिमिच्छुकैः।
प्रणम्य शिरसा सम्यक् ततस्तु भगवन्मयान् ॥५६ ॥

आचार्यं[२] गुरुपुत्राश्च वैष्णवान् पूजयेन्मुदा।
मात्रादानञ्च नैवेद्यं प्रयच्छेद्धर्षनिर्भरः ॥५७ ॥

ततोऽग्नौ तर्पणं कुर्याद् विभवानुगुणं शुभम्।
यागगेहं ततो गच्छेद् द्वाःस्थदेवांश्च पूजयेत् ॥५८ ॥

उपविश्यासने स्वीये कुण्डमुपलिपेत् ततः।
त्रियस्त्रं चतुरस्त्रं वा चक्रशङ्खाम्बुजाकृतिम् ॥५९ ॥

अस्त्रजप्तैः कुशैः रेखामुदीच्या(च्य?)ग्रां तु नारद!।
प्रागग्रामुपरि तस्य संलिखेत् सान्तरं यथा ॥६० ॥

अभ्यर्च्य पिङ्गलाद्याश्च नाड्यस्त्रि(स्ति?)स्त्रस्तदन्तरे।
चतुर्धा प्रणवेनाऽथ प्रोक्षयेदर्घ्यवारिणा ॥६१ ॥

पुष्पैः सम्पूज्य ध्यात्वा च कुण्डं भद्रपीठं यथा।
कुम्भानामष्टकं दिक्षु विनिवेश्यमनन्तरम् ॥६२ ॥

---

१. अधोरेखास्थं ख-मातृकायामेवास्ति।
२. आयार्यं इति क।

पूजयेद् वासुदेवाद्यान् मेखलासु तथाष्टसु।
कुण्डे सुगन्धि दर्भञ्च चूर्णं च गोमयादिकम्॥६३॥

निक्षिप्य परितो दर्भावरणं कारयेन्मुदा।
ताम्रपात्रे ततो विप्र! समादाय हुताशनम्॥६४॥

आरण्यं लौकिकं वाऽथ मणिजं दर्पणोद्भवम्।
परिक्राम्य ततो कुण्डे ऐशान्यां स्थापयेत्ततः॥६५॥

ज्वाल्य परिसमूह्याथ जलेन प्रोक्षयेन्मुने!।
आत्मनो दक्षिणस्यां तु द्रव्यस्थापनमाचरेत्॥६६॥

इध्मदर्भादिकं द्रव्यं स्रुक्स्रुवादिकमेव च।
स्रग्धूपं मधुपर्कादि विष्टरञ्च घृतं चरुम्॥६७॥

आज्यस्थालीचतुष्कञ्च निधाय तदनन्तरम्।
वामभागे तु न्यस्तव्यं समित्काष्ठादिकं तथा॥६८॥

आसाद्यास्त्रेण सम्प्रोक्ष्य त्विध्मानि प्रोक्षयेत् ततः।
पूजयेदर्घ्यपुष्पाभ्यां द्वादशाक्षरविद्यया॥६९॥

आपूर्य प्रणीतामर्घ्यं दत्त्वा सुदर्शनं न्यसेत्।
चतुर्मूर्तिं[1] तदूर्ध्वे तु भगवन्तं समर्चयेत्॥७०॥

सम्पूज्याऽऽज्यं ज्वलद्दर्भैः संस्पृश्य द्रावयेत् ततः।
आज्यस्थालीञ्च तारेणापूर्य दर्भैश्च प्लावयेत्॥७१॥

दर्भान् विक्षिप्य वह्नौ वै[2] सम्भ्राम्य सप्रदक्षिणम्।
स्रुक्स्रुवानथ चादाय दर्भैः सम्मृज्य क्षालयेत्॥७२॥

कूर्चेन निर्मलीकृत्य ज्वालाभिः सम्प्रताप्य च।
सम्प्रोक्ष्यास्त्रेण लक्ष्माणि चक्रादीनि तु पूजयेत्॥७३॥

---

१. चतुर्मूर्तिं इति क।
२. वै इति ख-मातृकायामेव प्राप्यते।

वामे पवित्रकं दार्भं दक्षिणेऽथाङ्गुलीयकम्।
हस्ते धृत्वा स्रुवेणाज्यमासादितं तु सिञ्चयेत्॥७४॥

निःशेषदोषशान्त्यर्थमग्नौ तिलाहुतिं यजेत्।
निषेकादिकसंस्कारान् अग्नेस्ततः समाचरेत्॥७५॥

सम्बोधजनकं होमं जडभावप्रशान्तिदम्।
उच्चार्य मूलमन्त्रं तु प्रणवद्वितयान्वितम्॥७६॥

जुहुयादाहुतीनाञ्च सहस्रं शतमेव वा।
तद्वदाज्येन सन्तर्प्य दद्यात् पूर्णाहुतिं ततः॥७७॥

अनन्तादियुतं पीठं जटाधारेऽथ कल्पयेत्।
सम्पूज्य गणनाथादीन् देवमावाह्य पूर्ववत्॥७८॥

पुष्पैरभ्यर्च्य देवेशमिध्माष्टकं द्विधाकृतम्।
सिक्तं घृतेन यामीयां मध्य आग्नेयदिग्गताम्॥७९॥

निधायोत्तरदिक् चैवं तुर्यं मूलेन निक्षिपेत्।
तत्सङ्ख्यानुगुणं होममाज्येन दिक्षु चाचरेत्॥८०॥

सूर्यसोमात्मकं चाग्नेर्विद्धि तल्लोचनद्वयम्।
एतयोरन्तरं यद् वै तदग्नेर्वदनं स्मृतम्॥८१॥

तत्र वै जुहुयात् पूर्वं समिधासप्तकं क्रमात्।
घृतसिक्तां चतुःसङ्ख्यामेकैकां हि सुपुष्कलाम्॥८२॥

चरुं विलोक्य संसिद्धं ज्वलद्दर्भैरनुस्पृशेत्।
चरुमाज्यचतुष्कञ्च मन्त्रैः स्रुचाऽथ निक्षिपेत्॥८३॥

तथैव मूलमन्त्रेण स्रुवो दद्याच्चतुष्टयम्।
अन्नाहुतित्रयं दत्त्वा पुनराज्यचतुष्टयम्॥८४॥

घृतसिक्तैस्तिलैश्चैवं कै(के?)वलैर्वा सहस्रकम्।
आहुतीनां शतं यद्वा पञ्चाशत् पञ्चविंशतिः॥८५॥

वैभवं समयं यावद् दद्यादष्टाक्षरेण च।
पूर्णाहुतिं ततो दद्यात् प्राग्वत् पूजां तथाऽऽचरेत्॥८६॥

स्रुवं स्रुचञ्च सम्मार्ज्य दर्भैः कुर्यान्निःस्नेहकम्।
भूषणं लाञ्छनान् शक्तिं परिवारं ततो यजेत्॥८७॥

विसृज्याग्निं जलं पूतं प्रादक्षिण्येन सेचयेत्।
कुण्डबाह्ये चतुर्दिक्षु कोणे ऊर्ध्वञ्च नारद!॥८८॥

निक्षिपेद्वै पवित्रेण शेषं स्वशिरसि तथा।
भस्मना तिलकं [1]कुर्यादूर्ध्वपुण्ड्रचतुष्टयम्॥८९॥

हृदंसयोर्ललाटेऽथ कुर्याद् दीपशिखाकृतिम्।
अग्निकार्यं समाप्यैवं समर्प्य केशवे ततः॥९०॥

पितॄणां संविभागार्थं ब्राह्मणान् पाञ्चरात्रिकान्।
परे तत्त्वे तु निष्णातान् भोजयेद् भावनान्वितः॥९१॥

कार्यं तिलोदकान्तं तु सपिण्डं पूजनं तथा।
पश्चाच्छरीरयात्रार्थमभ्यर्थ्य[2] परमेश्वरम्[3]॥९२॥

संस्मृत्य वासुदेवञ्च पवित्रीकृत्य चाम्भसा।
वक्त्रकुण्डेऽथ तेनैवाप्यन्नाहुतिचतुष्टयम्॥९३॥

तारमन्त्रानुजापेन ततोऽश्नीयाद् यथारुचि[4]।
स्वाध्यायमाचरेद्विप्र! ततो योगं समाचरेत्॥९४॥

---

१. कुर्यादुर्ध्व इति क।
२. पश्चाच्छरीरयात्रार्थभ्यर्थ्य इति क।
३. परमेवश्वरम् इति क।
४. यथारुचिः इति क।

इत्येवं दैनिकी पूजा दीक्षितानां महामते!।
भक्तिपूर्णा भवेन्नित्यं मोक्षसाधनमुत्तमम् ॥९५॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामर्चनारात्रे
बाह्ययागदैनिकार्चननामा
द्वितीयोऽध्यायः।

## अर्चनारात्रे तृतीयोऽध्यायः

नारदः

नित्ययागस्त्वया प्रोक्तः परिज्ञातः सनातनः।
निष्कामानां तु भक्तानां निर्वाणाय महात्मनाम्॥ १॥

संसारेऽस्मिन् निरुद्योगाः कामक्रोधवशीकृताः।
धृत्या परमया स्थातुं सर्वे सक्ता न लाङ्गलिन्!॥ २॥

वैष्णवा अपि कामेन भवेयुरत्र पीडिताः।
जानन्तोऽपि[1] हि लोकस्य सुखस्य क्षणजीवितम्॥ ३॥

तेषां लोकसुखप्राप्तिः श्रेयोऽवाप्तिश्च शाश्वतीः।
सम्भवेद्धेतुना केन नित्ययागान्वितेन च॥ ४॥

नैमित्तिकेन काम्येन यागेन तद्विदांवर!।
ब्रूहि मे तावकीनानां प्राणिनां हितकारकम्॥ ५॥

सङ्कर्षणः

नारद! त्वं हि धन्योऽसि सुप्रसन्नोऽस्मि सत्तम!।
जीवनं खलु साधूनां भवेल्लोकोपकारकम्॥ ६॥

तदेवं जीवने विप्र! वर्तते तव चिन्तनम्।
कथयिष्यामि तस्माद्धि सुगुप्तमपि कारणम्॥ ७॥

यादृशो महिमा तन्त्रे वासुदेवस्य कीर्तितः।
तादृशस्तत्सम्बन्धाच्च परिवारस्य नारद!॥ ८॥

---

१. जानन्नपि इति क-ख।

पूजयेत्परिवारं यः प्रत्येकस्मिन् दिने द्विज!।
विशेषेण तिथौ तस्य नित्ययागमनु प्रभोः॥ ९॥

मन्त्रोद्धारे पुरा प्रोक्तं विशिष्टमवधारय।
तिथीनां तु विभागेन शुक्लपक्षस्य नारद!॥१०॥

पूजां तेषां प्रवक्ष्यामि कामभेदेन पूजयेत्।
तस्याऽपि परिवारांश्च तन्त्रोक्तान्[1] कल्पयेत्तथा॥११॥

प्रतिपत्प्रभृतीनां तु तिथीनामनुपूर्वशः।
भगवत्परिवारस्य यागं वक्ष्यामि तच्छु(च्छृ?)णु॥१२॥

किरीटं पूजयेद्विप्र! प्रतिपदि समुज्ज्वलम्[2]।
रक्तैः गन्धैश्च पुष्पैश्च रक्तस्रग्वस्त्रभूषितम्॥१३॥

प्रभाभिर्नैकरूपाभिरावृतं यशसांनिधिम्।
शोभां कीर्तिञ्च प्राप्नोति दारिद्र्यं तस्य नश्यति॥१४॥

तदधिष्ठातृदेवञ्च वासुदेवप्रसादतः।
वह्निं समर्चयेद्यागे त्रिपदं चाष्टबाहुकम्॥१५॥

त्रिशिखं रक्तवर्णञ्च साङ्गोपाङ्गेन साधकः।
गदां हेमाद्रिसङ्काशां द्वितीयायां यजेत् सदा॥१६॥

स्थूलां दृढां तर्जयन्तीं दुष्टौघं दक्षिणात् करात्।
स्वोत्थेन रश्मिजालेन भासयन्तीं नभस्थलम्॥१७॥

पीतवर्णां चतुर्हस्तां पीतपुष्पैरलङ्कृताम्।
पूजयेत् पीतद्रव्यैस्तां हरिद्रादिसमन्विताम्॥१८॥

शब्दब्रह्मात्मिकां देवीं सर्वविद्याप्तये पुमान्।
सरस्वती च सम्पूज्या श्वेतपुष्पेन नारद!॥१९॥

---

१. तन्त्रोक्तात् इति क।
२. समुज्जवलम् इति क।

साङ्गांश्च चतुरो वेदान् यन्त्रतन्त्रादिकं तथा।
इतिहासं पुराणञ्च विद्याञ्चान्यां तु लौकिकीम्॥२०॥

भ्रामयति स जिह्वाग्रं कालेनाल्पेन सुव्रत!।
अनन्तं तृतीयायाञ्च[1] यजेत समुदारधी:॥२१॥

तृतीयं मानसे पीठे महाकायं महोदरम्।
पूर्णचन्द्राननं शुभ्रं सहस्रमणिभूषितम्॥२२॥

सहस्रफण-मालाढ्यमनन्त-शशितेजसम्।
परिवारैश्च संयुक्तं पन्नगमथ पूजयेत्॥२३॥

अनन्तशायिनं चैव तदधिष्ठितमीश्वरम्।
पीतरक्ताम्बरै: मिश्रै: पुष्पैश्चैवं तथाविधै:॥२४॥

चरुभिश्च यजेद् देवं मन:स्थैर्यस्य सिद्धये।
बलञ्चानन्तमस्माद्धि पूजनात्प्राप्यते तथा॥२५॥

चतुर्थ्यां तु गणाधीशं विष्वक्सेनं यजेन्मुदा।
आजानबाहुं श्रीमन्तं पृथूरस्थलराजितम्॥२६॥

नवदूर्वाङ्कुराभासं त्वीषत्पीतलकान्तिमत्।
चतुर्दंष्ट्रं[2] चतुर्बाहुं महारत्नोपशोभितम्॥२७॥

द्रवत्कनकपिङ्गाक्षचुबुकं पृथुनासिकम्।
भक्तानां भीतिहर्तारं दुष्टानां भीतिकारकम्॥२८॥

गजाननादिभिर्युक्तं सुश्वेतचमरोद्यतै:।
यागाद्यद्वासुदेवीयादवशिष्टं निवेदितम्॥२९॥

भक्ष्यभोज्यादिकं सर्वं पत्रमाल्यादिकं तथा।
तेनैव पूजनीयोऽसौ प्रसन्नो भवति सदा॥३०॥

---

१. तृतीयस्याञ्च इति ख।
२. चतुर्द्रंष्टं इति क।

दासभक्तिर्भवेद्विष्णौ पूजनादस्य नारद!।
भक्त्या प्रसन्नता तस्य शाश्वतं सुखमाप्नुयात्॥३१॥

पञ्चम्यां पद्ममध्यस्थां पद्महस्तां श्रियं यजेत्।
स्त्रीदेवताभिः सर्वाभिः सेव्यमानां समन्ततः॥३२॥

रक्तपङ्कजवर्णाभां लक्ष्मीं नीलाम्बुजेक्षणाम्।
दुग्धौघधवलां देवीं मातरं स्फटिकामलाम्॥३३॥

ऋद्धिवृद्ध्यादिभिर्युक्तां पद्मैश्चरुभिरेव च।
ब्रह्मकामेन सुश्वेतैः रक्तैः राज्यार्थिभिस्तथा॥३४॥

पुष्पैः वस्त्रैस्तथा भोज्यैः पूजनीया हि सर्वथा।
श्रीसूक्तेन श्रियं देवीं पूजयेत्फलप्राप्तये॥३५॥

राजा राज्यमवाप्नोति जयार्थी जयमश्नुते।
ऐश्वर्यकामस्त्वैश्वर्यं धनार्थी लभते धनम्॥३६॥

सौभाग्यं स्त्री समाप्नोति पुत्रपौत्रादिकं तथा।
षष्ठ्यां पद्मं स्थितं हस्ते वासुदेवस्य सर्वदा॥३७॥

विष्णोः दैनिकयागान्ते पृथक् सम्पूजयेन्मुदा।
प्रशान्त-पावकाकारम् उदयादित्य-सन्निभम्॥३८॥

ध्यायेच्चतुर्भुजं दिव्यं सितदन्तञ्च भासितम्।
षड्दलं षड्गुणान् प्राप्तुं पूजयेत्साधकः सदा॥३९॥

अष्टौ दिक्षु यशः प्राप्तुमष्टदलं समर्चयेत्।
वरुणं श्याममेघाभं तदधिष्ठातृनायकम्॥४०॥

संस्मरेच्चैव लाभार्थं रत्नानां विविधात्मनाम्।
अर्घ्यपुष्पादिभिः पूज्यमीषद्रक्ताननं मुने!॥४१॥

ईषद्रक्ताननैः पुष्पैः वस्त्रैर्भोज्यैश्च नारद!।
सप्तम्यां कौस्तुभं ध्यायेत् पूजयेच्चैव कामुकः॥४२॥

पद्मरागाचलाकारं कौस्तुभं रत्ननायकम्।
द्योतयन्तं दिशाः सर्वाः शोभितं विष्णुवक्षसि॥४३॥

भास्करं नायकं तस्य वासुदेवांशरूपकम्।
लोकोपकारनिरतम् एकचक्ररथस्थितम्॥४४॥

रक्तहस्ताङ्घ्रिनेत्रञ्च कवचेनोपशोभितम्।
परिवारान्वितं भानुं कौस्तुभञ्चैव पूजयेत्॥४५॥

करवीरैः सरोजैश्च सुरक्तैः दाडिमैस्तथा।
मौनी संयतचित्तश्च शुचिर्भूत्वा[1] समाहितः॥४६॥

निधिकुम्भमवाप्नोति अक्षय्यं सुखसागरम्।
दरिद्रोऽपि भवेदाढ्यो व्याधितः स्वस्थतां व्रजेत्॥४७॥

चक्रं सुदर्शनं ब्रह्मन् अष्टम्यां संयजेन्मुदा।
कुन्दाव(दा?)तकमलं सौम्यमीषत्स्मिताननम्॥४८॥

ऊर्ध्वपिङ्गलकेशाढ्यं ज्वलद्दंष्ट्रोज्ज्वलाननम्।
तिष्ठन्तमष्टभिर्युक्तं भुजैः परमशोभनैः॥४९॥

समभङ्गमुदाराङ्गं रक्ताम्बरधरं विभुम्।
शङ्ख-चक्र-गदा-पद्म-पाशाङ्कुशादिधारकम्॥५०॥

रुद्रादिभिरनुस्यूतं भीमं भीमपराक्रमम्।
चक्रं रक्तैः फलैः पुष्पैः यजेन्नित्यमुदारधीः॥५१॥

तेजस्वी बलवान् वाग्मी निर्विघ्नश्च भविष्यति।
नवम्यां वनमालां तु नित्यं हरेर्हृदि स्थिताम्॥५२॥

---

१. शुचिर्भुत्वा इति क।

ध्यायेद्भगवतीं मालां चित्ररूपां मनोहराम्।
सर्वगन्धान्वितां सौम्यामीषद्विकसिताननाम्॥५३॥

सखियुक्तां यजेत् प्रेम्णा पीतवस्त्रधरां मुदा।
पयोघृतविमिश्रेण जुहुयात्तण्डुलेन च॥५४॥

नरस्तरति दुर्गाणि लभते च जयश्रियम्।
दशम्यां पूजयेत् शङ्खं तुहिनाचलसन्निभम्॥५५॥

आगमतत्त्वसारांशमुद्गिरन्तं मुखैः स्वकैः।
चतुर्वक्त्रं चतुर्बाहुं श्वेतहारैरलङ्कृतम्॥५६॥

कीर्तिं श्रीवासुदेवस्य द्योतयन्तं नभोऽन्तिमे।
कीर्तिं रत्नानि प्राप्नोति सर्वदिक्षु स नारद!॥५७॥

एकादश्यां विशेषेण मासि मासि च पूजनम्।
मासाधिपेन देवेन सह कार्यं फलेप्सुना॥५८॥

एकादश्यास्तिथेः पुण्यं महदुक्तं हि तान्त्रिकैः।
उपोष्या सा जनैः सर्वैर् आबालवृद्धभावुकैः॥५९॥

रात्रौ जागरणं कार्यं दिवा तु पूजनं शुभम्।
मार्गशीर्षे सिते पक्षे मोक्षदैकादशी मता॥६०॥

ध्येयाऽऽखण्डलचापाभा देवी रक्ताम्बुजप्रभा।
पूजनीयश्च मालत्या केशवोऽत्र श्रिया सह॥६१॥

फलमर्घ्ये तु नारङ्गं नैवेद्ये मोदकाः शुभाः।
देयानि सप्तधान्यानि मुख्यानि विदुषांवर!॥६२॥

यत्फलमश्वमेधात् स्यात् प्राप्नुयादधिकं ततः।
पौषे पूज्या तु सानन्दा तन्त्रोक्तैकादशी तिथिः॥६३॥

पुष्टा कनकगौरा च पीतवस्त्राम्बरैर्वृता।
सुमुखा करुणामूर्तिः[1] वाञ्छितार्थफलप्रदा ॥६४॥

पद्मया सह सम्पूज्यो नारायणोऽत्र नारद!।
कुम्भान्युक्तानि पुष्पाणि चूर्णं नैवेद्यमुच्यते ॥६५॥

अर्घ्ये च दाडिमं स्वादु दाने मध्वाज्यशर्करा।
वाजपेयमखात् श्रेष्ठं फलं प्राप्नोति पूजकः ॥६६॥

माघे ज्ञेया जयानाम्नी ध्येया कुमुदपाण्डरा।
सर्वलक्षणसम्पन्ना हारकेयूरभूषिता ॥६७॥

देवी नारायणी ध्येया पूज्यं देवं वदाम्यहम्।
नित्यया सह सम्पूज्यो माधवस्तत्र हीश्वरः ॥६८॥

पुष्पेषु बकुलान्यर्घ्ये बीजपूरं निवेदने।
मण्डकाश्चात्र दाने तु तिलपात्रं प्रकीर्तितम् ॥६९॥

राजसूयविशेषेण फलं स्यान्नाऽत्र संशयः।
फाल्गुने कथिता देवी धात्रीति भगवन्मयी ॥७०॥

पराऽर्कक्रान्तिसदृशा वंशमुक्ताफलद्विजा।
वरदाभयहस्ता च ध्येया ह्याराधनान्वितैः[2] ॥७१॥

गोविन्दं पूजयेत् तत्र चन्द्रवत्या सह व्रती।
पुष्पेषु मन्दराण्यत्र गोधूमान्नं निवेदने ॥७२॥

स्वर्णपात्रं तथा दाने देयं फलार्थमिच्छुना।
अतिरात्रात् फलं श्रेष्ठं प्राप्नोति साधको मुने! ॥७३॥

एकादशी मधौ मासे विमलाख्या प्रकीर्तिता।
कामदाख्या तथैवोक्ता स्वतन्त्रा चारुकुण्डला ॥७४॥

---

१. करूणामूर्तिः इति क।
२. ह्याराधनान्तैः इति क।

सर्वकीर्तिमयी देवी मेखलादाममण्डिता।
सिन्दूरपुञ्जवर्णाभा ध्येया नारायणाश्रितैः॥७५॥
रमया सहितो विष्णुः पूज्यते तदधिष्ठितः।
विविधैर्गन्धपुष्पैश्च चन्दनेनाथवा मुने!॥७६॥
नारिकेलफलमर्घ्ये पूजने आम्रमञ्जरी।
नैवेद्ये सक्तवो दाने मधुक्षीरं घृतं तथा॥७७॥
फलं प्राप्नोति विप्रर्षे! सोमयागात्परं शुभम्।
राधस्यैकादशी ज्ञेया मोहिनी मोहनाशिनी॥७८॥
बन्धुजीवोज्ज्वला रक्ता पीनोन्नतपयोधरा।
प्रसन्ना पद्मपत्राक्षी करुणापूर्णलोचना॥७९॥
माधव्या सह सम्पूज्यस्तस्यां तु मधुसूदनः।
पुष्पेषु मल्लिका प्रोक्ता नैवेद्ये पायसं तथा॥८०॥
पनसं फलमर्घ्ये[1] च शय्यादानं[2] प्रकीर्तितम्।
यजनमग्निष्टोमेन चास्मान्न्यूनं विभावितम्॥८१॥
ज्येष्ठे एकादशी प्रोक्ता निर्जलाख्या सनातनी।
तपस्विनी सुसर्वाङ्गी नानालङ्कारभूषिता॥८२॥
पाशाङ्कुशधरा चैवं शङ्खपद्मकरोद्यता।
ध्यात्वा तां पूजनीयोऽत्र सपद्माक्षी त्रिविक्रमः॥८३॥
पुष्पेषु यूथिका मुख्या अर्घ्येऽत्राम्रफलं तथा।
नैवेद्ये[3] पायसं देयं हिरण्यं छत्रमुच्यते॥८४॥
तद्गवामयनात् श्रेष्ठं फलं प्राप्नोति सत्तमः।
आषाढे शुक्लपक्षेऽथ शयन्येकादशी मता॥८५॥

---

१. फलंमर्घ्ये इति क।
२. शय्यादान इति क।
३. नेवेद्ये इति क।

योगनिद्रा हरेरक्ष्णोः संस्थिता चारुहासिनी।
यशस्करी च दुग्धाभा शान्तिदा परमेश्वरी ॥८६॥

वामनः कमलायुक्तः पूजनीयोऽत्र भक्तितः।
अपामार्गोऽत्र पुष्पेषु नैवेद्ये लड्डुकास्तथा ॥८७॥

मातुलुङ्गफलं त्वर्घ्ये दानं धेनुं सुशोभिताम्।
चातुर्मास्यान्मखात् श्रेष्ठं फलं प्राप्नोति संयतः ॥८८॥

श्रावणे पुत्रदाख्या वै एकादशी हरिप्रिया।
देवी तुहिनसङ्काशा सर्वाकारसमन्विता ॥८९॥

दिव्यस्रग्वेष्टनोपेता महाभागा सनातनी।
श्रीधरः पूजनीयोऽत्र कान्तिमत्या सहाच्युतः ॥९०॥

शतपत्राणि पुष्पेषु नैवेद्येऽपूपकास्तथा।
जम्बीरफलमर्घ्येऽत्र पादुकादानमुत्तमम् ॥९१॥

विश्वजिद्यज्ञकृज्ज्ञेयो व्रतिनः समीपेऽवरः।
नभस्यैकादशी ज्ञेया पद्माभिधा चिदात्मिका ॥९२॥

दिव्यमाल्याम्बरधरा सेन्द्रनीलसमप्रभा।
प्रबुद्धोत्फुल्लविस्तीर्णलोचना सुस्मितानना ॥९३॥

हृषीकेशोऽत्र सम्पूज्यो देव्यपराजिता तथा।
काशपुष्पाणि पूजायां तिलपिष्टं निवेदने ॥९४॥

कूष्माण्डमर्घ्यमस्त्यत्र दाने वस्त्राणि नारद!।
सौत्रामण्या(ण्याः?)फलं त्वत्र निष्प्रभं जायते खलु ॥९५॥

एकादश्याश्विने मासि ज्ञेया पाशाङ्कुशाऽभिधा।
फुल्लेन्दीवरवर्णा च हारकेयूरभूषिता ॥९६॥

नानालङ्कारसर्वाङ्गा प्रासादसुमुखी तथा।
ध्येया देवी व्रते शुभ्रे आराध्यः पद्मनाभकः॥९७॥

पद्मावत्या समं देवः सर्वशास्त्रोपनिष्ठितः।
कदलीफलमर्घ्येऽत्र शमीपत्राणि चार्चने॥९८॥

नैवेद्ये शालिपिष्टश्च दाने मुद्रा सुवर्णजा।
यज्ञात्सौमिकनाम्नस्तु फलं स्यादधिकं मुने!॥९९॥

कार्तिके शुक्लपक्षे[1] तु बोधिन्येकादशी मता।
चातुर्मास्यव्रतस्याऽत्र समाप्तिश्च महामते!॥१००॥

तिथिदेवी तु विज्ञेया सर्वकामफलप्रदा।
विशालाक्षी प्रसन्नाऽऽस्या हेमकुण्डलभूषिता॥१०१॥

वाञ्छितार्थफला शुभ्रा मेखलादाममण्डिता।
वाक्देव्या सह सम्पूज्यस्तत्र दामोदरप्रभुः॥१०२॥

पूजायां पद्मपुष्पाणि रक्तान्यत्र निवेदने।
मुद्गचूर्णं पद्ममर्घ्ये देयं तु नारद!॥१०३॥

प्रत्येकस्यां तिथावेवं पूजनीयो विदांवरः।
अधिके मासि यष्टव्यः प्रभुः श्रीपुरुषोत्तमः॥१०४॥

कमला पद्मपत्राक्षी पूज्या तत्र महात्मना।
अर्घ्यादिकं तु विज्ञेयं तत्तदृतुप्रभं मुने!॥१०५॥

द्वादश्यां वासुदेव ..................णादिकम्।

.........विशेषेण .. दितं वासुदेवं कर्णिका...परिकल्पयेत्
तत्वत्वतत्पत्नी...................... लोचनम्॥
हार-नूपुर-केयूर-मेखला-दाम-मण्डितम्।

---

१. इत आरभ्य अध्यायसमाप्तिपर्यन्तं ख-मातृकायां नास्ति।

........................................................

रुपचय एते........................ सनातनम्

कर्ता...... प........... रा.......... शक्ति...........स्य च

...........पूजयेत् गरुडं............. विहगे....रं

महाबलं महाकायं......................... पञ्चम(मम्?) ॥

विषं हन्ति शं ......................... मुने!।

पौर्णमास्यां तु........................ भृगुलाञ्छनम्।

पूजयेत् ........................ स्फटिक..भम्।

तदधिष्ठातृदेवञ्च चन्द्रं........................... ॥

विष्णवंशं.................. विद्या............... ॥

वासुदेवप्रसादेन तत्परिवारसेवया ॥

आप्नोति पूजकः स्वर्ग्यमिहैव फल............

तस्मात् सर्वेण भावेन पूज्यः स एव नारद!॥१२०॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामर्चनारात्रे
तिथियज्ञनिरूपणनामा
तृतीयोऽध्यायः।

## अर्चनारात्रे चतुर्थोऽध्यायः

**नारद उवाच**

इच्छामि वेदितुं स्वामिन्! यत् त्वया समुदीरितम्।
पूजनं विविधे क्षेत्रे दिव्ये सिद्धायतने तथा॥ १॥

ऋषिभिः सिद्धगन्धर्वैस्तथा विद्याधरोत्तमैः।
असुरैः राक्षसैश्चैवं मनुषेन्द्रैस्तु स्थापिते॥ २॥

कस्य देवालयस्याऽत्र माहात्म्यं कीदृशं प्रभो!।
कानि तीर्थानि लोकेऽस्मिन् प्रसिद्धानि च लाङ्गलिन्॥ ३॥

तत्सर्वं विस्तरात् स्वामिन्! वक्तुमर्हसि कृत्स्नशः।

**सङ्कर्षण उवाच**

पृथिव्यां भारते वर्षे क्षेत्राणि विविधानि तु॥ ४॥

स्वयंव्यक्तानि सिद्धानि दिव्यानि द्विजपुङ्गव!।
क्षेत्राख्यैर्भगवत्तत्त्वैः क्षेत्रनाथसमन्वितैः॥ ५॥

नानाविभवरूपैस्तु व्याप्तव्यूहात्मपूर्वकैः।
नृणामनुग्रहार्थं तु कर्मभूमिरधिष्ठिता॥ ६॥

तुष्टये आस्तिकानां च तीर्थादीनां हि सिद्धये।
क्षेत्रनाथाः स्वयं शश्वद्वसन्ति तत्र नारद!॥ ७॥

पूर्णं भूमण्डलं व्याप्तं वासुदेवेन सर्वथा।
तस्मात् तीर्थात्मकं सर्वं नृणां ब्रह्मैकयाजिनाम्॥ ८॥

व्यामिश्रयाजिनां किन्तु संस्कारार्थं हि भूतले।
स्थापितान्यालयान्यत्र मोक्षाय क्षेत्रवासिनाम्॥ ९ ॥

माहात्म्यं स्यादसङ्ख्यातं स्वयंव्यक्तस्य चाक्षयम्।
लक्षगुणं तु विज्ञेयं तत्सिद्धायतनस्य च॥१०॥

सहस्रगुणकं विप्र! विद्याधरादिस्थापिते।
शतं मानुषविप्रस्य दशं तदवरस्य च॥११॥

विदित्वा क्षेत्रमाहात्म्यमनुष्ठेयं जपादिकम्।
तत्फलं प्राप्यते शश्वत् कथयामि महामुने!॥१२॥

स्वयंव्यक्तेषु क्षेत्रेषु दश मुख्यानि ब्राह्मण!।
दिक्षु दशसु व्याप्तानि वक्ष्यामि तानि सुव्रत॥१३॥

प्राक्समुद्रापयाने तु भूभागे शुभलक्षणे।
कापिलीं मूर्तिमासाद्य पातालद्वारमाश्रितः॥१४॥

स्थितोऽस्ति वासुदेवात्मा दिव्यदेहेन नारद!।
यत्र ह्येकान्तिनः सिद्धाः तपश्चरन्ति दुष्करम्॥१५॥

अदृश्या मनुजैः सर्वे प्राणिभिश्चर्मचक्षुभिः।
गङ्गासमुद्रसंयोगो यत्र भाति मनोरमः॥१६॥

साङ्ख्यं ज्ञानं मुमुक्षुभ्यो ददाति स्वेच्छया सदा।
दृश्यते चक्षुषा देवो भगवान् पुण्यसंचयैः॥१७॥

अधःक्षेत्रं तु विज्ञेयमाग्नेयं वच्मि तच्छृणु।
शङ्खक्षेत्रमिति ख्यातमाग्नेयोदधिसंस्थितम्॥१८॥

औड्रदेशे स्थितं रम्यं स्वर्गमोक्षप्रदायकम्।
जगन्नाथ इति नाम्ना दारुमूर्तावमानुषे॥१९॥

स्थितः स्वयं परब्रह्म क्षेत्राधीशः सुरार्चितः।
अहञ्चैवं सुभद्रा च संस्थितौ तत्र मन्दिरे॥२०॥

दृष्ट्वाऽऽलयं सुपर्णञ्च मूर्तित्रयञ्च नारद!।
स्नात्वोदधौ सरस्तीरे प्रयाति परमं पदम्॥२१॥

देवा यत्र समायान्ति दृष्टुं श्रीपुरुषोत्तमम्।
किन्नरा यक्षगन्धर्वा अप्सरोभिः सहात्र वै॥२२॥

वसन्ति पुण्यक्षेत्रेऽस्मिन् वैष्णवाः सिद्धपुरुषाः।
दृष्टुं सदा जगन्नाथं दिव्यरूपेण सर्वदा॥२३॥

विभवाः क्षेत्रनाथस्य दर्शनाय समाययुः।
यान्ति यास्यन्ति क्षेत्रेशाः क्षेत्रपावनहेतुना॥२४॥

दक्षिणे तीर्थक्षेत्रं तु तोताद्रितलसंस्थितम्।
तोदनात् सर्वपापानां तोताद्रिरिति गीयते॥२५॥

स्वयंव्यक्तमिति ख्यातं कोटिजन्माघनाशकम्।
पुण्यतीर्थसमायुक्तं सर्वर्तुकुसुमान्वितम्॥२६॥

ददाति दर्शनं तत्र वासुदेवः खगासनः।
पूज्यते पञ्चकालेन पञ्चरात्रपरायणैः॥२७॥

एकायनाभिधाद्वेदाद् ब्राह्मणैः शुद्धयाजिभिः।
इन्द्रब्रह्मादिभिः देवैर्भृग्वादिमुनिभिः[1] प्रभुः॥२८॥

पूजितः संस्तुतश्चैव श्रीभूनीलादिभिः सह।
नायकः श्रीनिवासोऽत्र वाञ्छितार्थफलप्रदः॥२९॥

केशवादिकमूर्तीनां विभवानाञ्च कारणः(णम्?)[2]।
असङ्ख्या दिव्यदेहेन तिष्ठन्ति सिद्धबान्धवाः॥३०॥

---

१. देवैःभृग्वादिमुनिभिः इति क।
२. अधोरेखायुक्तं वाक्यं ख-मातृकायामेवोपलभ्यते।

आराधयन्ति स्तुन्वन्ति नारायणं परात्परम्।
नैर्ऋत्ये तीर्थक्षेत्रं तु नारायणाद्रिसंस्थितम्॥३१॥

वैकुण्ठवर्धनं नाम यादवाद्रिः शुभं तथा।
स्वयं नारायणेनाऽत्र स्वयंव्यक्तं विमानकम्॥३२॥

पितामहाय वात्सल्यात् प्रदत्तं मुनिसेवितम्।
विरजाऽप्यंशभागेन क्षेत्रेऽस्मिन् वहति सदा॥३३॥

अमला पुण्यदा देवी सर्वदोषप्रणाशिनी।
तथैवानेकतीर्थानि क्षेत्राणि विविधानि च॥३४॥

सन्ति नारायणक्षेत्रे स्वामी नारायणः सदा।
वसति दिव्यरूपेण क्षेत्राधीशात्मना मुने!॥३५॥

मुनीनां रक्षणार्थाय यत्र तत्राश्रमे वसन्।
रामः सलक्ष्मणश्चात्र ससीत आजगाम हि॥३६॥

नारायणममुं दृष्ट्वाऽऽतिथ्यं प्राप्य महर्षीणाम्।
आनन्दितमनाः[१] तीर्थमाहात्म्यं जगति जगौ॥३७॥

यादवो बलदेवोऽपि श्रीकृष्णेन समं मुने!।
तीर्थेऽस्मिन् संस्थितो देवो मदंशो लोकपूजितः॥३८॥

नारायणं प्रभुं द्रष्टुं तपस्यन्त्यमलाशयाः।
संशुद्धमखिनः सिद्धाः क्षेत्रेऽस्मिन् मुनिपुङ्गवाः॥३९॥

पश्चिमे द्वारका रम्या तीर्थक्षेत्रात्मना मुने!।
प्रसिद्धा भूतले दिव्या कुशस्थलीति वर्णिता॥४०॥

सामुद्रे संस्थिता ब्रह्मन्! यदूनां प्राणवल्लभा।
वर्तते वासुदेवांशः श्रीकृष्णः परमेश्वरः॥४१॥

---

१. आनन्दितनाः इति क।

पांसवो द्वारकायास्तु वायुना समुदीरिताः।
पापिनां मुक्तिदाः प्रोक्ताः किं पुनर्द्वारकाभुवि ॥४२ ॥

अपि कीटपतङ्गाद्याः पशवोऽथ सरीसृपाः।
विमुक्ताः पापिनः सर्वे द्वारकायाः प्रभावतः ॥४३ ॥

धारयन्ति रजो मूर्ध्नि नारदाद्या महर्षयः।
गण्डक्यंशसमुद्भूताः(ता?) गोमती सरितां वरा ॥४४ ॥

अस्ति स्नानेन तस्यां तु ज्वलति पापपुञ्जकान्।
नानाविधानि तीर्थानि मोक्षभोगफलानि च ॥४५ ॥

क्षेत्रेऽस्मिन् सुमते! सन्ति पावनाय मनीषिणाम्।
दर्शनाशां हृदि धृत्वा मुनीनां बहुलक्षकम् ॥४६ ॥

वर्षावातातपं सोढ्वा तपति दुष्करं तपः।
दृश्यन्ते शुद्धहृदयैः कदाचित् पुरवासिभिः ॥४७ ॥

स्वयंव्यक्तमिदं क्षेत्रं लोके सिद्धं सनातनम्।
पुष्करं तु प्रवक्ष्यामि वायवीयदिशि स्थितम् ॥४८ ॥

नाभिदेशस्थितं क्षेत्रं शेषाहिशयनात्मनः।
स्वयंसिद्धमिदं दिव्यं ब्रह्मणे परमात्मना ॥४९ ॥

अर्पितं वज्रनाभस्य नाशाय पुष्करं पुरा।
पुष्पस्य पतनाद्भूमौ पुष्कराभिधमुच्यते ॥५० ॥

यथा सुराणां सर्वेषामादिर्हि पुरुषोत्तमः।
तथैव पुष्करं विप्र! तीर्थानामादिरुच्यते ॥५१ ॥

भगवान् शेषशय्यायां शेतेऽत्र पद्मनाभकः।
यच्छति दर्शनं स्वीयं क्षेत्रेशः क्षेत्रवासिनाम् ॥५२ ॥

याज्ञिका वेदद्रष्टार: पुराणा: परमर्षय:।
वासुदेवरता: सन्ति दिव्यरूपेण नारद!॥५३॥

माहात्म्यमस्य क्षेत्रस्यापारणीयं हरेरिव।
उत्तरे राजते क्षेत्रे बदरीश: प्रतापवान्॥५४॥

स्वयंव्यक्तमिदं सिद्धं विशालाबदरीयुतम्।
वैहायसो ह्(ह्र?)दो यत्र सन्ति राजर्षयस्तथा॥५५॥

हत्वा वृत्रासुरं शक्र: पुरा ह्यत्र समागत:।
ब्रह्महत्याऽपनोदार्थं तेपे वर्षायुतं तप:॥५६॥

यत्र नारायण: साक्षान्नरो धर्मात्मजावुभौ॥
वासुदेवांशसम्भूतौ तपतस्तप आदरात्॥५७॥

सरिदलकनन्दा तु सुमेरुपर्वतोद्गता।
वहति शाश्वती पुण्या जन:श्रेयस्कराय वै॥५८॥

साङ्गवेदविदो ह्यत्र वसन्ति संयमान्विता:।
यत्र केचिन्मरुद्भुङ्क्त्वा नीरपा उष्मपास्तथा॥५९॥

फेनपा धूमपाश्चैवं सूर्यरश्मिपिबास्तथा।
वनिनो दर्शनार्थाय तपन्ते दुष्करं तप:॥६०॥

एकान्तिनो महात्मानो दिव्यदेहा व्रतान्विता:।
तप एव हि क्षेत्रेऽस्मिन् मुख्योऽस्ति प्राभवो गुण:॥६१॥

क्षेत्रनिवासिन: सर्वे नारदोद्धवपार्षदा:।
क्षेत्रीयसदसि नित्यं राजन्ते प्रभुणा सह॥६२॥

गायन्ति वासुदेवस्य यश एकायनाभिधम्।
सालग्रामाभिधं क्षेत्रमीशाने[1] दिशि नारद!॥६३॥

---

१. क्षेत्रमैशान्यां इति ख।

राजेन्द्राख्ये वने विष्णुः सुदर्शनवपुर्हरिः।
जनार्दनेति विख्यातो नित्यं संनिहितो मुने!॥६४॥

तपःसिद्धिप्रदं क्षेत्रं श्रयणीयं मुमुक्षुभिः।
तत्र चक्राङ्कितं सर्वं स्थावरं जङ्गमं तथा॥६५॥

तद्देशवासिनः सर्वे सुरास्तिर्यञ्च एव च।
मनुष्यास्तरवश्चान्ये सर्वे चक्राङ्कितास्तथा॥६६॥

तत्र प्रवेशमात्रेण जन्तवो वीतकल्मषाः।
तत्र त्यक्तशरीरास्तु यान्ति निर्वाणमुत्तमम्॥६७॥

गण्डक्याः सरितस्तीरे सालग्रामनिवासिनः।
ऋषयः सिद्धरूपास्तु ध्यायन्ते पुरुषोत्तमम्॥६८॥

फलमूलञ्च यत्किञ्चिद् देहनिर्वाहरूपकम्।
गृहीत्वा निवसन्त्यत्र विष्णुचित्ता मुनीश्वराः॥६९॥

यत्र नास्ति प्रवेशोऽपि मायायाः प्रकृतेः खलु।
मायातीतस्वरूपेण सन्ति क्षेत्रनिवासिनः॥७०॥

पूर्वे भरतखण्डेऽस्मिन् नवलक्षाभिधं[१] शुभम्।
मेरुपर्वतसङ्गेऽस्ति दुर्गम्यं विषयात्मनाम्॥७१॥

चट्टले दक्षबाह्वर्धं छायासत्यास्तु नारद!।
शिवहस्तस्थितायास्तु छिन्नं चक्रेण विष्णुना॥७२॥

ततो सुदर्शनं चक्रं स्थापितं धरणीतले।
निकटे चन्द्रनाथस्यागम्यं तत् प्राणिभिः[२] सदा॥७३॥

हिंसकाः प्राणिनस्तत्र सन्ति व्याघ्रादयः खलु।
योगिनस्तत्र गच्छन्ति योगैश्वर्येण ब्राह्मण!॥७४॥

---

१. नवलक्षाधिपं इति क।
२. प्राणिभः इति क।

तपस्यन्ति तपो यत्र सिद्धवृन्दं समीहया।
वासुदेवस्य देवस्य दर्शनस्य निरन्तरम् ॥७५॥

ज्वलन्ति वह्निकुण्डास्तु प्रत्येकेषाञ्च सूज्वलाः।
निरिन्धना नगे तस्मिन् जलं शीतं पवित्रकम् ॥७६॥

तत्र कुण्डेषु दृश्यन्ते आश्चर्यकारकं मुने!।
अदृश्या सन्ति सिद्धास्तु तत्कुण्डा अपि नारद! ॥७७॥

तदीयलेशरूपेण वाडवः पर्वतान्तिके।
कुण्डो विलोक्यते सर्वैर्जनैर्लौकिकचक्षुषा ॥७८॥

क्षेत्रं तु दशमं विद्धि भूवैकुण्ठस्वरूपिणम्।
श्रीरङ्गमिति विख्यातं कवेरतनया तटे ॥७९॥

तद्धामोभयतो ब्रह्मन्! परिरम्य सरिद्वरा।
यथा पतिं चिरं प्राप्तुं भुजाभ्यां प्रियमङ्गना ॥८०॥

चन्द्रपुष्करिणीमध्ये विमानं जगदुत्तमम्।
दत्तं श्रीवासुदेवेन चतुर्मुखाय शाश्वतम् ॥८१॥

क्षेत्रं क्षेत्रवरञ्चैव मूर्तिरूपेण संस्थितम्।
चरन्ति पुरुषास्तत्र विमलाः संशितव्रताः ॥८२॥

देवासुरमुनीन्द्राद्याः सदा देवाभिकाङ्क्षिणः।
शुद्धयज्ञा महात्मानो ब्रह्मण्याहितचेतसः ॥८३॥

षडध्वज्ञानसम्पूर्णाः पञ्चकालपरायणाः।
द्वादशाध्यात्मनिरताः[१] सम्पूर्णा नान्ययाजिनः ॥८४॥

अनन्तभोगशयनः पीतवासा जनार्दनः।
श्रीरङ्गनाथनाम्ना तु विख्यातो धरणीतले ॥८५॥

---

१. द्वादशाध्यात्मनिरताः = द्वादशाक्षरमन्त्रजपनिरता इति भावः।

क्षेत्रनाथात्मना भूमौ लक्ष्मीभूषितवक्षसः।
इषत्कुचि(ञ्चि?)तवामाङ्घ्रिपङ्कजः पङ्कजेक्षणः ॥८६॥
राजते परिवारेण सहात्र रुचिरप्रभः।
इति नारद आख्यातं मुख्यं क्षेत्रगणं मया ॥८७॥
क्वचिद्व्यक्तः क्वचिद्दिव्यः क्वचिद्विमानसंयुतः।
राजते वासुदेवोऽत्र जनानां हितकारकः ॥८८॥
बहूनां[1] जन्मनामन्ते क्षेत्रेऽस्मिन् जन्म जायते।
माहात्म्यं तु विदित्वैवं पूजन्ते तत्र प्राणिनः ॥८९॥
जायते सफलं जन्म तदन्येषां निरर्थकः।
अथ त्वन्यानि तीर्थाणि(नि?)[2] स्वयंव्यक्तानि सुव्रत! ॥९०॥
दिग्भेदेन प्रसिद्धानि सिद्धैः संसेवितानि वै।
वक्ष्यामि श्रवणं यस्य नैकजन्मौघनाशकम् ॥९१॥
पूर्वस्यां दिशि सिद्धानि क्षेत्राणि वेद नारद!।
हेमोत्तमाङ्गदृग्देवो हेमशैलमहान्तरे ॥९२॥
मन्दराख्यं गिरिं चैव ह्यासाद्य मधुसूदनः।
लवणोदधिपर्यन्ते[3] भूभागे सिद्धसेविते ॥९३॥
कूर्मवक्त्रश्च भगवान् संस्थितः शङ्खचक्रधृक्।
गङ्गासमुद्रसंयोगे क्षित्युद्देशे मनोरमे ॥९४॥
यज्ञभुग् भगवान् देवो ध्यायिनामपवर्गदः।
मगधामण्डले विप्र! महाबोधधराश्रितः ॥९५॥
संस्थितो लोकनाथात्मा देवदेवो जनार्दनः।
शुभमासाद्य भूभागं प्राग्ज्योतिषपुरे तथा ॥९६॥

---

१. बहूना इति क।
२. तीर्थानी इति ख।
३. लवणोदधिमध्ये द्वीपे भगवतः कूर्मस्य स्थितिः पौष्करसंहितायां ३६/३२२ क्रमाङ्के निर्दिष्टा। विष्णुधर्मोत्तरपुराणेऽपि भगवतो विष्णोर्लोकः १/६/२८ इत्यत्र निरूपितः स एवात्र ग्राह्य इति।

देवो विश्वेश्वराख्यश्च[१] स्थितः सिद्धसमन्वितः।
दक्षिणे द्रविडे देशे महेन्द्रादिनगेषु च ॥९७॥

वेङ्कटाभिधे क्षेत्रे श्रीनिवासः श्रिया सह।
नारायणाचले विष्णुः स्वामी नारायणः प्रभुः ॥९८॥

वामनाख्यः प्रभुर्मूर्तः सह्याद्रौ द्विजपुङ्गव!।
पद्मनाभस्तु देवेशस्त्ववतीर्य च संस्थितः ॥९९॥

दक्षिणां दिशमाश्रित्य समीपे जलधिक्षितेः।
नगोत्तमे महेन्द्राख्ये परश्वथ(धः?)करो द्विजः ॥१००॥

रामसञ्ज्ञश्च भगवान् संस्थितः क्षत्रियान्तकः।
देवदेवेशनाम्नाऽथ हस्तिपर्वतमस्तके ॥१०१॥

सातत्रनाभिधक्षेत्रे सिद्धविद्याधरः प्रभुः।
पृथिव्यां तु पितृक्षेत्रे मोचयन्तमृणत्रयात् ॥१०२॥

जनार्दनाख्यया ब्रह्मन्! विश्वात्मा भगवान् स्थितः।
शङ्कराख्ये तु भूभागे सर्वदेवनिषेविते ॥१०३॥

ज्ञानमूर्तिर्जगन्नाथः[२] संस्थितः शुभकृन्नृणाम्।
मतङ्ग आश्रमे रामः शर्वरीप्राणवल्लभः ॥१०४॥

मृगस्थलेऽभयो(य?)हस्तः श्रेयसे संस्थितः खलु।
पाण्डुरङ्गाभिधो देवः पाण्डुरङ्गपुरे तथा ॥१०५॥

भीमानद्यास्तटे देवो वाञ्छितार्थफलप्रदः।
पश्चिमे पुण्यदेशे तु नर्मदादिसरित्तटे ॥१०६॥

रैवतकादिशैलेषु समुद्रतटवर्तिषु।
क्षेत्राणि यानि तान्यत्र प्रवक्ष्यामि शुभाय नु ॥१०७॥

---

१. विश्वधराख्यश्च इति क।
२. ज्ञानमूर्तिजगन्नाथः इति क।

भूभागपदमाश्रित्य संस्थितो नाभसाह्वये।
गोविन्दः कमलाकान्तो भविनां शोकशान्तये॥१०८॥

नर्मदाख्यं हि चाक्रम्य जलं पापक्षयङ्करम्।
श्रीधरः संस्थितो देवो गिरौ रैवतके[1] प्रभुः॥१०९॥

दामोदरस्तु भगवान् हितार्थं भावितात्मनाम्।
कृष्णाश्वेऽश्वशिरा देवः क्षितिक्षेत्रे क्षमार्चिते॥११०॥

धर्ममूर्तिर्महात्मा वै धर्मारण्ये सुरार्चिते।
अनुग्रहपरस्त्वास्ते लोकानां लोकपूजितः॥१११॥

कृष्णः प्रभुश्चतुर्मूर्तिरवतीर्य धरातले।
स्थितः पिण्डारके विप्र! मोचयन् दुष्कृतान् जनान्॥११२॥

[2]शार्ङ्गपाणिस्तु देवेशो दण्डकारण्यसञ्ज्ञके।
भगवान् दण्डपाणिस्तु पर्वतेऽर्बुदसञ्ज्ञके॥११३॥

तीर्थोत्तमे प्रभासे तु यत्र सन्निहितः सदा।
विश्वात्मा भगवान् विष्णुर्लोकानुग्रहकृत्प्रभुः॥११४॥

उत्तरापथक्षेत्रेषु उदग्दिक्संस्थितानि[3] वै।
वर्णयिष्यामि ब्रह्मर्षे मोक्षोपायान्वितानि तु॥११५॥

केशवः केशिहा लोके कुरुक्षेत्रे तु संस्थितः।
स्थाने वृन्दावनाख्येऽपि स्थितो गोवर्धनः प्रभुः॥११६॥

यामुनं जलमाश्रित्य देवदेवस्त्रिविक्रमः।
संस्थितो मुनिशार्दूल! तरणं सुगतिप्रदम्॥११७॥

हृषीकेशस्तु भगवान् संस्थितोऽप्यात्मना भुवि।
धराधरे ध्वजाख्ये तु क्षेत्रे कुब्जाम्रके द्विज!॥११८॥

---

१. रेवतके इति क ।
२. शार्ङ्ग इति क।
३. उदक्दिक्संस्थतानि इति क ।

गाङ्गे शुभजले कूले सुरसिद्धनिषेविते।
बिन्दुमाधव आख्यातः कृतशौचे नृकेसरिः॥११९॥

दाशरथिस्तु साकेते सीतालक्ष्मणसंयुतः।
मायापुर्यां महाराजो नीलकण्ठात्मना स्थितः॥१२०॥

वटमूलं समासाद्य प्रयागे सूरपूजिते।
जगदेकार्णवं कृत्वा दिव्यमासाद्य पादपम्॥१२१॥

सन्तिष्ठते स भगवान् तस्मिन् तीरे क्षितौ द्विज!।
न्यग्रोधशयनो देवो ध्येयो दिव्यगतिप्रदः॥१२२॥

हिमाचलैकदेशे तु तुङ्गे वै भृगुसञ्ज्ञके।
मधुकैटभमाथी स संस्थितो धरणीतले॥१२३॥

यज्ञभुग् भगवान् देवो नैमिषे सिद्धपूजिते।
आसाद्य सूकरक्षेत्रं देवो गरुडवाहनः॥१२४॥

संस्थितो गरुडारूढः पारिजातकराङ्कितः।
शिपिविष्टात्मके देशे शिपिविष्टाख्यया[1] स्थितः॥१२५॥

अवतीर्य स्वसत्त्वाच्च ब्रह्मसञ्ज्ञः प्रजापतिः।
मणिबन्धं समासाद्य नित्यं सन्निहितः स्थितः॥१२६॥

काश्मीरमण्डले पुण्ये क्षेत्रे चक्रधराभिधे।
चक्रपाणिस्तु भगवान् भक्तानां सुगतिप्रदः॥१२७॥

स्वामिसञ्ज्ञो जगन्नाथः स्थितो मन्दाकिनीतटे।
कोकामुखे तु वाराहो देवः सर्वेश्वरः स्थितः॥१२८॥

मध्यदेशे स्थितान् क्षेत्रान् विन्ध्याचलादिपर्वते।
संक्षेपेण प्रवक्ष्यामि निबोध गदतो मम॥१२९॥

---

१. शिपिविष्टावृतः इति क।

विन्ध्यारण्ये मृगेन्द्रात्मा पापहा[1] सर्वदेहिनाम्।
धराधरे चित्रकूटे रक्षःक्षयकरो महान्॥१३०॥

संस्थितो वरदो[2] रामः साकेतवासिपूजितः।
एतानि क्षेत्रतीर्थानि स्वयंव्यक्तानि नारद!॥१३१॥

एभिः क्षितितलं व्याप्तं पौनःपुन्येन सर्वथा।
संसारिणां जनानां यदनुग्रहधिया द्विज!॥१३२॥

एतत्सङ्कीर्तनं पुण्यं गमने तु महाफलम्।
आराधनीयः पूज्यश्च क्षेत्रेशत्वेन शाश्वतः॥१३३॥

अर्चनात् सफलं जन्म दर्शनाच्चापि श्रीहरेः।
युगे युगे पृथिव्याञ्च प्रादुर्भूय सनातनः॥१३४॥

तीर्थीकुर्वन्ति तीर्थानि नारायणो जगद्गुरुः।
प्रादुर्भवन्ति नूत्नानि क्षेत्राणि चैव नारद!॥१३५॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामर्चनारात्रे
स्वयंव्यक्तक्षेत्रनिरूपणनामा
चतुर्थोऽध्यायः॥

---

१. पापहे इति क।
२. वरदे इति क।

## अर्चनारात्रे पञ्चमोऽध्यायः

नारद उवाच

स्वयंव्यक्तं विना यानि क्षेत्राणि श्रेयसांनिधे!।
पौरुषादीनि लोकेषु निर्मितानि स्युरव्यय!॥ १॥

लक्षणानि प्रकाराणि क्षेत्रबिम्बादिकस्य च।
कानि कियत्प्रमाणानि तत्सर्वं वद विस्तरात्॥ २॥

येन ह्यैकान्तिकीं पूजामैकायनैरनुष्ठिताम्।
विज्ञायाराध्य विश्वेशं विष्णुं फलमवाप्यते॥ ३॥

ये च देवालयादिकं(क?)निर्माणे इच्छुका जनाः।
तेऽपि क्षेत्रं विनिर्माय तारयन्ति कुलं निजम्॥ ४॥

सङ्कर्षणः

बिम्बस्य लक्षणं मानं मन्दिरस्य च नारद!।
वक्ष्यामि पाञ्चरात्रीयं तान्त्रिकं नाऽतिविस्तरात्॥ ५॥

बिम्बं बहुविधं तन्त्रे वर्णितं द्विजपुङ्गव!।
चित्ररूपञ्च मृद्रूपं काष्ठशैलोद्भवं तथा॥ ६॥

आयसञ्चेति विज्ञेयं भेदभिन्नं तु वर्णशः।
तत्र चित्रमयं विद्धि चतुर्धा चाम्बरोत्थितम्[1]॥ ७॥

कार्पासकञ्च कौशेयं क्षौमशाणमयं तथा।
द्विजक्षत्रियवैश्यानां शूद्राणां तदनुक्रमात्॥ ८॥

---

१. वस्त्रपट्टे चित्रितम्।

मृत्तिकानिर्मितञ्चैवं सितरक्तहरिद्रकम्।
श्यामञ्चेति महाभाग! दारूत्थमवधारय॥ ९॥

अगरुं कर्णिकारञ्च ब्रह्मवृक्षोद्भवं तथा।
बिल्वामलकचूताश्च काश्मर्यं रक्तचन्दनम्॥१०॥

द्विजस्य क्षत्रियस्याथ श्रीपर्णी सुरदारुजम्।
नारिकेलं कपित्थञ्च हिमतालतमालकम्॥११॥

नागमातृकपीनाख्यं वैश्यस्य कथयामि ते।
बदरं खदिरं फल्गु मधूकं सालवृक्षजम्॥१२॥

किंशुकं खर्जूरञ्चैव बकुलं चाप्युदुम्बरम्।
शूद्रस्याथ कथिष्यामि मातुलुङ्गद्रुमं महत्॥१३॥

तिन्दुकं बीजसारञ्च कोहितकञ्च केतकम्।
कालाख्यं पुष्पफुल्लञ्च बिम्बार्थमवधारय॥१४॥

अतोऽन्ययज्ञकाष्ठानि सिद्धानि प्रतिमेप्सुना।
ग्राह्याणि सद्विवेकेन देशिकाज्ञामनुचरेत्॥१५॥

सौवर्णं राजतं ताम्रमारकूटमयं[1] तथा।
लोहजं वर्णशो विप्र! विज्ञेयं तन्त्रसारधृक्॥१६॥

शिला तु मृत्तिकातुल्या सिताद्या वर्णशस्तथा।
सकामानामियं भित्तिर्निष्कामानां[2] तु नारद!॥१७॥

साधारणाश्चतुर्णां तत् यत्प्राप्यमुत्तमं भवेत्।
लाभालाभं तु विज्ञाय बिम्बार्थं प्रयजेच्छुचिः॥१८॥

स्वीयतन्त्रानुसारेण मूर्तिमन्त्रेण ब्राह्मण!।
जपहोमार्चनाद्यं तु सम्पाद्यं बिम्बकर्मणि॥१९॥

---

१. ताम्रमैरकूटमयं इति क।
२. सकामभक्तानामर्थे एव वर्णमर्यादानुसारं द्रव्यसङ्ग्रहः, निष्कामभक्तानां लाभाय नियमोऽयं नास्ति।

सेन्द्रां धरां यजेत् शैलं मृदापादनकर्मणि।
चित्रदारुमयीं मूर्तिं कामयेत वनस्पतिम् ॥२०॥

वरुणं पूजयेच्चैवं वाञ्छितं प्राप्यते ध्रुवम्।
धातूनां चैव रत्नानां बिम्बसृष्टिसमीहया ॥२१॥

सूर्यचन्द्रानलं प्रेम्णा यजेत समुदारधीः।
ग्रहणं शोधनं वक्ष्ये बिम्बोपादानवस्तुनः ॥२२॥

यत्नेन चित्रबिम्बार्थी भक्तियुक्तः समाचरेत्।
गृहार्चारूपबिम्बत्वाद् गृहदेवान् पुरा यजेत् ॥२३॥

गुह्यकांश्चैव क्षेमार्थी पाद्यार्घ्यकुसुमादिना।
भस्म मलं[1] तुषाङ्गाराः केशकीटनखास्तृणम् ॥२४॥

कण्टकमूलचर्मास्थि दूषणं प्राक् परित्यजेत्।
आनर्थक्यकरं सर्वं सावधानेन चेतसा ॥२५॥

खनित्वा मृत्तिकां स्वल्पां बिम्बाधारात्तु नारद!।
उक्तदोषविमुक्तां तां पञ्चगव्येन साम्भसा ॥२६॥

अस्त्रमन्त्रेण संसेच्य मर्दितां मृदमानयेत्।
तद्द्वित्र्यंशं प्रपूर्याथ ततो बिम्बं तु चारभेत् ॥२७॥

पटञ्चैव गृहार्चार्थमानीतं क्षालयेत् पुरा।
सलिलेनाऽस्त्रजप्तेन सप्तधा तत आरभेत् ॥२८॥

मृत्तिकां प्रतिमाकामी सर्वसम्पत्प्रसाधनीम्।
गृह्णीयाद् हृन्मन्त्रेण मूर्तिमन्त्रान्वितेन च ॥२९॥

सास्त्रेण मृत्तिकां सिञ्चेत् समानीतां तु सङ्गमात्।
देवायतनक्षेत्राच्च पर्वताग्राच्च नारद! ॥३०॥

---

१. भस्मं जलं इति क।

दोषानपास्य पूर्वोक्तान् गर्तं कृत्वा यथाविधि[१]।
स्थापयेन्मूलमन्त्रेण सूपलिप्ते धरातले ॥३१॥

लोहपाषाणचूर्णं तु शर्कराचूर्णमिश्रितम्।
और्णं शाणञ्च[२] कार्पासं मृत्तिकायां विमिश्रयेत् ॥३२॥

स्वल्पगोमययुक्तेन भूरिक्षीरघृतादिना।
अस्त्रेण पञ्चगव्येन कषायेन च सेचयेत् ॥३३॥

मिश्रितं मासमेकं तु कटाहे आयसे क्षिपेत्।
अनलानिलसूर्येन्दुदर्शनाभावके गृहे ॥३४॥

संस्थाप्य मूलमन्त्रेण ततो बिम्बं समारभेत्।
चित्रबिम्बस्य वस्त्रस्य शुद्धिवत् सप्तधाऽऽयसम् ॥३५॥

अस्त्रमन्त्रेण प्रक्षाल्य बिम्बार्थी प्रयतेत हि।
बिम्बसाधनकार्येऽस्मिन् प्रवृत्तेन तु सत्तम! ॥३६॥

पुरोक्तेन तु मन्त्रेण पूजनं हवनं तथा।
बलिदानञ्च भूतानां सम्यक् प्रदक्षिणा मुने! ॥३७॥

समानं तद्धि विज्ञेयं सर्वेषां ग्रहणात् पुरा।
शैलदारुमये बिम्बे विशेषमुच्यतेऽधुना ॥३८॥

दारु शैलं वनाद् ग्राह्यं पर्वताग्रादथो द्विज!।
शुभवृक्षसमाकीर्णाद् बहूदकतृणान्वितात् ॥३९॥

कुशदर्भयुताद्वाऽथ देशाद् ग्राह्यं तपोनिधे!।
नदीतीराद् ह्रदाच्चैवं ग्राममध्याच्चतुष्पथात् ॥४०॥

भूतिभूमेः श्मशानाच्च चण्डालशवदूषितात्।
पक्षिसर्पसमाकीर्णान्म्लेच्छदेशाच्च भीषणात् ॥४१॥

---

१. यथाविधिः इति क।
२. शार्णञ्च इति क।

वर्जनीया: शिला ब्रह्मन्! दारु च कण्टकद्रुमात्।
स्मशानस्थाश्रयाद् वृक्षाद् देवालयसमीपगात्॥४२॥

स्वयं शुष्काच्च दग्धाच्च कुञ्जराशनिदूषितात्।
वृक्षात् काष्ठं परित्याज्यं बिम्बार्थिना तपोनिधे॥४३॥

पुण्ये लग्नेऽनुकूले च वनयात्रां समारभेत्।
निमित्ते तु शुभे प्राप्ते यात्रा स्यात् फलदायिनी॥४४॥

अशुभेन निमित्तेन यात्रा विघ्नवती भवेत्।
शिलासङ्ग्रहणं पूर्वं वक्ष्यामि द्विजपुङ्गव!॥४५॥

आचार्य:[1] शिल्पिभि: सार्धं नवाम्बरधर: शुचि:।
सशस्त्रं मुद्गरं पूजां(जा?) सम्भारान् गृह्णीयात् सह॥४६॥

यायात् सानुचरो विप्र: शिल्पिभि: सह कानने।
तपस्यन्ति द्विजा यत्र यत्र सिद्धा महर्षय:॥४७॥

यत्र मोदन्ति वै व्याघ्रकुञ्जरा: सह मानवै:।
न सन्ति क्षुद्रकर्माणस्तस्माद् ग्राह्या शिला मुने!॥४८॥

हृद्या गुर्वी शुभा स्निग्धा जलाशयतलस्थिता।
तरुवरेण संच्छन्ना वनराजिष्ववस्थिता॥४९॥

खवक्त्रा मोक्षदा ज्ञेया भोगदा सुतलानना।
प्राङ्मुखी भूतिदाऽऽयुर्दा[2] दिङ्मुखी चोभयङ्करी॥५०॥

ज्ञात्वा शिर उर:पृष्ठं तन्त्रागमविज्ञातृभि:।
वीर्यमन्त्रेण सम्प्रोक्ष्य प्रोद्धरेच्छिल्पिना शिलाम्॥५१॥

ऐन्द्रयां दिशि मुखं सौम्यां वाऽऽनुकूल्येन स्थापयेत्।
इष्ट्वा मूलेन मन्त्रेशं सम्पूज्य चन्दनादिना॥५२॥

---

१. आचार्यं इति क।
२. भूतिदाऽऽर्युदा इति क।

शिलान्तर्देवतां[1] ध्यात्वा परिक्रम्याऽथ नारद!।
दत्त्वा पूर्णाहुतिमष्टौ वासुदेवैकमानसः॥५३॥

सन्ध्यासमेऽर्चनं कुर्याद् भूतांश्च तर्पयेच्छुचिः।
भुङ्क्त्वा नैवेद्यशेषञ्च मन्त्रविन्यस्तविग्रहः॥५४॥

पश्चिमे दर्भशय्यायां प्राक्छिराः प्रस्वपेद् गुरुः।
स्वप्नान् वीक्ष्य शुभान् प्रातः कुर्यात् [2]शिलापरिग्रहम्॥५५॥[3]

अशुभे शान्तिहोमं तु कृत्वा विघ्नप्रशान्तये।
कस्मिन् कार्येऽथ कीदृश्यः शिला योग्या विचिन्तयेत्॥५६॥

त्रिविधाश्च शिलाः प्रोक्तास्ताश्च स्त्रीपुंनपुंसकाः।
उत्पाटनेऽनलं यत्र सनादं दृश्यते यदा॥५७॥

गम्भीरनिनदा गुर्वी स्निग्धा पुमान् प्रकीर्तिता।
मृदुस्वना लघुस्निग्धा निस्तेजा च मनोरमा॥५८॥

वरवर्णा शिला प्रोक्ता स्त्रीति तन्त्रविचक्षणैः।
नपुंसकं द्वयाकारहीना खर्वा च कर्कशा॥५९॥

पुल्लिङ्गे प्रतिमा कार्या स्त्रीलिङ्गे पीठिका तथा।
नपुंसकात्तु कर्तव्यं रत्नपीठं शुभप्रदम्॥६०॥

सति लाभेऽन्यथा सर्वं पुंशिलातः समारभेत्।
व्यत्ययो नैव कर्तव्यो व्यत्यासो वा कदाचन॥६१॥

शिलाग्रहणमुक्त्वा[4] त्वां दारुग्रहणमुच्यते।
वृक्षेषु पूर्वमुक्तेषु निर्व्रणं सरलं बृहत्॥६२॥

---

१. शिलान्तर्देवता इति क।
२. शिलापरिग्रहः इति ख।
३. श्लोकोऽयं ख-मातृकायामेवोपलभ्यते।
४. शिलाग्रहणमुक्त्वां इति क।

नीरोगम् अशनिपाताग्निदग्धाद्यैरदूषितम्।
हरितं मृदु सुस्निग्धं भूभागे चोन्नते स्थितम्॥६३॥

शिलोक्तेन विधानेनाधिवासयेदुदारधीः।
परेऽह्नि देशिको वृक्षमर्चयेन्निश्चितं पुरा॥६४॥

तदधिष्ठितदेवञ्च प्रार्थयेन्नतिपूर्वकम्।
पूर्वजन्मीयपुण्येन वृत्तं(तः?) त्वं प्रतिमार्थिना॥६५॥

देवायेहाश्रितायात्र नमः सर्वेश्वराय[१] ते।
अधिष्ठानान्तरं गच्छ बिम्बार्थमादिश प्रभो!॥६६॥

अधिष्ठानस्य वृक्षस्य दिव्यरूपस्य[२] लब्धये।
वासुदेवप्रसादाय बिम्बार्थमादिश प्रभो!॥६७॥

कुठारं तक्षकञ्चैव पूजयेत् तदनन्तरम्।
क्षेमार्थं तक्षकादीनां रक्षासूत्रं समर्पयेत्॥६८॥

ततो वृक्षं कुठारेण प्राङ्मुखः प्रयतः शुचिः।
छिन्द्याद्[३] गुरोर्निर्देशेन वीक्षेत पतनं तरोः॥६९॥

पूर्वोत्तरे तथैशाने पतनेऽभिमुखं तथा।
शुभमन्यत्र पाते तु यजेच्छान्त्यै च कर्मणः॥७०॥

कुम्भोदकेन संसिञ्चेद् वीर्यमन्त्रेण पूर्ववत्।
दक्षिणां गुरवे दद्याद् रथकाराय शिल्पिने॥७१॥

ततो दारुं शिलां वाऽपि कर्मशालां नयेच्छुचिः।
एवं बिम्बार्थद्रव्यस्य संग्रहं वैभवं यथा॥७२॥

कृत्वा बिम्बस्य निर्माणं कारयेच्छिल्पिभिर्मुदा।
बिम्बार्थं सौम्यमानं यत् तन्त्रेषूक्तमथ शृणु॥७३॥

---

१. सवेश्वराय इति क।
२. दिव्यं रूपस्य इति क।
३. छिन्द्यांद् इति क।

गुरोर्वा यजमानस्योन्नतेरष्टाधिकं शतम्।
प्रत्येकमङ्गुलं मानं विज्ञेयं द्विजपुङ्गव! ॥७४॥

द्व्यङ्गुलं गोलकं नाम्ना भावो नेत्रं कलाऽथवा।
षट्कलं तु परिज्ञेयं तालं बिम्बादिकर्मणि ॥७५॥

अष्टमोऽङ्गुलभागो यो यवनाम्ना प्रकीर्तितः।
मुखनेत्रादिसु(सू?)क्ष्मेषु गात्रेषु युज्यते स च ॥७६॥

भागान्तरेषु देवस्याङ्गुलमानं प्रयुज्यते[1]।
दारुबिम्बमपि ब्रह्मन्! रत्नमौक्तिकबिम्बकम् ॥७७॥

शिलालोहमयं बिम्बमालयेषु प्रतिष्ठितम्।
नवतालप्रमाणं वै तद्बिम्बोत्सेध उच्यते ॥७८॥

चित्रबिम्बं गृहे पूज्यं तालमेकं प्रशस्यते।
नवतालमये बिम्बे मानमङ्गस्य कथ्यते ॥७९॥

नाभिः मेढ्रं मुखाङ्गञ्च तालमानमुरुस्तथा।
जङ्घे द्वितालमानेऽथ जानु गुल्फं गलं तथा ॥८०॥

उत्सेधं त्र्यङ्गुलं तेषां तन्त्रे सौम्यमुदाहृतम्।
षड्यवमुष्णीषं वेद्यं ततो रम्यं यथा भवेत् ॥८१॥

उन्मानं मुकुटस्याऽत्र केशान्तं द्व्यङ्गुलं तथा।
निर्जटानां जटानाञ्च बिम्बानां भेद उच्यते ॥८२॥

केशान्तं द्व्यङ्गुलं प्रोक्तं जटानां शास्त्रसम्मतम्।
निर्जटानां तु तन्न्यूनमेकांशेन महामते! ॥८३॥

मुखं बिम्बे यथा सौम्यं तदर्थं यत्नमाचरेत्।
तदेव दर्शने मुख्यं तोषकृद्भावितात्मनाम् ॥८४॥

---

१. अधोरेखायुक्तं ख-मातृकायामेवोपलभ्यते। इत उभयत्र विषयभेदात् कश्चन भागस्त्रुटित इत्यनुमीयते। ततः ख-मातृकायाम् अस्पष्टः पठितुमशक्यो भाग इति।

नासिकाऽऽस्यं ललाटञ्च वदनांशे त्रयं मुने!।
अङ्गुलानां त्रयं यद्वा चतुष्टयं महामुने!॥८५॥

मुखाङ्गेषु तु विज्ञेयं देशभेदेन नारद!।
कलार्धेन तथा[१].... यवं............ मतम्।

..................................................

..................................................

..................................................

..................................................[२]

१. 'तथा' इति ख-मातृकायामेवोपलभ्यते।

२. पञ्चमाध्यायस्य अन्तिमभागो उभयमातृकायोर्नोपलभ्यते। विषयदर्शनेन बिम्बमानविषयो दृश्यते।

## अर्चनारात्रे षष्ठोऽध्यायः

[1]....................          .....भिरामलसारकम्।
तदूर्ध्वे कलशं कार्यं तृतीयांशं विभज्य च॥१०२॥

शिखरभूमिभागस्य          शोभावृद्धिर्भवेद्यथा।
उष्णीषमथवा ब्रह्मन्! ऊर्ध्वभूमेरनन्तरम्॥१०३॥

भूमिकाग्राच्च कर्तव्यं संविभज्य त्रिधा मुने!।
आमलसारविस्तारं शृणु मे द्विजपुङ्गव!॥१०४॥

शिखरमञ्जरी पूर्णा यावन्मानेन जायते।
सप्तधा तं विभज्याथैकमादाय तथाखिलैः॥१०५॥

नवधा तद्धि मातव्यं शुद्धमामलसारकम्।
चक्रं लोहमयं कार्यमग्निज्वालासमन्वितम्॥१०६॥

रक्षार्थं वालमीनाद्याद्[2] विष्णोरंशसमुद्भवम्।
उष्णीषः कलशस्याथोर्ध्वभूमेस्तु सुशोभितः[3]॥१०७॥

मेखला नारद![4] सूक्ष्मा पत्रपुष्पसमन्विता।
शिष्टं कृत्वा त्रिधा तस्मात् परमण्डं विनिर्गतम्॥१०८॥

कण्ठं तु द्वितीयं तत्र कार्यं धात्रीफलाण्डवत्।
भास्करमष्टचन्द्राश्च तत्र लेख्या महामुने!॥१०९॥

---

१. षष्ठाध्यायस्य आदिभागो नोपलभ्यते। विषयदर्शनेन पुष्पिकावलोकनेन च मन्दिरमानविषयो दृश्यते। १०२ तः १०७ पर्यन्ताः श्लोकाः ख-मातृकायां न सन्ति।
२. वालमीनांद्याद् इति क-ख।
३. सुशोभिता इति क-ख।
४. शोभिता इति ख।

ध्वजाधारस्तु कर्तव्य ईशाने नैर्ऋतेऽथवा।
चरमे भूमिकाभागे शोभामानं सगोलकम् ॥११०॥

हिरण्मयो ध्वजादण्डो भूमिकापञ्चकान्वितः।
तत्र स्थाप्यो विधिं कृत्वाचार्यस्याज्ञानुसारतः ॥१११॥

गर्भगेहाग्रिमे भागे मण्डपः स्तम्भसंयुतः[1]।
शोभितो विहगेन्द्रेण बलिमण्डपगेन च ॥११२॥

द्वाराणि चास्य कार्याणि मानयुतानि नारद!।
प्रासादे एकहस्ते तु द्वारं कुर्याद् दशाङ्गुलम् ॥११३॥

यावद् हस्ताधिकं तावद् द्वारमानं विशिष्यते।
वेदिकावधि उच्छ्रायं पत्रमञ्जरीसंयुतम् ॥११४॥

चतुर्दिक्षु चतुर्द्वारि विधेया द्वारदेवताः।
पूर्वादिदिक् समारभ्य द्वारपालमथोच्यते ॥११५॥

तरुणादित्यसङ्काशो महोरस्कश्चतुर्भुजः[2]।
उन्नतश्चोन्नतांशश्च पूर्णाङ्गो नातिमांसलः ॥११६॥

.............................................[3]।
घनोदरो निम्ननाभो रोमराजिविराजितः ॥११७॥

...........................[4] पिङ्गलश्मश्रुलोचनः।
शुक्लाम्बरधरः स्रग्वी भुजयुग्मेऽस्य दक्षिणे ॥११८॥

प्रोद्यतं संस्मरेच्चक्रं प्रज्वलन्तीं गदां परे।
श्रोणीतटनिषण्णाञ्च विश्रान्तां वसुधातले ॥११९॥

---

१. मण्डपं स्तम्भसंयुतम् इति क।
२. महोरस्कश्चतुर्भूजः इति क।
३. ग्रन्थपातः।
४. इतः परं पुष्पिकां विहायाध्यायसमाप्त्यन्तो भागः ख-मातृकायां नास्ति।

पूर्वे वामकरे शङ्खमन्यस्मिन् चाक्षसूत्रकम्।
एवं गणाधिपश्चण्डो विक्रमेणापराजितः॥१२०॥

तत्रैवापर भागे तु प्रचण्डं त्वीदृशं न्यसेत्।
किन्तु सव्यापसव्य............[1] स्याद्विपर्ययः॥१२१॥

भुजद्वयेन चण्डस्य वामे यत् परिकीर्तितम्।
दक्षिणे तत्प्रचण्डस्य ध्येयं वा परिकल्प्य च॥१२२॥

पद्मगर्भप्रतीकाशौ तादृशौ भीमविक्रमौ।
रक्ताम्बरधरौ चैव रक्तस्त्रगनुलेपनौ॥१२३॥

गणौ धातृविधातारौ देवौ दक्षिणतः स्थितौ।
अतसीकुसुमश्यामौ पीतमाल्याम्बरान्वितौ॥१२४॥

..........[2] णीषधरौ रौद्रौ प्राग्वद्भुजविभूषितौ।
गणौ चण्डाकृतिधरौ दुद(र्द?)र्शौ दुरतिक्रमौ॥१२५॥

जयञ्च विजयं नाम्ना प्रत्यग्भागे तथा न्यसेत्।
क्षीरकुन्दावदातौ[3] च नीलकौषेयवाससौ॥१२६॥

पूर्वोक्तगणसादृश्यौ नाम्ना भद्रसुभद्रकौ।
स्थापयेद्भूषितौ पुष्पैः द्वारस्य चोत्तरे दिशम्॥१२७॥

प्रासादं विरचय्यैवं सर्वलक्षणसंयुतम्।
प्रतिष्ठां कारयेत्तस्य देशिकेन्द्राज्ञया मुने!॥१२८॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामर्चनारात्रे
मन्दिरनिर्माणवर्णननामा
षष्ठोध्यायः।

---

१. ग्रन्थपातः।

२. ग्रन्थपातः।

३. क्षीरकुन्दाववदातौ इति क-ख।

# अर्चनारात्रे सप्तमोऽध्यायः

नारदः

श्रोतुमिच्छाम्यहं देव[1] विष्णोर्बिम्बाधिवासनम्।
आवाहनं प्रतिष्ठाख्यं कर्म त्वं वद विस्तरात्॥ १॥

सङ्कर्षण उवाच

त्रिविधो मूर्तिभेदेन प्रतिष्ठाविधिरुच्यते।
परो व्यूहस्तथा ब्रह्मन्! [2]विभवप्रतिमानकः॥ २॥

नानाभोगफलेच्छा चेद् विभवाख्यां तु स्थापयेत्।
स्वर्गापवर्गदां मूर्तिं व्यूहाख्यामथ नारद!॥ ३॥

सकुलं यजमानस्य ह्यपुनर्भवकारणा।
पराख्या प्रतिमा विष्णोः प्रतिष्ठेया महामते!॥ ४॥

साधारण्येन लोकेऽस्मिन् प्रतिष्ठा विभवात्मनाम्।
देशिकैः क्रियते तत्र स्वाधिकारस्य कारणात्॥ ५॥

मिश्रयागात्मके[3] काले दुर्लभाः शुद्धयाजिनः।
हृदिस्थो भगवान् येषामेकान्तमार्गबोधकः॥ ६॥

तस्माद् व्यूहात्मकं चैवं परात्मप्रतिष्ठानकम्।
दुर्लभं विभवं विप्र! स्थापनं क्रियते खलु॥ ७॥

तस्मात्त्वां संप्रवक्ष्यामि समासादेव साम्प्रतम्।
पूर्वोक्तेन विधानेन प्रासादं शिल्पशोभितम्॥ ८॥

---

१. देवः इति क।
२. वैभवः प्रतिमानकः इति ख।
३. मिश्रयागात्मिके इति क।

विरचय्य प्रतिष्ठाप्य द्वारादिकं महामते!।
शुभेऽनुकूले नक्षत्रे सुशुभे च महाग्रहे॥ ९॥

शुद्धलग्ने तिथौ ब्रह्मन्! देशिकानुज्ञया मुदा।
प्रासादस्याग्रतः कुर्यान्मण्डपं शोभितं शुभम्॥१०॥

चतुर्द्वारसमायुक्तं चतुस्तोरणभूषितम्।
त्रयोदशकरं रम्यं यावत्त्रिंशत्करावधिः॥११॥

तन्मध्ये वेदिका कार्या बिम्बमानव्यपेक्षया।
अष्टभिरष्टभिर्हस्तैः[1] षड्हस्तैरधिका तथा॥१२॥

एकहस्तोच्छ्रिता रम्या दर्भमालान्तरीकृता।
शोभना दिक्षु चत्वारि कुर्यात्कुण्डानि देशिकः॥१३॥

चतुष्कोणसमायुक्तं पूर्वकुण्डं सुशोभनम्।
दक्षिणेनार्धचन्द्रं तु पश्चिमे वृत्तमुच्यते॥१४॥

पद्माकारं तु कर्तव्यं कुण्डं चोत्तरतस्तथा।
शङ्खाङ्कं सर्वकोणेषु द्विहस्तमानमुच्यते॥१५॥

वेदिकायां तथा कुण्डं निर्मातव्यं त्रिमेखलम्।
अन्यानि मखकुण्डानि मेखलैकानि नारद!॥१६॥

दक्षिणे शयनं कार्यं चक्राम्बुरू(रु?)हभूषितम्।
स्नानीया अग्रगेहाद्वै दिक्त्रयेऽभिमते शुभे॥१७॥

अर्धमानसमं मुख्यात् सुपीठशयनान्वितम्।
द्र(द्व?)गृदानभवनं कार्यं माङ्गल्यकलशैः सह॥१८॥

मण्डपस्य चतुर्द्वारि तोरणानि विदांवर!।
कर्तव्यानि तु भिन्नानि पताकाशोभितानि च॥१९॥

---

१. अष्टभिरष्टभिर्हस्तै इति क।

एवं त्वभिनवं कृत्वा यागशालाञ्च मण्डपम्।
प्रतिष्ठादिवसात् पूर्वं पञ्चमे सप्तमेऽथवा ॥२० ॥

पूर्वरात्रावथो कुर्यादङ्कुराणां समर्पणम्।
ततः प्राणप्रतिष्ठाया उत्सवे प्रथमे दिने ॥२१ ॥

आचार्य ऋत्विजैः साकं सदागमपरायणैः।
विप्रैरेकायनैश्चैवं चतुर्वेदमयैस्तथा ॥२२ ॥

स्नातः शुक्लाम्बरः स्रग्वी परिचारकसंयुतः।
प्रतिष्ठार्थान् सुसम्भारान् एकत्रीकृत्य नारद! ॥२३ ॥

माङ्गल्यकुम्भमादाय ध्यायमानोऽच्युतं हृदि।
शङ्ख-वादित्र-निर्घोषैर्गीतिभिर्माङ्गलीयकै(कैः?) ॥२४ ॥

यागशालां समागच्छेद्वासुदेवैकमानसः।
पूजनं द्वारपालानां विधाय प्रथमं ततः ॥२५ ॥

प्राङ्मुखो मध्यपीठस्य समीपे पश्चिमे पदे।
स्वासने यजमानेनोपविशेत् सहोदारधीः ॥२६ ॥

पुण्याहं वाचयित्वाऽथ गायत्री त्रितयादिकम्।
उद्घोष्य शाकुनं सूक्तं शिवसङ्कल्पमेव च ॥२७ ॥

श्रीसूक्तेन समोपेतं भद्रश्रीसाममुत्तमम्।
कर्मारम्भेण सह वै स्वस्ति भो इत्ययं पठेत् ॥२८ ॥

सम्भारविरहाद् योग्यमूर्तिपानाम् अभावतः।
ऋत्विजानामलाभे[1] च सर्वं देशिक आचरेत्[2] ॥२९ ॥

सति लाभे द्वितीयानां योग्यं[3] योग्ये तु योजयेत्।
स्वात्मतुल्यो महाप्राज्ञो मन्त्राणामुपदेशकः ॥३० ॥

---

१. ऋत्जिानामलाभे इति क।
२. देशिकमाचरेत् इति क।
३. योग्य इति क।

कर्मदक्षस्तु योक्तव्यः सर्वेष्ववसरेषु च।
स्थापितान् कलशान्[1] सर्वान् कुण्डेषु समलङ्कृतान् ॥३१ ॥

आवाह्य वासुदेवाद्यं पूजनं तु समाचरेत्।
करशुद्ध्यादिपूर्वं तु चक्रन्यासादिकं तथा ॥३२ ॥

सत्यादीन्[2] पूजयेद् भक्त्या मध्यवेद्यां महामुने!।
कुण्डान् सम्प्रोक्षयेद्[3] विप्र पञ्चगव्यादिभिस्ततः ॥३३ ॥

मथित्वाऽग्निं समुत्पाद्य स्थापयेद् द्विजपुङ्गव!।
प्रभवाप्यययोगेन यजेत्प्रागादियोगतः ॥३४ ॥

उत देवा अवहिता ऋङ्मयान् पाठयेत्ततः।
पाठयेद् द्वारपालीयं साम सामविदस्तथा ॥३५ ॥

ततस्तु कारुशालायां यायान्मूर्तिधरैः सह।
यत्र बिम्बं स्थितं ब्रह्मन्! पीठब्रह्मशिलान्वितम् ॥३६ ॥

परीक्ष्य लक्षणान् सर्वान् बहुधा देशिकोत्तमः।
सम्पूज्यार्घ्यजलैः पुष्पैः कुर्यात् सन्ताडनादिकम् ॥३७ ॥

सिद्धार्थैः[4] स्नापयेत् पश्चाच्चक्रास्त्रमन्त्रितैः जलैः।
ततस्तु गन्धतोयेन चन्दनेनाथवा प्रभुम् ॥३८ ॥

आयसी प्रतिमा चेत् सा तिन्तिणीरसवारिणा।
पञ्चगव्यैः मृदा चैवं चक्राङ्कौषधिवारिणा ॥३९ ॥

संस्नाप्याऽभ्यर्च्य चोद्वर्त्य शुचौ देशे तु स्थापयेत्।
सिद्ध्यर्थं कर्मणां कुर्यात् करे कौतुकबन्धनम् ॥४० ॥

---

१. कळशान् इति क।
२. सत्यादिं इति क।
३. सम्प्रोक्ष्येद् इति क।
४. सिद्धार्थैः इति क।

बिम्बानां कौतुको बन्धः कर्तव्यो मूलविद्यया।
स्वहस्ते यजमानस्य हस्ते[१] चैवं तु बन्ध्नीयात् ॥४१॥

द्वादशाक्षरमन्त्रेण प्रणमेद् दण्डवत् क्षितौ।
पुण्याहं कारयित्वा तु मूर्तिपैः सह मन्त्रवित् ॥४२॥

सद्वस्त्रवेष्टितं बिम्बं शिबिकायाञ्च स्थापयेत्।
कर्मारम्भं पठन्तं वै मूर्तिपं दक्षिणे न्यसेत् ॥४३॥

ऋक्सामपूर्वान् वामे तु ब्राह्मणानां चतुः चतुः।
पुरतोऽस्त्रं स्मरन् यायात् स्वयं विघ्नांस्तु सूदयन् ॥४४॥

भेरीपटहवादित्रशङ्खशब्दादिकैः शुभैः।
वन्दिवृन्दसमोपेतैर्गीयमानैश्च मङ्गलैः ॥४५॥

ऋक्सामयजुः पूर्वास्तु प्रशस्ताः पाठयेच्छ्रुतीः।
स्वस्थाने यज्ञशालायां स्नानीये तं प्रवेशयेत् ॥४६॥

संस्थाप्य स्नानशालायां पीठब्रह्मशिलान्वितम्।
बिम्बं ततोऽस्त्रमन्त्रेण दद्यादाज्यतिलाहुतीः[२] ॥४७॥

बृहद्बिम्बे तु कर्तव्यं विधिं त्वां कथयामि भोः।
नयनोन्मीलनं यावत् कर्मागारे समापयेत् ॥४८॥

वक्ष्यमाणप्रकारेण[३] स्नपनं द्विजपुङ्गव!।
बहुभिर्वारिभिर्वाऽथ रथमारोप्य बिम्बकम् ॥४९॥

प्रासादमानयेद् यत्नाद्रत्नन्यासादिकं मुने!।
पीठे ब्रह्मशिलायाञ्च बिम्बानुसंहतिस्तथा ॥५०॥

अधिवासादिकं कर्म प्रासाद एव कारयेत्।
एवं हि चित्रपूर्वाणामन्येषामपि नारद! ॥५१॥

१. दक्षे इति ख।
२. ददाद्याज्यतिलाहुतीः इति क।
३. बृहद्बिम्बस्य स्नपनस्य वक्ष्यमाणप्रकारोऽग्रे द्वापञ्चाशत्तमश्लोकतो विज्ञेयः।

सरत्नब्रह्मपाषाणवर्जितानां समाचरेत्।
कर्मबिम्बेऽथ स्नानाद्यं दर्पणेऽथ समीपगे ॥५२॥

अन्येषां बिम्बरूपाणां प्रस्वापाद्यं[1] तु विष्टरे।
व्यवस्था सर्वबिम्बानां स्नानादीनां निरूपिता ॥५३॥

निर्व्रणान् कलशान् वक्ष्ये स्नानार्हान् हेमसम्भवान्।
राजतान् मृत्तिकोत्पन्नान् यथावित्तानुसारतः ॥५४॥

सुरूपवदनोपेतान् संस्थाप्यान् सुसमान् शुभान्।
स्नानीये ह्यस्त्रमन्त्रेण कुण्डे दत्त्वाऽऽहुतीस्ततः ॥५५॥

त्रिविधं स्नपनं ब्रह्मन् स्थूलं सूक्ष्मं परं तथा।
कलशान् स्थापयेत् तस्मात्तदनुसारमानतः ॥५६॥

अधिवासदिने ह्यस्मिन् स्नानं परं विधीयते।
प्रतिष्ठादिवसे स्नानं सूक्ष्मं तन्त्रे उदाहृतम् ॥५७॥

चतुर्थे दिवसे स्नानं स्थूलं तु द्विजपुङ्गव!।
व्यवस्था कथ्यते ह्यत्र परस्य कलशात्मनः ॥५८॥

प्राक्प्रत्यगायतं सूत्रसप्तकं विनिवेश्य च।
दक्षिणोत्तरसूत्राणामपि सप्तकमेव हि ॥५९॥

एवं कृते तु कोष्ठानि षट्त्रिंशत् प्रभवन्ति हि।
तत्र पश्चिमदिक्पङ्क्तेरारभ्य क्रमयोगतः ॥६०॥

दक्षिणादुत्तराशान्तं कुम्भषट्कं नियोजयेत्।
विन्यस्य पूरयेत् तस्मिन् द्रव्याणि तन्निबोध मे ॥६१॥

पाद्यार्घ्याचमनीयार्थद्रव्यैः पूर्वोदितैस्त्रयम्।
नगादाद्यन्तमध्येभ्यो नदीमृत्तीर्थसम्भवा ॥६२॥

---

१. प्रस्पाद्यं इति क।

हृ(ह्र?)दाद् वल्मीकशिखराद् जदन्तक्षतीकृतात्।
हलोत्था गोवृषशृङ्गशालीक्षेत्रेषु सम्भवा ॥६३॥

तथैव पद्मखण्डोत्था त्वेकस्मिन् गोमयं परे।
वनदाहसमुद्भूतं तथैव च महानसात् ॥६४॥

त्रेताग्निभस्म त्वपरे विनिवेश्यं घटान्तरे।
अन्यस्मिन् पञ्चगव्यं तु कुशोदकसमन्वितम् ॥६५॥

सघृतं तैलकुम्भं तु चमसीवारिपूरितम्[१]।
पलाश-खदिराश्वत्थ-शमी-लोहितचन्दनम् ॥६६॥

कषायोदकमन्यस्मिन् परस्मिन् त्रिफलोदकम्।
वचा शतावरी कन्या व्याघ्री सिंही कृताञ्जलिः ॥६७॥

गोलोमी सिंहलोमी च कुष्ठं भूतजटा तथा।
महागरुडवेगाऽथ कलशेऽन्यत्र नारद! ॥६८॥

महानीला गलूची च सहदेवी शतावरी।
विष्णुक्रान्ता च कार्कोटा साह्वा वह्निशिखापरे ॥६९॥

यष्टी वाराहकर्णी चाप्यन्यस्मिन् गजपिप्ली[२]।
श्रीफलाद्यानि चान्यस्मिन् पावनानि फलानि च ॥७०॥

दधिक्षीराज्यकुम्भांश्च द्वौ मध्विक्षुरसान्वितौ।
मूलान्यम्भोरुहाणां च तान्यन्यस्मिन् घटे न्यसेत्[३] ॥७१॥

द्रुमाणां पावनानाञ्च सक्षीराणां विशेषतः।
पत्रपुष्पफलोपेतमेकस्मिन् मञ्जरीगणम् ॥७२॥

जात्यादिकमथैकस्मिन् कौसुभी(मी?)यं लताचयम्।
रोचनारजनीयुग्मं बला मोटा च पद्मकम् ॥७३॥

१. चमचीवारिपूरितम् इति क।
२. गजपीपली इति क।
३. न्येत् इति क।

इति पञ्चकमन्यस्मिन् दर्भदुर्वाङ्कुराणि च।
सा(स?)स्यं शाल्यङ्कुरचयं कलशेऽन्यत्र वै न्यसेत् ॥७४॥

सिद्धार्थकान् सिताद्यांस्तु प्रियङ्गुं गन्धसञ्ज्ञकम्।
अपरस्मिन् न्यसेत् कुम्भे सह वै नागकेसरैः ॥७५॥

ग्राम्याश्चौषधयः सप्त सप्तारण्यास्तथाऽपरे।
बाह्लीकं चन्दनञ्चैव रसं कर्पूरमेव च ॥७६॥

चतुष्कमेतदपरे त्वन्यस्मिन् धातवः शुभाः।
ताम्रजाम्बूनदाद्यास्तु परे रत्नचयं महत् ॥७७॥

न्यसेद् विद्रुमजालञ्च द्वये मुक्ताफलानि च।
तीर्थोदकं न्यसेद् ब्रह्मन् सुशीताम्भोघटं तथा ॥७८॥

सुगन्धिपुष्पकलशे[1] षट्त्रिंशत् कलशाः स्मृताः।
द्रव्यन्यासक्रमोद्धारे स्नानं परमिदं स्मृतम् ॥७९॥

शीताम्बुपूरितानां वै घटानां केवलं द्विज!।
षट्त्रिंशत्कलशैर्युक्तं सूक्ष्मं स्नानं प्रकाशितम् ॥८०॥

गन्धोदकेन पूर्णानां स्थूलं नारद! कीर्तितम्।
मूलमन्त्रेण कलशान् पूजयेद् द्वादशात्मना ॥८१॥

संवेष्ट्य च पुरा सूत्रैः छादयेत् तदनन्तरम्।
इमं वस्त्राणि मन्त्रेण सान्निध्यं प्राप्य देशिकः ॥८२॥

आवाह्य पूजयेद् देवान् विभवाख्यान् तु नारद!।
पद्मनाभं ध्रुवं मुख्ये वेदिकायां स्थिते परे ॥८३॥

कुम्भे[2] संस्थापयेद् ब्रह्मन् षट्त्रिंशदपरेषु च।
ततो दृग्दानप्राप्त्यर्थमधिवासार्थमेव च ॥८४॥

---

१. सुगन्धिपुष्पकलशे इति क।
२. कुम्भेषु इति ख।

शयनं कल्पयेद् द्वैधमनन्तं तदधो यजेत्।
सृष्टिसंहारयोगेन तदूर्ध्वे सर्वगं प्रभुम् ॥८५॥

पाठयेत् सर्पसामाद्य सञ्ज्ञां ज्ञानबलात्मिकाम्।
अष्टोत्तरशतं हुत्वा मूलेन मण्डलं यजेत् ॥८६॥

विविधैः पावनै रागैः सिताद्यैर्माङ्गलीयकैः[1]।
तन्न्यूनाधिकशान्त्यर्थं यजेत् कुण्डगणे ततः ॥८७॥

कुण्डसमीपसंस्थानां कुम्भानां पूजनं तथा।
चातुरात्म्यं यजेद् विप्र! प्रभवाप्ययযोगतः ॥८८॥

पूर्णां दत्वाऽथ मन्त्रेण पूर्णात् पूर्णमिति प्रभोः।
एकायनान् यजुर्मयानाश्रावितमनन्तरम् ॥८९॥

ततः संस्नापयेद् बिम्बं नेत्रोन्मि(न्मी?)लनपूर्वकम्।
वक्ष्यामि विस्तरात् सर्वं वासुदेवप्रसादतः ॥९०॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामर्चनारात्रे
मूर्तिप्रतिष्ठापूर्वविधिनिरूपणनामा
सप्तमोऽध्यायः।

---

१. सिताद्यैमाङ्गलीयकैः इति क।

## अर्चनारात्रेऽष्टमोऽध्यायः

प्रतिष्ठायोग्यताप्राप्तौ न्यूनाधिकप्रशान्तये।
अङ्गप्रत्यङ्गजानां तु दोषाणां नाशहेतवे॥ १॥

विधानमुदितं तन्त्रे विविधं तद्धि कथ्यते।
बिम्बं स्नानगृहे स्थाप्य पुराऽस्त्रेण हि सेचयेत्॥ २॥

पाद्यार्घ्याचमनैः कुम्भैः स्नापयेत् तदनन्तरम्।
नगादिमृत्तिकाऽऽपूर्ण– कलशेनाभिषेचयेत्॥ ३॥

ततो गोमयकुम्भेन वनाग्निभस्मना तथा।
पञ्चगव्येन तदनु कुशोदकयुतेन च॥ ४॥

सघृततैलकुम्भेन कषायकलशेन हि।
त्रिफलोदकयुक्तेन वारिणा सेचयेत् प्रभुम्॥ ५॥

सम्पूज्य गन्धपुष्पाद्यैः विधिवच्चमसाम्बुना।
क्षालयेत् प्रतिकुम्भे तु वैभवीयमनून् तदा॥ ६॥

पाठयेत् पौरुषं सूक्तं द्वादशकलशावधि।
दृग्दानाय ततः कर्मी शयनं कल्पयेच्छुभम्॥ ७॥

तदर्थं वेदिकोर्ध्वे तु कुर्यात् स्वस्तिकमण्डलम्।
प्रागग्रानुदगग्रांश्च दर्भान् आस्तीर्य तत्परम्॥ ८॥

पञ्चभारप्रमाणेन शालींस्तत्र विनिक्षिपेत्।
तदर्धं तण्डुलं लाजास्तिलानुपरि[1] निक्षिपेत्॥ ९॥

---

१. लाजा तिलानुपरि इति क।

खट्वासञ्ज्ञकं पर्यङ्कं तदूर्ध्वे स्थापयेत् ततः।
अनेकचित्रवस्त्राणि तदुपरि न्यसेत्तथा ॥१०॥

वस्त्रं कार्पासजं क्षौमं कौशेयं चोपरि मुने![1]।
शिरोपधानसंयुक्तं मृदुतल्पं तु कल्पयेत् ॥११॥

इन्द्रादीशानपर्यन्तं कलशान् सूत्रवेष्टितान्।
समान् वारियुतान् स्निग्धान् सापिधानान् सवस्त्रकान् ॥१२॥

पल्लवैः संयुतान् सर्वान् धान्यराशिषु स्थापयेत्।
पर्यङ्कोपरि बिम्बं तु शाययेद् याम्यमस्तकम् ॥१३॥

पूर्वशीर्षमथो ब्रह्मन् नेत्रोन्मीलनमारभेत्।
शलाकां तैजसीं स्वर्णां नेत्रमन्त्राभिमन्त्रिताम् ॥१४॥

राजती(तीं?)वा गृहीत्वाऽथ स्वर्णपात्रे तु देशिकः।
संस्मरन् परमं ब्रह्म ईषन्नेत्रे विलेखयेत् ॥१५॥

नेत्रमन्त्रितशस्त्रेण ततः स्नातोऽवलोकितः।
शिल्पी नेत्रे लिखेत् सम्यग् विधिदृष्टेन कर्मणा ॥१६॥

चित्रं देवेति मन्त्रेण लेखयेद् दक्षिणं पुरा[2]।
तच्चक्षुरिति पाठेन वामनेत्रञ्च लेखयेत् ॥१७॥

इत्येवं मूलबिम्बस्य नेत्रोन्मीलनकं शुभम्।
कारयेद् विधिवत् प्राज्ञो देशिकेन्द्रेण संयतः ॥१८॥

शलाकां दक्षिणाञ्चैव प्रायच्छेत् शिल्पिने ततः।
गोदानमाचरेत् पश्चाद् गुरवे वैष्णवो(वः?) शुचिः ॥१९॥

अथवा शिल्पिने दद्याद् दक्षिणां केवलां तथा।
शलाकां गुरवे दद्याद् गां सवत्सां च नारद! ॥२०॥

---

१. न्यसेत् इति ख।
२. मुने! इति ख।

मूर्तिपानाञ्च संयच्छेत् यथाशक्तिस्तु दक्षिणाः।
दहनाऽऽप्यायनं कुर्यान्मूलमन्त्रेण नारद!॥२१॥

संस्थाप्य स्नानपीठेऽथ संस्कृते प्रोक्षणादिना।
अथावशिष्टकुम्भानां द्रव्यैर्जलैश्च सेचयेत्॥२२॥

आवाहितश्च यो देवो यस्मिन् कुम्भे पुरा यथा।
तन्मन्त्रपाठपूर्वेण सेचयेद् द्विजपुङ्गव!॥२३॥

अथवा वेदपाठेन विधिवद् देशिकाज्ञया।
ऋक्सामयजुःपूर्वेणैकायनेनाथर्वणा[1] तथा॥२४॥

कुम्भैः संस्थापितैः द्रव्यैः बिम्बं संस्नापयेन्मुदा।
अष्टात्रिंशत्[2] तथा शुद्धैः कलशैरधिकैस्ततः॥२५॥

विभवमन्त्रपाठेन ततो व्यूहैश्च सेचयेत्।
परमन्त्रेण शुद्धेन नृसूक्तेनाऽथवा प्रभोः॥२६॥

कुम्भेन सेचयित्वाऽथ जुहुयात् साधिकं शतम्।
न्यूनाधिकस्य शान्त्यर्थमाज्यतिलाहुतीर्यजेत्॥२७॥

संशोध्य शुभ्रवस्त्रेण चापादतलमस्तकम्।
परिधानोत्तरीयार्थं द्वे वस्त्रे दापयेद् बुधः[3]॥२८॥

मन्त्रान् प्राणप्रतिष्ठाख्यान् चतुर्वेदमयान् पठेत्।
मा प्रकामेति ह्यृग्वेदान् आग्नेनायुर्यजुर्मयान्[4]॥२९॥

प्राणापानं हि यत्साम ततः प्राणाय वै नमः।
यातव्येति परं मन्त्रं विप्रानेकायनांस्ततः॥३०॥

---

१. ऋक्सामयजुःपूर्वेणैकायनाथर्वणा इति क।
२. अष्टांत्रिशत् इति क।
३. बुध! इति ख।
४. आग्नेनायुयजुर्मयान् इति क।

ततस्त्वावाहनार्थं तु देवं सम्प्रार्थयेन्मुदा।
हस्तौ बद्ध्वा हृदि ध्यात्वा वासुदेवैकमानसः॥३१॥

हृत्स्थं तमादिदेवं वै परिवारैर्युतं प्रभुम्।
कृपापूर्णं चारुहास्यं शरणागतवत्सलम्॥३२॥

आवाहयाम्यमरवृन्दनताङ्घ्रियुग्मं
लक्ष्मीपतिं भुवनकारणमप्रमेयम्।
आद्यं सनातनतनुं प्रणवासनस्थं
पूर्णेन्दुभास्करहुताशसहस्ररूपम्॥३३॥

ध्येयं परं सकलवेदविदाञ्च वेद्यं
वाराहकापिलनृकेसरिसौम्यमूर्तिम्।
श्रीवत्सकौस्तुभमहामणिभूषिताङ्गं
कौमोदकी[1] कमलशङ्खरथाङ्गहस्तम्॥३४॥

सर्वत्रगोऽसि भगवन् किल यद्यपि त्वाम्
आवाहयामि हि यथा व्यजनेन वायुम्।
गूढो यथैव दहनो मथनादुपैति आवाहि-
तोऽपि हि तथा त्वमुपैषि चार्चाम्॥३५॥

मालाधराच्युत! विभो! परमात्ममूर्ते!
सर्वज्ञ! नाथ! परमेश्वर! सर्वशक्ते!।
आगच्छ मे कुरु दयां प्रतिमां भजस्व
पूजां गृहाण मदनुग्रहकाम्ययाऽद्य॥३६॥

ततो वाद्यैर्जयैर्घोषैः पूरयेद् गगनाङ्गणम्।
चन्दनागरुकर्पूरगन्धैः ............. मिश्रितैः॥३७॥

---

१. इत आरभ्य पञ्चचत्त्वारिंशत्तमश्लोकपर्यन्तं ख-मातृकायां नास्ति।

धूपितेन सुगन्धेन कालागरुमुखेन च।
द्विषट(ट्?)कारेण मन्त्रेण सर्वाङ्गानि तु लेपयेत्॥३८॥

पत्रच्छेदमयैः पुष्पैः सिताद्यैः........... ।
नानादेशोद्भवैश्चान्यै -र्हरितैर्भेदसंयुतैः॥३९॥

शेखरैः कङ्कणैर्हारैः पूजयेद्भक्तवत्सलम्।
धूपयेदाज्यसिक्तेन गुगु(ग्गु?)लेन शुभेन च॥४०॥

............ महादीपैः तिलतैलाज्यपूरितै(तैः?)।
अभुक्ताहतश्वेतसुश्वेतरञ्जितैः...... .......नैः॥४१॥

गर्भीकृतत्वगेलाद्यैः पूजयेत्तदनन्तरम्।
ततो मध्वाज्यसिक्तेन ....................रम्॥४२॥

नैवेद्यैर्विविधैः पूतैः भक्ष्यैः सफलमूलकैः।
पानकैः पाब(व?)नैः स्वच्छैः शीतलैर्मधुरादिकैः॥४३॥

त्वगेलाद्यन्वितैघृ(र्घृ?)ष्टैः धूपकर्पूरवासितैः।
नारिकेलोदकोपेतैस्तर्पणीयः सनातनः॥४४॥

नैवेद्याचमन(ना?)द्यञ्च प्रदेयं परमात्मने।
......................... निष्पुंसनाम्बरम्॥४५॥

अथ चूर्णितकर्पूरधृष्टश्रीखण्डभावितम्।
सपूगीफलमुत्कृष्टं ताम्बूलं विनिवेदयेत्॥४६॥

शालयः शिम्बधान्यानि तिलाः सिद्धार्थकानि च।
रोचना श्रीफलं पुष्पं दुर्वा धात्रीफलं दधि॥४७॥

सुगन्धितीर्थयुक्[1] श्वेतं दक्षिणावर्तमम्बुजम्।
तमालादिदलच्छन्ने पात्रे कृत्वाऽर्घ्यकौसुमम्॥४८॥

---

१. अधोरेखास्थं ख-मातृकायामेवास्ति।

हेममानं हिरण्यञ्च प्रदेयं भावितात्मने।
जानुनी भूतले कृत्वा शिरसाऽवनतेन च ॥४९॥
दण्डवत् प्रणमेद्भूमौ देवं प्राकट्यकारणात्।
मात्रावित्तं ददेत् तस्मै भोगानां पूरणाय च ॥५०॥
चामरव्यजनादीनि भोगान्यन्यानि नारद!।
शयनासननिष्ठानि तन्त्रीवाद्यानि यानि च ॥५१॥
भेरीमृदङ्गपटहपर्यन्तानि महान्ति च।
तत्प्रेक्ष्य स्वधिया सम्यक् प्रदेयानि परात्मने ॥५२॥
भोगैः राजोपचारैश्च सम्पूज्य पाठयेत् ततः।
वेदानेकायनान् चैव वैदिकैः सुविशारदैः ॥५३॥
अर्चामि तेति वै मन्त्रं साम यच्चार्चितस्त्विति।
भगवानिति तज्ज्ञांस्तु ततो वह्नौ यजेत् प्रभुम् ॥५४॥
जितन्तस्तोत्रमन्त्रेण सामगानेन नारद!।
गायत्रं पाठयेत् प्रेम्णा रथन्तरञ्च संज्ञितम् ॥५५॥
जपमुद्राप्रणामाद्यं दत्त्वा ब्रह्मरथे स्थिरे।
संस्थाप्य मूर्तिरूपं तं वेदगैः सह देशिकः ॥५६॥
यात्रोपकरणैश्चैवं[1] गच्छेद्वै यागमन्दिरम्।
[2]अष्टाभिर्मङ्गलैश्चापि ब्राह्मणैर्वैदिकैर्धृतैः[3] ॥५७॥
अर्घ्यगन्धादिभिश्चैवं सार्धं घण्टारवैस्तथा।
शङ्खभेर्यादिभिः सर्वैः हृदा तु कवचं जपन् ॥५८॥
दिग्देवेभ्यो बलिं दद्यात् तन्त्रमार्गानुसारतः।
रत्नकाञ्चनवज्राद्यं क्षिपेद्वीथ्यां तु देशिकः ॥५९॥

---

१. यात्रोपकरणे चैवं इति क।
२. 'लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः।
हिरण्यं सर्पिरादित्य आपो राजा तथाऽष्टमम् ॥'
वाचस्पत्यकोशः, भागः-१, पृ.५१९.
३. ब्राह्मणैर्वैदिकै धृतैः इति क।

यागतोरणदेशस्थं रथं कृत्वाऽर्चयेत् प्रभुम्।
पुष्पधूपदीपैर्देवं[1] पूजयित्वाऽथ पाठयेत्॥६०॥

उत्तिष्ठेति जितन्तञ्च व्यापकं मन्त्रमुच्चरेत्।
नृसूक्तं सम्पठन् विप्र! यागगेहं प्रवेशयेत्॥६१॥

वेदिका शयनाख्या या शाययेत् तत्र निर्मलम्।
प्राक्शिरः कलशान् अष्टौ स्थापयेत् समनन्तरम्॥६२॥

निद्रामावाहयेत् तेषु स्वास्थ्यवृद्धिकरीं तदा।
चेतनां वैष्णवीं तत्र बिम्बायुष्यस्य वर्धिनीम्॥६३॥

आगच्छ मोहनीनिद्रे! वासुदेवस्य शासने।
पशुपक्षिमृगादीनां योगमायाविवर्धिनि!॥६४॥

पूजयित्वाऽर्घ्यपुष्पाद्यैः शयनस्थं प्रभुं ततः।
न्यसेन्न्यासान् देशिकेन्द्रः आप्यायनादिपूर्वकम्॥६५॥

द्वादशाक्षरन्यासान् विभवमनूनां तथा।
तत्त्वालङ्करणादीनां विस्तरादिह कथ्यते॥६६॥

हृदयाद्यङ्गमन्त्राणां षण्णां न्यासं तथारभेत्।
हृदये शिरसि चैवं ..............................

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायामर्चनारात्रे
मूर्तिप्रतिष्ठानिरूपणनामा
अष्टमोऽध्यायः।[2]

**इति अर्चनारात्रं समाप्तम्।**



१. इत उर्ध्वं ख-मातृकायां नास्ति ।
२. पुष्पिका क-मातृकायां नास्ति।

# प्रायश्चित्तरात्रम्

## प्रथमोऽध्यायः

नारदः

श्रेयसे सर्वभक्तानां नारायणरतात्मनाम्।
आराधनविधिः सर्वः प्रतिष्ठाविधिपूर्वकः॥ १॥

बाह्यमानसपूजाश्च वर्णिता भक्तिवृद्धये।
वृद्धिः स्यादनुरागस्य वासुदेवे परात्मनि॥ २॥

तत्र विघ्नानि शास्त्रज्ञ! न स्युस्तद्वद विस्तरात्[1]।
विघ्ने सति क्षतौ वाऽत्र किं कार्यं भक्तिकर्मिभिः[2]॥ ३॥

प्रायश्चित्तादिकं सर्वं जीर्णोद्धारञ्च लाङ्गलिन्!।
वक्तव्यं नावशिष्येत श्रेयोमार्गे निबोध मे॥ ४॥

सङ्कर्षणः

नारद! सम्प्रवक्ष्यामि दोषापत्तौ तु कर्मिभिः।
भक्तिवृद्धिप्रधानञ्च जीर्णोद्धारादिकं मुने!॥ ५॥

कर्तव्यं विहितव्यञ्च देशिकेन तथाश्रितैः।
येनाऽत्र जायते क्षेमं नश्येच्च विघ्नदूषणम्॥ ६॥

जीर्णोद्धारविधिस्तत्र विज्ञापयामि सुव्रत!।
अङ्गभङ्गादिवैकल्ये बिम्बस्य सर्वथा यदा॥ ७॥

प्रासादाङ्गस्य भङ्गे च वज्राशनिनिपातने।
रक्तं वस्त्रे समुत्पन्ने पीठवैकल्यके तथा॥ ८॥

---

१. स्युस्तद्वद्विस्तरात् इति क।
२. भक्तिकर्मभिः इति क।

नास्तिकैः शत्रुभिश्चौरैः प्रतिमाहरणे मुने।
राजराष्ट्रमहोत्पाते भूमिकम्पे तपोनिधे! ॥ ९ ॥

वह्निना बिम्बप्रासादाङ्गदाहे तु समुद्धरेत्।
पूजने चिरलुप्ते च दुःस्पर्शेऽन्त्यजनैस्तथा ॥१० ॥

जीर्णोद्धारस्तु कर्तव्यो[1] बिम्बस्य मन्दिरस्य वा।
तत्र बिम्बसमुद्धारे विशेषं कथयामि ते ॥११ ॥

स्वयंव्यक्तं तथा दिव्यमार्षं मानुषसम्भवम्।
मणिजं धातुजं बिम्बमायसं दारुजं तथा ॥१२ ॥

मृज्जं वा स्यात् परिक्षीणं भग्नाङ्गं वाऽथ नारद!।
समाधातव्यमेव स्यान्न त्याज्यं शैलजं तथा ॥१३ ॥

उपाङ्ग भङ्गे सन्धानं कुर्याद् भग्ने महाङ्गके।
बिम्बं तत् परित्यक्तव्यमङ्गोपाङ्गानि वेद मे ॥१४ ॥

शिरो वक्त्रं तथा कर्णौ पाणी वक्षस्तथोदरम्।
मेढ्रं नाभिश्च पादौ च महाङ्गानि द्विजोत्तम! ॥१५ ॥

चक्षुः श्रोत्रं[2] तथा नासा तालुर्हस्तपदाङ्गुलिः।
केशः श्मश्रु च रोमाणि नखदन्तास्तथैव हि ॥१६ ॥

चक्राद्यायुधसङ्घश्च वनमालादिभूषणम्।
उपाङ्गानि मुनिश्रेष्ठ! कथ्यन्ते तन्त्रपारगैः ॥१७ ॥

तेषां भङ्गे समाधानं कर्तव्यं तच्च कथ्यते।
पाषाणलोहदारूणां बिम्बानां लोहपट्टकैः ॥१८ ॥

भग्नाङ्गं तु समाधेयं स्वर्णतारेण वा मुने!।
रत्नादीनां तु सन्धानं सुवर्णद्रावणेन वा ॥१९ ॥

---

१. जीर्णोद्धारं तु कर्तव्यं इति क।
२. श्रौत्रं इति क।

मृण्मयचित्रबिम्बानां सजातीयेन यत्नतः।
मुख्यस्याङ्गस्य भङ्गे तु परित्याज्यं विधानतः॥२०॥

मुख्यभङ्गेऽपि न त्याज्यं रत्नबिम्बं तु नारद!।
सन्धेयमेव यत्नेन स्वयंव्यक्तञ्च गौरवात्॥२१॥

आर्षं दिव्यञ्च बिम्बन्तु शतवर्षाधिकार्चितम्।
सन्धेयं न परित्याज्यं महापुरुषस्थापितम्॥२२॥

परित्यागप्रकारस्तु मानुष एव तन्त्रगः॥
आर्षे दिव्ये तथोद्वासः क्वचिदस्ति स कथ्यते॥२३॥

देशिकेन्द्रेण येनैतद् बिम्बं प्रतिष्ठितं पुरा।
आभिरूप्यस्य लाभार्थं तत्रैव स्थापयेन्नवम्॥२४॥

सुरूपं भक्तिवृद्ध्यर्थं स एव दोषभाग् न तत्।
प्राचीनं न परित्याज्यं स्थाप्यमन्यत्र नारद!॥२५॥

प्रतिष्ठाविधिपूर्वेण भक्तानां श्रेय इच्छुभिः।
संहत्यैवार्चनीयं वै नाङ्गभङ्गं कदाचन॥२६॥

सर्वरूपेषु बिम्बेषु नियमोऽयं सनातनः।
अङ्गभङ्गस्य बिम्बस्य पूजने दोषभाग्[1] भवेत्॥२७॥

अनिष्टं परिवारे स्यात् कथ्यते तद्विशेषतः।
स्थापनं पूजनञ्चैव सक्षतानां करोति यः॥२८॥

मरणं यजमानस्य गुरोः शिल्पिजनस्य वा।
क्षतमिन्द्रियचक्रस्थं कर्तुर्भवति दोषदम्॥२९॥

आकण्ठान्नाभिपर्यन्तं क्षतं पुत्रस्य मृत्युकृत्।
पृष्ठभङ्गे तु जायाया भ्रातृणां वा भवेत् क्षयः॥३०॥

आकटेः पायुपर्यन्ते क्षते मृत्युः स्वसुर्भवेत्।
जान्वन्तमुरुमूलाच्च यत्र कुत्र भवेत् क्षतम्॥३१॥

धनधान्यपशूनाञ्च क्षयकृच्चाचिरेण तत्।
जानोः पादतलान्तञ्च भृत्यवर्गस्य दोषदम्॥३२॥

तस्मात् स्वस्य परस्याऽथ क्षेमेच्छुभिर्निरन्तरम्।[१]
बिम्बस्य पूजने स्थेयं सावधानतया मुने!॥३३॥

सम्प्रोक्ष्य विधिवद् वारि जपित्वाऽष्टाक्षरं मनुम्।
सम्पूज्य गुरुवर्गञ्च सन्धेयं कुशलैः सदा॥३४॥

मुख्याङ्गभङ्गकाले च परित्यागस्य नारद!।
विधिं सर्वं प्रवक्ष्यामि प्रतिष्ठां नूतनस्य च॥३५॥

आचार्यचोदितो सद्यो यजमानः सुबुद्धिमान्।
यद् यदिच्छति चोद्धर्तुं तत्तदादौ तु संयजेत्॥३६॥

पुरोक्तेन विधानेन यागगेहं च मण्डपम्।
विधाय तत्र सम्पूज्य कुम्भमण्डलपावकम्॥३७॥

गुग्गुलुक्षीरमध्वाज्यदधिलाजादिभिः क्रमात्।
तर्पयेद् द्वादशार्णेन सहस्रशतसङ्ख्यया॥३८॥

बिम्बस्थां दिव्यशक्तिं तु मन्त्रैरङ्गैर्नयान्वितः।
उद्वास्य राजते कुम्भे सुवर्णे ताम्रजे तथा॥३९॥

पूजिते जलसम्पूर्णे स्थापयेद् विधिपूर्वकम्।
प्रार्थयेयुर्गुरुः शिल्पी यजमानश्च नारद!॥४०॥

जीर्णं बिम्बमिदं देव! सर्वदोषाऽऽवहं नृणाम्।
अस्योद्धारे कृते सौख्यं तन्त्रे प्रोक्तं त्वया प्रभो!॥४१॥

---

१. क्षेमेच्छुभिनिरन्तरम् इति क।

जीर्णोद्धारविधानं तद् नृपराष्ट्रसुखावहम्।
शासनाधिष्ठितास्तस्मादनुज्ञां देहि शाश्वत!॥४२॥

अस्त्रेणार्घ्यं ततो दत्त्वा पीठात्तं भेदयेत् शनैः।
पीठे भग्ने ब्रह्मभागाद् वियोज्य तं महामते!॥४३॥

शिखामन्त्रेण बद्ध्वा तं विमाने वा रथे शुभे।
न्यसेद् वाहनमन्त्रेण गणाधीशस्य नारद!॥४४॥

मन्त्रं जपन् रथं पश्चाद् यायाद् गुरुः समाहितः।
अगाधेऽम्भसि निक्षिप्य शैलजं धातुजं तथा॥४५॥

दारुजं शिलया साकं बद्ध्वा क्षिपेच्च संमत!।
तत्काले हृदयं मन्त्रं जपेद् गुरुस्तथा स्वयम्॥४६॥

आगत्य यागभूमिं वै प्रायश्चित्तार्थमेव च।
जपेत् सञ्ज्ञामनुं पश्चात् सहस्रं शतपञ्चकम्॥४७॥

पूर्ववत् तोषयेत् सर्वान् देशिकं शिल्पिनं तथा।
बन्धुवर्गं भृत्यवर्गं काञ्चनाद्यैः स्वशक्तितः॥४८॥

नूतने स्थापिते बिम्बे कलशे मन्त्रितं जलम्।
दिव्यं तेजश्च देवस्य सेचयेत् सञ्ज्ञया सह॥४९॥

अङ्गमन्त्रैस्तथा सर्वैर्यजेत् स्थिरत्वहेतुना।
सामान्यलक्षणैः मन्त्रैश्चतुर्मूति(र्ति?)मयैस्तथा॥५०॥

गुरुः सप्रणवेनैव व्यापकेन च नारद!।
उत्सवं कारयेत् सर्वान् भोजयेत् तोषयेत्पुनः॥५१॥

तुष्टे तु वैष्णवे सर्वे तुष्टो विष्णुर्न संशयः।
तस्माद् यज्ञे प्रतिष्ठायामुदवासनकर्मणि॥५२॥

सर्वत्र च विधावन्ते तोषणीयाः प्रयत्नतः।
प्रासादाङ्गपरिक्षीणे उल्कापाताद्भूचालनात् ॥५३॥

पतिते शिखरादौ च बिम्बमुत्सार्य यत्नतः।
सपीठं स्थापनीयं तमन्यत्राराधनालये ॥५४॥

रत्नानि स्थापितान्यन्तः गृहीत्वा स्थापयेद्रहः।
समाहिते च प्रासादे यागादिपूजनान्विताम् ॥५५॥

स्थापयेत् प्रतिमां पीठे रत्नानि नक्षिपेत् तदा।
अभिषे(षि?)च्य पुरोक्तेन तोषयेद् ब्रह्मवेदिनः ॥५६॥

चक्रभङ्गे तथाऽन्येषां भङ्गे चैवं विधानतः।
विधिः सर्वत्र कर्तव्योऽन्यथा दोषो भवेन्महान् ॥५७॥

विधिवद्यागपूर्वं तु बिम्बसञ्चालनादिकम्।
ध्वजं वा मन्दिरं शुभ्रं पीठं भासञ्च पिण्डिकाम् ॥५८॥

सल्लोहशैलकाष्ठोत्थैः निर्मापयति साधकः।
पूजते देवदेवञ्च तदक्षय्यं भवेन्मुने! ॥५९॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां
प्रायश्चित्तरात्रे जीर्णोद्धारविधानवर्णननामा
प्रथमोऽध्यायः।

## प्रायश्चित्तरात्रे द्वितीयोऽध्यायः

नारदः

भगवन्! पूजने विघ्नं भवेज्ज्वरादियोगतः।
मोहाद्वा देशकालाद्वा ह्यकस्माद्राज्यकारणात्॥ १॥

लोपः स्यादाह्निके ब्रह्मन्! काम्ये नैमित्तिके विधौ।
आजीवावधि भक्तेन कृतमाराधनं ततः॥ २॥

निष्फलं स्यान्न तत्कर्म प्रसीदेत जगद्गुरुः।
पातत्राणमुपायं वा श्रोतुमिच्छामि साम्प्रतम्॥ ३॥

सङ्कर्षणः

स्खलनं गच्छतो लोके भवत्येव न संशयः।
ज्ञात्वोपायं तु तच्छान्त्यै बुद्धिमान् प्रयतेन्नरः॥ ४॥

सर्वपापस्य शान्त्यर्थं जानता वाऽप्यजानता।
कृतस्य शमनार्थं तु प्रायश्चित्तं विशोधनम्॥ ५॥

पश्चात्तापेन कर्तव्यं क्षमायाचनया तथा।
अपराधालयो जीवः परमात्मा समुदारधीः॥ ६॥

क्षमते बालवज्जीवं शरणागतवत्सलः।
गदिता प्रार्थना शास्त्रेऽपरोक्षानुभवात्मभिः॥ ७॥

तदर्थमुत्सवः कार्यः पवित्रारोहणात्मकः।
ज्ञाने वा स्वापराधानामज्ञाने वा तपोनिधे!॥ ८॥

सर्वेषामुपशान्त्यर्थं व्रतानां परिपूरकः[१]।
चक्रराड् नाशको यद्वद्विघ्नानां तु विदारकः॥ ९॥

यथाश्वमेधो[२] विप्राणां[३] सर्वेच्छापरिपूरकः।
राजसूयो[४] नृपाणाञ्च भक्तानां वाञ्छितार्थदः॥१०॥

विभूति-सुयशः-सिद्धि-धन-धान्य-समृद्धिदः।
क्षेत्रदारसुखञ्चैव सार्वभौमपदं(द?)प्रदः॥११॥

तस्माद्विलोपदोषस्य शान्त्यर्थं सुखप्राप्तये।
पवित्रारोहणं कार्यं मुक्ताहारोपमं शुभम्॥१२॥

वर्षे वर्षे तु कर्तव्यं प्रायश्चित्तं महामुने!।
पवित्रे त्वकृते वर्षे दोषाणामभिवर्धनात्॥१३॥

बुद्धेः कालुष्यहेतोश्च प्राणनाशो धनक्षयः।
कुटुम्बे विघ्नभूयस्त्वं राष्ट्रे देशे तथा भवेत्॥१४॥

चातुर्मास्ये यजेद्देवं पवित्रारोपणेन वै।
तुलायां कर्कटे मासे एकादश्यां सिते तथा॥१५॥

कालं तं वैष्णवं विद्धि सर्वसिद्धिप्रदं शुभम्।
सम्पूर्णे चन्द्रबिम्बे तु मासयोरनयोर्मुने!॥१६॥

कालं तं मध्यमं सौरं विजानीहि विदांवर!।
अन्यस्मिन्नपि सङ्क्रान्तौ चातुर्मासे तिथावथ॥१७॥

यावद्वित्तानुसारेण कनिष्ठ उत्सवो द्विज!।
अप्राप्ते श्रेष्ठकाले तु कालेनान्येन केनचित्॥१८॥

---

१. परीपूरकः इति क।
२. यथाश्वमेधं इति क।
३. विप्राणा इति क।
४. राजसूयं इति क।

त्रिदिनं द्विदिनं वाऽथ दिनैकमुत्सवं भजेत्।
प्रासादस्याग्रतः कार्यो मण्डपश्चतुर्हस्तकः॥१९॥

पुरोक्तेन विधानेन यागशालायुतस्तथा।
निर्माप्य पञ्चगव्येन सास्त्रपूतेन वारिणा॥२०॥

क्षालयेत्तोरणादीनि कुर्यात् शोभाऽभिवृद्धये।
अधिवासदिनात् पूर्वमङ्कुरान् अर्पयेत् शुचिः॥२१॥

पालिकादीनि सर्वाणि गोप्यदेशे निधापयेत्।
यावत्कर्म समाप्तं स्यात्तावत्कालं बलिं क्षिपेत्॥२२॥

वेलयोरुभयोः सम्यग् अन्यथा[1] दोषभाग् भवेत्।
यागद्रव्याणि सर्वाणि सम्पादयेत् प्रयत्नतः॥२३॥

कलशहव्यद्रव्याद्यं वस्त्रगन्धादिकं नयेत्।
तन्तुसङ्ग्रहणं कुर्याद् अधिवासदिने ततः॥२४॥

सूक्ष्मं दृढं सितं श्लक्ष्णं सूत्रं प्रसूतया मुने!।
विनिर्मितं कुमार्या वा वृद्धया वा विनीतया॥२५॥

विशुद्धविधवानार्या सम्पादितमथापि वा।
क्षौमं कार्पाससम्भूतं दौकूलं[2] वैभवो यथा॥२६॥

केशादिभिर्विहीनं यत् क्षालयेच्छुद्धवारिणा।
दहनाप्यायनं कुर्यात् मन्त्रेण मुद्रया तथा॥२७॥

कलशे मण्डले कुण्डे स्रुक्स्रुवादिष्वपि मुने!।
पवित्रकं प्रदातव्यं तावन्मानं रचेदतः॥२८॥

बिम्बार्थं त्रिविधं कार्यं पवित्रं स्वर्णसूत्रयुक्।
मालाकृतिं शिरोमध्ये लम्बितमंसयोः परम्॥२९॥

---

१. सम्यक् अन्यथा इति क-ख।
२. दौकुलं इति क-ख।

मूर्ध्नः पादावधिर्यावत् तृतीयमतिविस्तृतम्।
सहस्रतन्तुकं कुर्यात् शतं वाऽर्धशतं मुने!॥३०॥

विष्वक्सेनगरुडादिभृत्यवर्गार्थमेव च।
देशिकार्थं प्रमातव्यं यत्यर्थमपि नारद!॥३१॥

बिम्बप्रतिसराणां तु व्यासश्चानियतः स्मृतः।
सूत्रमानं ततोऽन्येषां यथाशोभानुसारतः॥३२॥

त्र्यङ्गुलान्तरिता देयाः सर्वेषां ग्रन्थयः शुभाः।
रञ्जयेच्चन्दनाद्येन कुङ्कुमेन सुगन्धिभिः॥३३॥

सर्वौषधिसमोपेतैः त्वगेलादिविमिश्रितैः।
पावनैः विविधैः द्रव्यैः भक्तिभावान्वितैस्तथा॥३४॥

जाम्बूनदमयैः पुष्पैर्नानारत्नोपशोभितैः।
बिम्बस्य भूषणीयं तु पवित्रं रजतोत्थितैः॥३५॥

धातुजे पित्तले भाण्डे कृत्वाऽऽच्छाद्यास्तरेण तत्।
धूपयेद् गुगु(ग्गु?)लादिभिरर्चयेद् व्यापकेन च॥३६॥

संस्थाप्य पुरतो विष्णोर्देवागारेऽथ नारद!।
ततो देवालयं पूर्णं यागशालाऽथवा शुभा॥३७॥

संवेष्ट्य सितसूत्रेण चतुर्धा तद्गुणेन च।
ततः कुम्भं तथा वह्निः पूजयेद् यतमानसः॥३८॥

जुहुयात् शतमाज्यस्य दद्यात् पूर्णाहुतिस्ततः।
दिग्देवेभ्यो बलिं दत्वा मौनी मूलं जपेन्मुदा॥३९॥

कथां सर्वेश्वरीं पुण्यां शृणुयात् सात्वतीं तदा।
समूहं प्रार्थयेत् तत्र पञ्चकालपरायणम्॥४०॥

षट्कर्मनिरतं ब्रह्मन्! यतिवृन्दं[1] तु वैष्णवम्।
समक्षं भवतां[2] भक्त्या श्वः प्रभुं पूजयाम्यहम्॥४१॥

सन्निधानमतः कार्यं मदनुग्रहकाम्यया।
कर्मशेषं तदापाद्य भूषणानां यथोदितम्॥४२॥

एकादश्यां[3] निशान्ते तु स्नानपूर्वं तु पूजनम्।
हवनं कर्मकाण्डञ्च जपस्तुतिकथाश्रवः॥४३॥

आराधनञ्च देवस्य विनिवेदनमाचरेत्।
भोगान् दद्याद्विशेषेण प्रभोरामन्त्रणाय च॥४४॥

दन्तकाष्ठं सताम्बूलं मुखवासांसि दर्पणम्।
चन्दनादीनि गन्धानि जातिपूगफलानि च॥४५॥

माल्यान्योषधयः सप्त बीजानि च फलानि च।
तिलतण्डुलपात्राणि क्षीरं दधिरसं घृतम्॥४६॥

अपूपा(पाः?) पायसं मिष्टं स्वेन कार्यमुपोषणम्।
सम्पूज्य भक्तिभावेन जागरेण नयेन्निशाम्॥४७॥

पुनरभ्यर्च्य देवेशं विशेषाद् देवमन्दिरे।
अथ भूषणपात्रं तदादायोद्घाट्य पूज्य च॥४८॥

जितन्तस्तोत्रमन्त्रेण भूषयेद् भूषणैः प्रभुम्।
पवित्रैः स्वर्णगैर्दिव्यैरनन्तप्रसरैः सितैः॥४९॥

पातत्राणं पवित्रेण भवेत् स्वकुलसन्ततेः।
पवित्रोत्सवकाले तु नानानिर्माणविग्रहः॥५०॥

तत्र सन्निहितः साक्षाद् नारायणः सनातनः।
बिम्बं सम्पूज्य मन्त्रेण पवित्रैः बहुभिः शुभैः॥५१॥

---

१. यतिवृदं इति क।
२. भवता इति क।
३. एकादश्या इति क।

जपेन्मन्त्रवरं साङ्गं पश्चाद् बद्धाञ्जलिः पठेत्।
सर्वगाच्युत सन्मूर्ते! सर्वज्ञ! पुरुषोत्तम!॥५२॥

नित्ये नैमित्तिके काम्ये पूजने मामके प्रभो!।
नानामन्त्रगणोपेतः सन्निधिं भज मे विभो!॥५३॥

देवबिम्बे च कुम्भे च मण्डले गुरुविग्रहे।
पावके शास्त्रपीठे च यागोपकरणेषु च॥५४॥

शुद्धयाजिषु दक्षेषु त्वदेकशरणेषु वै।
जानताऽजानता वाऽपि कायेन मनसा तथा॥५५॥

वचसा वापराधो मे जातो वा जायतेऽथवा।
क्षमस्व देवदेवेश! दोषाणां चैव शान्तये॥५६॥

प्रीतये च यथाशास्त्रमद्य निर्वर्तयाम्यहम्।
पावित्रकं विधानं तत् सर्वकर्मप्रपूरणम्॥५७॥

कृतं मे तद् गृहाण त्वं प्रसन्नो भव शाश्वतः।
होमान्तं पूजनं सर्वं कुरु त्वमात्मसात् प्रभो!॥५८॥

कुम्भे यज्ञे मण्डले च प्रतिसरं समर्पयेत्।
गुरवे दीक्षितेभ्यश्च पवित्रं वाञ्छितार्थदम्॥५९॥

दद्याच्च भक्तिनम्रायै जायायै धर्मसेविने।
मित्रसङ्घाय दातव्यं सम्पूज्याः पाञ्चरात्रिकाः॥६०॥

दक्षिणां गुरवे दद्यात् शक्त्या प्रावरणं धनम्।
चतुर्थेऽहनि संन्यासमाचरेद् विधिपूर्वकम्॥६१॥

अपनीय तु माल्यादीन् पवित्राणि च नारद!।
दद्यात् सेवकवर्गेभ्यो यजेत् पूर्णाहुतिं[१] ततः॥६२॥

---

१. पूणाहुतिं इति क।

एवं कृते तु दोषाणामपराधानां सहस्रशः।
नाशं शीघ्रं भवेद् ब्रह्मन् वासुदेवप्रसादतः॥६३॥

प्रायश्चित्तं महदेतद् याच्ञा नारायणं प्रति।
सर्वदोषोपशमनं तस्माद् यत्नेन तं भजेत्॥६४॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां प्रायश्चित्तरात्रे
पवित्रारोपणविधिनिरूपणनामा
द्वितीयोऽध्यायः।

# प्रायश्चित्तरात्रे तृतीयोऽध्यायः

नारदः पप्रच्छ

भगवन् त्वन्मुखाद् ज्ञातं पवित्रारोपणं महत्।
दोषोपशमने ख्यातं सिद्धिदमृद्धिदं तथा॥ १॥

नानाविधानां दोषाणां प्रायश्चित्तं पृथक् पृथक्।
अस्ति चेद्विविधं सीरिन्![1] तदाख्यातुं त्वमर्हसि॥ २॥

सङ्कर्षण उवाच

भवन्ति विविधाः दोषाः लोकेऽस्मिन् मनुजैः सदा।
स्वभावात् कामक्रोधाद्यैर्दोषैर्लोभेन नारद!॥ ३॥

वासुदेवरतास्तत्र शुद्ध्यन्ति द्विजपुङ्गव!।
प्रायश्चित्तैस्तु तन्त्रोक्तैर्विष्णुमुखाब्जसम्भवैः॥ ४॥

आचाराः कथितास्त्वत्र वैष्णवानां मया पुरा।
शैथिल्यं तत्र दोषेन स्यात् तत् शोध्यं तु सत्वरम्॥ ५॥

तन्त्रेऽस्मिन् परमो धर्मः[2] पाञ्चरात्रानुयायिनाम्।
शुद्धयाजित्वमित्युक्तमेकान्ताराधनं प्रभोः॥ ६॥

वासुदेवं विनाऽन्येषां देवतानां समाश्रयः।
दोषः संशोधनं तस्य पुनर्दीक्षेति नारद!॥ ७॥

इन्द्रचन्द्रादयो देवाः ब्रह्मा रुद्रः प्रजापतिः।
प्रणमेत्ताननन्यत्वबुद्ध्या[3] कश्चन साधकः॥ ८॥

---

१. सीरीन्! इति क।
२. धर्मो इति क।
३. प्रणमेत्तानन्यत्वबुद्ध्या इति क।

नमस्कृत्य गुरुं देवं विज्ञाप्य स्वमनःस्थितिम्।
स्नपनं कारयेद् गेहे देवस्य शान्तिकृन्मुदा॥९॥

अशक्तौ करणे तद्धि क्षम्यतामिति चोच्चरन्।
मूलमन्त्रायुतं जप्त्वा माहात्म्यं हृदि धारयेत्॥१०॥

रुद्रादिदेवनैवेद्यमश्नाति वैष्णवोत्तमः।
तत्स्पृष्टं वा प्रमादेन मूलमन्त्रशतं जपेत्॥११॥

चिन्तनं[1] मन्त्रजापो वा वासुदेवादृते मुने!।
अन्यस्य करणे शान्तिहोमं कुर्यादतन्द्रितः॥१२॥

उपास्योपासनारूपं प्रायश्चित्तमिदं ततः।
आहारस्याथ वक्ष्यामि कर्मिणां चित्तशुद्धये॥१३॥

भक्षणे मधुमांसस्य जानता वाप्यजानता।
वैष्णवान् भोजयेद् विप्रान् चतुःषष्टीति सङ्ख्यया॥१४॥

उपोषेत तु पञ्चाह्नो वायुर्वा जलमाहरन्।
नमस्कृत्य गुरुं पश्चात् क्षमस्वेति वदेद्धरिम्॥१५॥

लशुनं गृञ्जनं[2] चैवं पलाण्डुं कोद्रवं तथा।
छत्राकं भोजने सद्योऽनश्नन् त्रिदिवसं क्षिपेत्॥१६॥

ब्राह्मणान् भोजयेत् प्रोक्तान् मधुमांसस्य भक्षणे।
कांस्यपात्रस्थितं किञ्चित् पद्मशङ्खगदाकृतौ॥१७॥

पात्रे स्थितं च भुक्त्वाऽन्नं शतं व्यापकमुच्चरेत्।
त्रियहं पञ्चगव्येन पूतो भवति साधकः॥१८॥

---

१. चितनं इति क।
२. गुञ्जनं इति क।

अनिवेदितमन्नं चेद्भक्षयेद् व्यग्रचेतसा।
सहस्रं द्वादशार्णेन शुद्धः स्यान्नाऽत्र संशयः॥१९॥

आहारदोषमुक्त्वैवं विहारदूषणं शृणु।
एकादश्यां व्रतेऽन्यस्मिन् दिने स्त्रीगमनं चरेत्॥२०॥

अष्टाक्षरसहस्रं तु मन्त्रं जपेद्विशुद्धये।
अयने विषुवे चैवं सङ्क्रान्त्यां सन्ध्ययोरपि॥२१॥

दिवा चाऽपि स्त्रियं गत्वा रात्रिन्दिनमुपोषितः।
जप्त्वा सहस्रं मूलेन समिदाज्यचरुं यजेत्॥२२॥

याने गोष्ठेऽथ यन्त्रे वा जले देवस्य मन्दिरे।
मोहेन स्वस्त्रियं गत्वा स्नात्वाऽनश्नन् दिनत्रयम्॥२३॥

मूलमन्त्रायुतं जप्त्वा तस्मात् पापाद्विमुच्यते।
विधवां[1] कन्यकां शिष्यां परस्त्रियं च बालिकाम्॥२४॥

त्यक्तां स्वशरणे यातां तस्याः स्वस्य तथेच्छया।
मोहेन सङ्गमेन्मूढो मासव्रतेन मुच्यते॥२५॥

शाकव्रतं निर्लवणं स्नानं जपं सहस्रकम्।
प्रत्यहं मासपर्यन्तं व्रतमेतदनुत्तमम्॥२६॥

साक्षात् स्त्रीसङ्गमस्यैतत् तन्त्राज्ञारहितस्य वै।
प्रायश्चित्तमिदं प्रोक्तं सङ्कल्पे दोष उच्यते॥२७॥

व्रते पुमान् स्वनारीं[2] च पत्नी स्वपुरुषं ह्यथ।
प्राप्तुं सङ्कल्पयेन्मोहाद् दिनमेकमुपोषितः॥२८॥

---

१. विधवा इति क।
२. स्वनारी इति क।

निवेद्य गुरवे चित्तसङ्कल्पमाचरेत् ततः।
द्वादशाक्षरमन्त्रस्य जपमेकसहस्रकम् ॥२९॥

गृहीणां शोधनं प्रोक्तं वक्ष्यामि ब्रह्मचारिणाम्।
स्खलने ब्रह्मचर्यस्य चतुर्दिनमुपोषणम् ॥३०॥

सङ्कल्पे नारीसङ्गस्य दिनमेकमुपोषणम्।
श्रवणे कीर्तने केलौ प्रेक्षणे गुह्यभाषणे ॥३१॥

सङ्कल्पे प्राप्तये तस्याः[१] प्रयत्ने चैवमुच्यते।
साक्षात् स्त्रियोऽङ्गसङ्गे तु वर्षमेकं व्रतं चरेत् ॥३२॥

शाकाहारी भवेत् छात्रो निर्लवणश्च नारद!।
प्रत्यहं मौनमास्थाय अष्टार्णमयुतं जपेत् ॥३३॥

गुरुदाराङ्गनागन्तुः प्रायश्चित्तं न विद्यते।
वचनेन विहारस्य प्रायश्चित्तं तु कथ्यते ॥३४॥

निन्दनाद्वैष्णवानां तु दीक्षितानां विशेषतः।
साष्टशतं जपेन्मन्त्रं द्वादशाक्षरवर्णकम् ॥३५॥

स्वार्थमाश्रित्य यः कश्चिदनृतं व्याहरेत्तदा।
धेनुद्वादशकं दद्याद् गुरवे ब्राह्मणाय वा ॥३६॥

गुरोर्वा वासुदेवस्य निन्दां यः शृणुयात्तदा।
श्रवणगोलके स्वस्य पूरयेत् त्रपुणा स्वयम् ॥३७॥

ताडने वैष्णवं मूढः निःसृतेऽसृजि देहतः।
तस्मै दश गवां दत्त्वा क्षम्यतामिति चोच्चरन् ॥३८॥

---

१. ख-मातृकायामत्र ग्रन्थोऽपूर्ण उपलब्धः। अन्ते च-
*'वटपत्तने जीवोजीतुकडोजीमहोदयेन लिखावितं* ॥श्रीरस्तु॥
*तैलाद्रक्षेज्जलाद्रक्षेद्रक्षेच्छिथिलबन्धनात्।*
*शत्रुवद् बध्नीयाद् ग्रन्थमेषा रीतिः सनातनी॥'* इति लिखितम्।

यावत्प्रियमवाप्नोति तावत्सम्पूजयेत् मुदा।
वर्णाश्रमस्य धर्मस्य प्रायश्चित्तमथोच्यते ॥३९ ॥

..............................................
..............................................[1]

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां प्रायश्चित्तरात्रे
विविधप्रायश्चित्तनिरूपणनामा
तृतीयोऽध्याय:[2]।

---

१. अध्यायस्य अन्तिमभाग: क-मातृकायां नास्ति।
२. पुष्पिका क-मातृकायां नास्ति।

## प्रायश्चित्तरात्रे चतुर्थोऽध्यायः

सङ्कर्षणः

आहारस्य विहारस्य प्रायश्चित्तं श्रुतं त्वया।
वर्णाश्रमीयधर्माणां दैनिकाचरणस्य च॥ १॥

पूजायां मन्दिरे बिम्बे दूषिते शुद्धिरुच्यते।
मण्डपं यागशाला वा कल्पिते त्वशुद्धिस्थले॥ २॥

विज्ञाते सति संत्यज्य स्थानमन्यत्तु कल्पयेत्।
शान्तिहोमं[1] ततः[2] कुर्यादाज्येनाष्टोत्तरं शतम्॥ ३॥

अधिकं च जपेद्धीमान् जपेन्मूलं सहस्रकम्।
........................................... कल्पयेत्।
शुचिः .............. मूढ ........... आचरेत्॥ ४॥

प्रतिष्ठाकर्मणि कुर्यात् शयनं ...........त्मनः।
दर्भमालाविहीने च ........... स्तरणे तथा॥ ५॥

तिलतण्डुलधान्यानां यथोक्तानां क्रमेण तु।
होमद्रव्यविहीने तु शान्तिहोमं समाचरेत्॥ ६॥

समिदाज्यचरुं सद्यो नृसूक्तेन यजेत् सुधीः।
नेत्रोन्मीलनकाले तु सु(सू?)चीपात्रविहीनके॥ ७॥

वस्त्रगोधान्यहीने च यः कुर्याल्लोभमोहतः।
जितन्तास्तोत्रमन्त्रेण जुहुयात् शतमन्वयात्॥ ८॥

---

१. शान्तिहोम इति क।
२. ततं: इति क।

तोरणानां तु सर्वेषां[१] मानहीनेऽधिकेऽपि वा।
अनुक्तविधिसम्पन्ने सति संशोधयेत्तदा॥ ९॥

शान्तिहोमं प्रकुर्वीत ब्राह्मणानाञ्च भोजनम्।
अस्पृश्यस्पर्शने यज्ञे पूजाद्रव्याणि नारद!॥१०॥

हव्यमाज्यं तथा पात्रं मोहाद्वाऽथ प्रमादतः।
सूतकाशौचयुक्तश्च पापरोगयुतस्तथा॥११॥

कृतघ्नो नास्तिको वाऽपि पुनर्द्रव्यं तदाहरेत्।
दाहाप्यायनपूर्वं तत् पश्चाद् विधौ तु योजयेत्॥१२॥

शान्तिहोमं ततः कृत्वा सहस्रमयुतं तु वा।
मूलमन्त्रजपं कुर्याद् ब्राह्मणान् भोजयेद् दश॥१३॥

मृत्पात्राणि परित्यज्य लोहपात्राणि शोधयेत्।
यागशालां च संशोध्य मार्जनोल्लेपनादिभिः॥१४॥

पञ्चगव्येन सास्त्रेण प्रोक्षयेन्मुनिपुङ्गव!।
पूर्णाहुतिविहीने तु कृतमप्यकृतं भवेत्॥१५॥

पुनर्होमं प्रकुर्वीत षोडशाहुतिभिस्तदा।
नृसूक्तेन यजेत् पश्चाज्जपं साहस्रकं तथा॥१६॥

आचार्याय पुरा प्रोक्तां प्रयच्छेद् दक्षिणां मुदा।
लोभेनान्येन केनाऽपि हेतुना न्यूनता भवेत्॥१७॥

शून्यता वा तदाऽऽचार्यो दुःखी स्याद् द्विजपुङ्गव!।
निष्फलं तत्समाख्यातं विघ्नदं तेन हेतुना॥१८॥

प्रणम्य दण्डवद्भूमौ यजमानः स्वयं गुरुम्।
सन्तोषं कारयेत् पश्चाद्वस्त्रहेमाङ्गुलीयकैः॥१९॥

---

१. सवेषां इति क।

दक्षिणां द्विगुणां दद्यात् तेन शान्तिर्भविष्यति।
द्विजभोजनहीने तु दुर्भिक्षं जायते ध्रुवम्॥२०॥

निष्फलं चैव कर्म स्याद्वैष्णवान् द्विजपुङ्गवान्।
भोजयेद्[1] दक्षिणां दद्यात् क्षमां याचेत याजकः॥२१॥

पूजालोपस्य नित्यस्य प्रायश्चित्तमथः शृणु।
पञ्चकालात्मकं कार्यं पूजनमिति निर्णीतम्॥२२॥

लोपेनैकेन वा द्वाभ्यां प्रायश्चित्तं चरेत् सुधीः।
द्विगुणं पूजनं कृत्वा परेद्युः निर्जलं गमेत्॥२३॥

दिनमेकं भवेत् तत्र पूजाहीने तु सर्वथा।
उपोषणं जपश्चैव सहस्रं मूलमन्त्रकम्॥२४॥

पञ्चदिनं हि देवात्मा पूजाविहीनको भवेत्।
पञ्चाहं भोजनं त्यक्त्वा पय एव पिबेत्तदा॥२५॥

स्नपनं देवदेवस्य कृत्वा सम्पूजयेत्ततः।
सप्ताहं लङ्घने पूजां रोगादिनाऽथ केनचित्॥२६॥

शान्तिहोमं ततः कुर्यात् सप्ताहं कन्दभुग् भवेत्।
मासं यावदपूज्यत्वे प्रतिमायास्तपोनिधे!॥२७॥

निर्जलं लङ्घनं कुर्यात् पञ्चदिनं तु याजकः।
पश्चात्तं स्नापयेद् देवं विधानेनोत्तमेन च॥२८॥

अष्टाक्षरसहस्रं तु जुहुयाच्चिन्तयन् हरिम्।
उत्सवं कारयेत् सर्वान् ब्राह्मणान् तोषयेत्तथा॥२९॥

राष्ट्रापत्तौ तथा कालाद् दुर्भिक्षादिवशान्मुने!।
विघ्नाच्च नास्तिकादीनां वर्षमेकं तु मन्दिरम्॥३०॥

---

१. षभोजयेद् इति क।

अपूज्यं प्रतिमाऽपूज्या भवेत्तर्हि प्रतिष्ठया।
पुनः संशोधनं कार्यं नयनोन्मीलनं विना॥३१॥

प्रासादमपि पूतेन पञ्चगव्येन वारिणा।
शिखरावधि संशोध्यं पुनः सम्पूजयेत् प्रभुम्॥३२॥

दैनिके पूजिते देवे भवेत् स्पर्शादिदूषणम्।
संशोधनीयं प्रासादं बिम्बं वा तद्धि कथ्यते॥३३॥

प्रासादं भगवत्पीठं गर्भगेहमथाऽपि वा।
रजसा दूषिते स्त्रीणां संशोध्यं तद्ध्रुवं मुने!॥३४॥

गोमयाम्भोभिरालिप्य पर्यग्निकरणं तथा।
पुण्याहवाचनं पञ्चगव्यैः सम्प्रोक्षणं तथा॥३५॥

मार्जार-मूषिका-सर्प-मण्डुकादिकजन्तुभिः।
बिम्बसंस्पर्शने जाते स्नापयेत् परमेश्वरम्॥३६॥

श्वानैश्च गर्दभैरुष्ट्रैः ............ शिवा ...........।
बिम्बे स्पृष्टे ........... स्नापयेत् ...... मार्गतः॥३७॥

जनने मरणे .............. प्रासादे .........।
दूषिते...... देव.......... स्नाप ...... मन्दिर........॥

इति श्रीनारदपञ्चरात्रे सङ्कर्षणसंहितायां प्रायश्चित्तरात्रे
पूजालोपप्रायश्चित्तनिरूपणनामा
चतुर्थोऽध्यायः[1]।

---

१. पुष्पिका क-मातृकायां नास्ति ।

## प्रायश्चित्तरात्रे [1]षष्ठोऽध्यायः

नारदः

प्रायश्चित्तानि सर्वाणि श्रुतानि शास्त्रपारग!।
मध्ये मध्ये त्वया प्रोक्तं प्रोक्षणं शान्तिहोम च॥ १॥

ग्रामशान्तिविधिश्चैवं क्रियते केन हेतुना।
कुत्र? केन? कया रीत्या? तत्सर्वं वद विस्तरात्॥ २॥

सङ्कर्षणः

समाहितमनाः सर्वं शृणु त्वं मुनिपुङ्गव!।
सम्प्रोक्षणादिसर्वाणि कर्माणि शुद्धयेऽचिरात्॥ ३॥

बिम्बपीठप्रसादस्य[2] शिखरस्य च भागशः।
सम्पूर्णे खण्डिते वाऽथ पुनर्नूतननिर्मिते॥ ४॥

अस्पृश्यैः स्पर्शने चैवं चण्डालसूतपुल्कसैः।
बिम्बस्य गर्भगेहस्य प्रासादादेश्च[3] नारद!॥ ५॥

महापातकिभिर्गेहे देवस्य समधिष्ठिते।
एकमासाधिकं तत्र प्रोक्षणमाचरेत् सुधीः॥ ६॥

आलये प्राणिनाशे च शवैः स्पृष्टे च मन्दिरे।
बिम्बे वा सत्वरं ब्रह्मन् प्रोक्षणमाचरेत् पुमान्॥ ७॥

---

१. पुष्पिकायां षष्ठाध्यायस्य निर्देशेन पञ्चमोऽध्यायः प्रायश्चित्तविधानविशिष्टो लुप्त इत्यनुमीयते।

२. बिम्बं पीठप्रासादस्य इति क।

३. प्रासादाद्यैश्च इति क।

वल्मीके तु समुत्पन्ने शिथिली.......... दिके।
तत्तद्दोषानुसारेण प्रायश्चित्तमथाचरेत्॥ ८॥

सर्वदोषविनाशार्थं प्रोक्षयेत् पूतवारिणा।
शान्तिकुम्भं विधानेन स्थापयेत् मुनिपुङ्गव!॥ ९॥

न तिथिर्न च नक्षत्रं प्रतीक्ष्यं नैव सामयम्।
सद्यः काले च कर्तव्यं कालक्षेपं न कारयेत्॥१०॥

बीजारोपणपूर्वं तु सर्वकर्म समारभेत्।
मण्डपं कारयेत् पूर्वं चतुर्द्वारसमन्वितम्॥११॥

वितानैस्तोरणैर्युक्तमलङ्कुर्याद् ध्वजादिभिः।
विस्तरायाम[1].......... हस्तमा....... कारयेत्॥१२॥

वृत्तं वा चतुरस्रं वा पद्मकुण्डं विधापयेत्।
अलङ्कारैरलङ्कृत्य दीपान् प्रज्वालयेत्ततः॥१३॥

देवालयं........... बिम्बं वा दूषितं मुने!।
सर्वत्र गोमयाम्भोभिः कुशोदकसमन्वितैः॥१४॥

पञ्चगव्यैश्च संक्षाल्यं पुण्याहोक्तिपुरःसरम्।
निशामुखे प्रवृत्ते तु उद्यते चन्द्रबिम्बके॥१५॥

नित्यपूजावसाने चाङ्कुरानर्पयेन्मुदा[2]।
अनिर्वाणप्रदीपैश्च रात्रिशेषं समापयेत्॥१६॥

प्रभाते तु समुत्थाय स्नातः स्रग्वी कृताह्निकः।
आचार्यो वैदिकैः सार्धमनुचरैश्च वैष्णवैः॥१७॥

देवगृहं समासाद्य प्रणामं सप्रदक्षिणम्।
कृत्वा देवात्मनः सम्यक् स्नपनमादिशेत्ततः॥१८॥

---

१. विस्ताराम इति क।
२. चाङ्कुरान् समर्पयेन्मुदा इति क।

चित्रभित्तिस्थबिम्बस्य पुरस्ताद् भद्रविष्टरे।
कूर्चे वा दर्पणे स्नानं विधिवत् स्थापितैः घटैः॥१९॥

कृत्वा यागं प्रकुर्वीत देशिको वैदिकैः सह।
प्राङ्मुखे उत्तरे वाऽथ कल्पयेदासनं ततः॥२०॥

प्राणायामं करन्यासं मानसं यागमारभेत्।
प्रणम्य गुरुपङ्क्तिञ्च कुम्भस्थं पूजयेद्धरिम्॥२१॥

मण्डलं शङ्खचक्रादिखचितं पूजयेत्तथा।
संस्कार्याग्निं मखे कुण्डे सहस्रशतसङ्ख्यया॥२२॥

तिलैराज्यैर्यजेद्विष्णुं द्वादशाक्षरविद्यया।
महाकुम्भञ्च सम्पूज्य पूर्णाहुतिं ततो यजेत्॥२३॥

रजनीचूर्णयुक्तेन शाड्वलेन तिलेन च।
दिग्विदिक्षु तथा मध्ये त्विदमुक्त्वा बलिं क्षिपेत्॥२४॥

येषां वै क्रूरसत्त्वानामयं भूभाग आश्रयः।
उत्पातशान्तिहेत्वर्थं बलिं यच्छामि भावतः॥२५॥

गृहीत्वा तं बलिं देवा वासुदेवप्रसादकम्।
ते प्रयच्छन्तु मे तुष्टिं[1] प्रयान्तु परमालयम्॥२६॥

कुण्डस्थं मण्डलस्थञ्च देवं विसृज्य नारद!।
द्वारदेवांस्तथोद्वास्य प्रोक्षणमारभेत् ततः॥२७॥

महाकुम्भं समादाय विन्यसेच्छिष्यमूर्धनि।
शङ्खादिमङ्गलैः घोषैः आगमैर्मन्त्रगीतकैः॥२८॥

सर्वैः परिजनैः सार्धं वेदविद्भिश्च ब्राह्मणैः।
करकास्त्रं समादाय देशिकः स्वकरेण च॥२९॥

---

१. तुष्टि इति क।

अच्छिन्नधारया युक्तं शलाकामात्रया भुवि।
प्रादक्षिण्येन धामान्तः प्रवेश्य मुनिसत्तम!॥३०॥

देवस्य पुरतो न्यस्य प्रार्थनामारभेत् तदा।
त्वमेव जगतः कर्ता संहर्ता मधुसूदन!॥३१॥

पाहि मां पुण्डरीकाक्ष! उत्पातात् करुणानिधे!।
भूमौ स्खलितपादानां भूमिरेवावलम्बनम्॥३२॥

प्रासादबिम्बदोषाणां शोधने त्वं हि देशिकः।
त्वत्प्रसादाद्भयं सर्वं समस्तं विश्वमानकम्॥३३॥

गोष्पदमिव भक्तानां भवति त्वं प्रसीद ओम्।
पात्राणि यागद्रव्याणि यद् यद् दोषेण दूषितम्॥३४॥

तत्सर्वं प्रोक्षणीयं वै कुम्भतोयेन नारद!।
द्वारावरणदेवांश्च परिवारांश्च सर्वशः॥३५॥

आत्मानं यजमानञ्च वैष्णवौघञ्च प्रोक्षयेत्।
अभिसि(षि?)च्य बलेः पीठं गरुडं प्रोक्षयेत्तथा॥३६॥

विष्वक्सेनं च सम्पूज्यावशिष्टेन तु प्रोक्षयेत्।
ततः प्रणम्य स्वाचार्यं ब्राह्मणान् वैष्णवान् तथा॥३७॥

गोभूहेमादिकं दद्याद् वित्तवैभवमानतः।
भोजयेद् वैष्णवान् विप्रान् सहस्रं शतमेव वा॥३८॥

शुद्धं स्यान्मन्दिरं गेहं बिम्बञ्च नैव संशयः।
प्रोक्षणं कथितं ब्रह्मन्! सर्वपापहरं शुभम्॥३९॥

ग्रामशान्तिञ्च वक्ष्यामि प्रायश्चित्तान्तरं परम्।
क्षुब्धे राज्ये च भक्तानां शून्ये ग्रामे च दूषिते॥४०॥

वह्निदग्धेऽशनिपाते वात्यासारादिदूषिते[१]।
आधिक्ये[२] नास्तिकानाञ्च चण्डालशबरात्मनाम् ॥४१ ॥

युद्धे ब्रह्मवधे चैवं गवादीनां वधे तथा।
रक्तपातादिना दुष्टे ग्रामे शान्तिं समाचरेत् ॥४२ ॥

शक्यञ्चेन्मृत्तिकां दुष्टां खात्वोद्धृत्य बहिः क्षिपेत्।
शुद्धां सम्पूर्य तद्ग्रामे पञ्चगव्येन शोधयेत् ॥४३ ॥

पर्यग्निकरणञ्चैवं ब्राह्मणैः कारयेत् सुधीः।
सेचयेद् गोमयाम्भोभिः पुण्याहोद्घोषपूर्वकम् ॥४४ ॥

वासयेत् कपिलो नून्(नूः?) सवत्सा दिनपञ्चकम्।
ब्राह्मणान् भोजयेत् तत्र समीकृते भुवि द्विज! ॥४५ ॥

एवं शुद्धिं तु सम्पाद्य यागमण्डपमारभेत्।
देवालयपुरोभागे पूर्वस्यामुत्तरेऽथवा ॥४६ ॥

चतुर्द्वारादिसंयुक्तं वेदिकुण्डसमन्वितम्।
परितोऽष्टौ वा[३]चत्वारः कुण्डा एकोऽथ कल्पयेत् ॥४७ ॥

हव्यद्रव्यादिकं सर्वमेकत्रीकृत्य नारद!।
प्रासादं देशिको गच्छेत् कृतस्नानः कृताह्निकः ॥४८ ॥

देवदेवं तु सम्पूज्य पुरोक्तेनैव कर्मणा।
यागगेहं ततो गच्छेत् सानुचरः सवैदिकः ॥४९ ॥

कल्पयेद् द्वारकलशान् महाकुम्भञ्च दक्षिणे।
करकेण युतं विप्र! शान्तिघटसमन्वितम् ॥५० ॥

करशुद्धिं करन्यासमात्मयागं च कल्पयेत्।
पुण्याहं वाचयेत् पश्चाद् दहनाप्यायनं तथा ॥५१ ॥

---

१. वात्यसारादिदूषिते इति क।
२. आधिकये इति क।
३. व इति क-ख।

कृत्वा सम्प्रोक्ष्य सम्भारान् द्वारार्चनं समारभेत्।
विधिवद् देवमभ्यर्च्य महाकुम्भेऽर्घ्यपूर्वकम्॥५२॥

............... चतुर्व्यूहं ततः शान्तिघटे द्विज!।
शान्तिं सम्पूजयेत् पुष्टिं तुष्टिञ्चैव विधानतः॥५३॥

वास्तुदेवं मखे दिक्षु कुमुदार्दींश्च[1] पूजयेत्।
मुख्यकुण्डेऽनलं देवं प्रतिष्ठाप्य[2] विधानतः॥५४॥

समिद्भिराज्ययुक्ताभिः सप्तभिस्तर्पयेत् क्रमात्।
नृसूक्तेन तिलैराज्यैः प्रत्येकं शतमाहुतीः॥५५॥

इष्ट्वाऽन्तेऽनलमुद्धृत्य शान्तिहोममनु द्विज!।
दिग्विदिक्षु च कुण्डेषु वासुदेवादिकं यजेत्॥५६॥

चतुर्वेदमयैः विप्रैः तैस्तैः मन्त्रैरनुक्रमात्।
पावनैः शान्तिसूक्तैश्च वैष्णवैः पाञ्चरात्रिकैः॥५७॥

एकायनैश्च सन्तर्प्य तिलं साज्यं यजेत्ततः।
शान्तिदेवीं तथा तुष्टिं पुष्टिं वास्तुगणं तथा॥५८॥

कुमुदादिगणाञ्चैवं मध्यकुण्डे क्रमं यथा।
प्रत्येकमाहुती(तीः?) दद्यादष्टौ विधिविधानतः॥५९॥

वासुदेवांशरूपाणां देवतानाञ्च नारद!।
इन्द्रचन्द्रचतुर्मुखसूर्यादीनाञ्च संमत!॥६०॥

पूजनं तर्पणं कार्यं वासुदेवैकमानस!।
ग्रामवास्तुगणांश्चैव नगराश्रितदेवताः॥६१॥

भूपालाधिष्ठितान् देवान् चैत्यप्रासाददेवताः।
पर्वतद्रुमवेल्याद्यान् उद्यानोपवनांस्तथा॥६२॥

---

१. कुमुदार्दींच इति क।
२. प्रतिष्ठाय इति क।

अतिथिदेवताः सर्वास्तर्पयेद् घृतधारया।
सम्पाताज्यं तु सङ्गृह्य शान्तिकुम्भे तु सेचयेत्॥६३॥

महाकुम्भस्थदेवं तु सम्पूज्य देशिकः पुनः।
बलिदानं तु चण्डादीन् प्रयच्छेद् रक्षकांस्तदा॥६४॥

निशां नीत्वा प्रभातेऽथ देशिको यागमन्दिरे।
द्वारार्चनादिकं कृत्वा महाकुम्भं प्रपूजयेत्॥६५॥

अर्घ्यपाद्यादिभिर्भोगे(गैः?) सर्वान् सन्तर्प्य ब्राह्मण!।
पूर्णाहुत्यादिकं कृत्वा विसृज्य हृदि भावतः॥६६॥

महाकुम्भादिकान् सर्वान् वाहयन् मूर्तिपादिभिः।
शान्तिसूक्तस्य पाठेन सह यायात्तु देशिकः॥६७॥

सम्प्रोक्ष्य देवगेहं प्राग् नृसूक्तमुच्चरन् तदा।
महाकुम्भस्थतोयेन शान्तितोयेन[1] सर्वतः॥६८॥

ग्रामस्य वीथिकाः सर्वा सम्प्रोक्ष्याश्च प्रयत्नतः।
दूषिताङ्गेषु ग्राम्येषु नृसूक्तमुच्चरन् गुरुः॥६९॥

प्रोक्षयेत्तु विशेषेण व्यापकं मन्त्रमुच्चरन्।
शोधने सर्वगात्राणामङ्गानाञ्चैव नारद!॥७०॥

नास्ति व्यापकमन्त्राणां तुल्यमन्यत्तु किञ्चन।
तस्मात् सर्वेषु कालेषु क्रियासु च विधानतः॥७१॥

कथितेषु विकल्पेन मन्त्रान् तानुच्चरन्मुदा।
बलिं दत्त्वा विशेषेण प्रतिमां पूजयेत्ततः॥७२॥

प्रणमेत् करुणापूर्णमानन्दस्यन्दनिर्झरम्।
लोकानुग्रहकृद्देवं प्रार्थयेद् भावपूर्वकम्॥७३॥

---

१. शातितोयेन इति क।

त्वदीयं ग्राम देवेश! रक्षणीयं त्वया सदा।
नास्ति संरक्षकश्चान्यस्त्वद्विना मे गतिः प्रभो!॥७४॥
दैविकं भौतिकं वाऽपि मानुष्यं दूषणं हरे!।
ग्रामेऽस्मिन् यत्समायातं शुद्धिं प्रयच्छ पावन!॥७५॥
गोभूस्वर्णादिकं दद्याद् गुरवेऽनुचराय च।
ऋत्विग्भ्यो मूर्तिपेभ्यश्च तोषयेद्वैष्णवान् तथा॥७६॥
तेभ्यश्च दक्षिणां दद्याद् ग्रामसौख्यप्रदां द्विज!।
विधिर्ग्रामस्य शान्त्याख्यो विस्तरात् कथितो मुने!॥७७॥
शान्तिहोमं तु कर्तव्यं विधिं तस्य..............
पुरोक्तेन विधान...... सम्पू..... वह्नि........
नारसिंह विशे..... शा(शां?)तिसूक्तं समुच्चरन्।
..................................................................[1]

इति श्री नारदपञ्चरात्रे सङ्कर्षणसंहितायां प्रायश्चित्तरात्रे सम्प्रोक्षणग्रामशान्त्यादिविधिनिरूपणनामा षष्ठोऽध्याय:[2]।

संवत् १७३३ वर्षे शके १५९८ प्रवर्तमाने तृतीये राजशके वैशा......
गागाभट्टात्मजेन श्री...(न) ग्रंथां.... तरं राय..... ने लिखावितम्॥
राधाकृष्णः प्रसन्नो अस्तु॥ गोविंदार्पणमस्तु॥
ग्रन्थाक्षरानुगुण्येन लिखितं सावधानत:।
यावत् शुद्धमशुद्धं वा मम दोषो न कश्चन[3]॥
॥ श्रीरस्तु शुभमस्तु॥

**इति सङ्कर्षणसंहिता समाप्ता।**



१. अध्यायस्य अन्तिमो भागो लुप्त:।
२. पुष्पिका क-मातृकायां नास्ति।
३. श्लोकोऽयं क-मातृकायां ग्रन्थलिप्यां नागराक्षरेषु च लिखित: प्राप्यते।

# परिशिष्टानि

# परिशिष्ट-१

## शुद्धाशुद्धसृष्टिसर्गः, ज्ञानरात्रे सप्तमोऽध्यायः



# परिशिष्ट-२

## वासुदेवमण्डलम्, आचाररात्रे चतुर्थोऽध्यायः



परिशिष्ट-३

# चतुर्व्यूहस्य द्वादशव्यूहानाञ्चायुधानि वर्णभेदश्च

ज्ञानरात्रम्, ३/३४-६१, ८५-१०७.

### वासुदेवेन सह चतुर्व्यूहः, श्वेतवर्णः

| क्रमाङ्कः | नाम | वा.मु.हस्तः | द.मु.हस्तः | वा.गौ.हस्तः | द.गौ.हस्तः |
|---|---|---|---|---|---|
| १. | वासुदेवः | शङ्खः | अभयः | गदा | चक्रम् |
| २. | केशवः | गदा | पद्मम् | चक्रम् | शङ्खः |
| ३. | नारायणः | गदा | पद्मम् | शङ्खः | चक्रम् |
| ४. | माधवः | शङ्खः | गदा | पद्मम् | चक्रम् |

### सङ्कर्षणेन सह चतुर्व्यूहः, रक्तवर्णः

| क्रमाङ्कः | नाम | वा.मु.हस्तः | द.मु.हस्तः | वा.गौ.हस्तः | द.गौ.हस्तः |
|---|---|---|---|---|---|
| १. | सङ्कर्षणः | शङ्खः | अभयः | मुसलम् | सीरम् |
| २. | गोविन्दः | पद्मम् | गदा | चक्रम् | शङ्खः |
| ३. | विष्णुः | शङ्खः | पद्मम् | चक्रम् | गदा |
| ४. | मधुसूदनः | पद्मम् | शङ्खः | गदा | चक्रम् |

### प्रद्युम्नेन सह चतुर्व्यूहः, पीतवर्णः

| क्रमाङ्कः | नाम | वा.मु.हस्तः | द.मु.हस्तः | वा.गौ.हस्तः | द.गौ.हस्तः |
|---|---|---|---|---|---|
| १. | प्रद्युम्नः | शङ्खः | अभयः | शार्ङ्गम् | बाणपञ्चकम् |
| २. | त्रिविक्रमः | चक्रम् | गदा | शङ्खः | पद्मम् |
| ३. | वामनः | गदा | चक्रम् | पद्मम् | शङ्खः |
| ४. | श्रीधरः | गदा | चक्रम् | शङ्खः | पद्मम् |

### अनिरुद्धेन सह चतुर्व्यूहः, कृष्णवर्णः

| क्रमाङ्कः | नाम | वा.मु.हस्तः | द.मु.हस्तः | वा.गौ.हस्तः | द.गौ.हस्तः |
|---|---|---|---|---|---|
| १. | अनिरुद्धः | शङ्खः | अभयः | खेटकम् | खड्गः |
| २. | पद्मनाभः | पद्मम् | चक्रम् | शङ्खः | गदा |
| ३. | हृषीकेशः[१] | चक्रम् | पद्मम् | गदा | शङ्खः |
| ४. | दामोदरः | गदा | शङ्खः | चक्रम् | पद्मम् |

---

१. ग्रन्थे 'हृषीकेशः' इति नाम न दृश्यते, आयुधक्रमस्तु विद्यते।

परिशिष्ट-४

# विभवदेव-देवी-स्थानादिवर्णनम्

## ज्ञानरात्रे चतुर्थोऽध्यायः

| क्रमाङ्क | देव | देवी | स्थानम् | वर्णन-श्लोकः |
|---|---|---|---|---|
| १ | पद्मनाभः | धीः | क्षीरोदधिः | ४/२३-२७ |
| २ | ध्रुवः | तारा | उत्तरध्रुवः, दक्षिणध्रुवः | ४/२८-३० |
| ३ | अनन्तः | वारुणी | पातालम् | ४/३०-३३ |
| ४ | शक्त्यात्मा | शक्तिः | पृथिवी | ४/३४-४० |
| ५ | मधुसूदनः | पद्मा | धरणी | ४/४०-४२ |
| ६ | विद्याधिदेवः | विद्या | वाराणसी | ४/४३-४५ |
| ७ | कपिलः | सङ्ख्या | पातालम्/समुद्रापयानः | ४/४६-४७ |
| ८ | विश्वेश्वरः | विश्वा | श्वेतद्वीपः, कुरुक्षेत्रम् | - |
| | | | हिमाचलः, वेदिकातटम् | ४/४८-५५ |
| ९ | हंसः | खगा | श्वेतद्वीपः | ४/५५-५७ |
| १० | क्रोडात्मा | ? | कोकामुखम् | ४/५८-६१ |
| ११ | वडवावक्त्रः | गौः | वडवामुखम् | ४/६२-६४ |
| १२ | धर्मात्मा | मूर्तिः | धर्मारण्यम्, हिमाचलः | ४/६५-६७ |
| १३ | वागीश्वरः | वागीश्वरी | कृष्णाश्वक्षेत्रम् | ४/६८-७१ |
| १४ | एकार्णवशायी | निद्रा, प्रीति, | - | |
| | | विद्या, लक्ष्मी | एकार्णवः | ४/७२-७४ |
| १५ | कूर्मः | धरणी | लवणोदधिः | ४/७४-७६ |
| १६ | नृवराहः | छाया | सूकरक्षेत्रम् | ४/७७-७९ |
| १७ | नृहरिः(नृसिंहः) | नारसिंही | ? | ४/७९-८१ |
| १८ | अमृताहरणः | ? | समुद्रमन्थनस्थलम् | ४/८२-८४ |
| १९ | श्रीपतिः | श्रीः | समुद्रमन्थनस्थलम् | ४/८५-८७ |

| | | | | |
|---|---|---|---|---|
| २० | कान्तात्मा | ? | समुद्रमन्थनस्थलम् | ४/८८-९० |
| २१ | राहुजित् | विश्वकामा | समुद्रमन्थनस्थलम् | ४/९१-९४ |
| २२ | कालनेमिघ्न: | मा | – | ४/९५-९८ |
| २३ | पारिजातहर: | सत्या | सूकरक्षेत्रम् | ४/९८-१०२ |
| २४ | लोकनाथ: | कान्ति: | मगधामण्डलम् | ५/२-४ |
| २५ | दत्तात्रेय: | सरोरुहा | वस्त्रापथम् | ५/५-८ |
| २६ | न्यग्रोधशयन: | – | प्रयागक्षेत्रम् | ५/८-११ |
| २७ | मत्स्यात्मा | – | नौबन्धगिरि: | ५/११-१३ |
| २८ | वामन: | खर्वा | हिमाचल:,वामनस्थलम् | ५/१४-१७ |
| २९ | त्रिविक्रम: | – | गङ्गामध्यदेश:, | |
| | | | कुरुक्षेत्रम्, यमुनातटम् | ५/१७-२४ |
| ३० | नर: | नरसम्भवा | बदरीवनम्,गोवर्धनगिरि: | |
| | | | सालग्रामम्,गवांस्थानम् | ५/२४-२८ |
| ३१ | नारायण: | नारायणी | सालग्रामम्,पिण्डारकम् | ५/२८-३० |
| ३२ | हरि: | हरिप्रीति: | सालग्रामम्,पिण्डारकम् | ५/३०-३१ |
| ३३ | कृष्ण: | गान्धारी | सालग्रामम्,पिण्डारकम् | ५/३२-३५ |
| ३४ | परशुराम: | काश्यपी | महेन्द्रपर्वत: | ५/३६-३८ |
| ३५ | दाशरथि: राम: | वैदेही | चित्रकूटम्,अवध: | ५/३८-४० |
| ३६ | वेदविद् | विद्या | बदरीवनम् | ५/४१-४४ |
| ३७ | कल्कि: | पद्मिनी | विपाशातटम् | ५/४५-४९ |
| ३८ | पातालशायी | लक्ष्मी, चिन्ता, | पातालम् | |
| | | निद्रा, तुष्टि: | | ५/४९-५२ |

परिशिष्ट-५

# मातृकाचक्रम्

## मन्त्रराजे द्वितीयोऽध्यायः



# परिशिष्ट-६

परस्नपनस्य कलशव्यवस्था द्रव्याणि च

अर्चनारात्रम् , ७/६२-७९

पूर्व

| | | | | | |
|---|---|---|---|---|---|
| ६ वनत्रेतादि-अग्निभस्म | ५ गोमयरसः | ४ नगादिद्वादश-मृदः | ३ आचमनीयम् | २ अर्घ्यद्रव्यम् | १ पाद्यद्रव्यम् |
| ७ कुशोदकान्वितं पञ्चगव्यम् | ८ सघृतः तैलकुम्भः | ९ चमसीवारि | १० कषायोदकम् | ११ त्रिफलोदकम् | १२ वचादिद्रव्याणि |
| १८ आज्यम् | १७ क्षीरम् | १६ दधि | १५ गजपिप्पल्या-दिकम् | १४ यष्ट्यादिकम् | १३ महानीलादि-द्रव्याणि |
| १९ मधु | २० इक्षुरसः | २१ पद्ममूलानि | २२ सक्षीरद्रुमाणां पत्रपुष्पमञ्जरी-फलानि | २३ जात्यादिकम् | २४ कौसुमरसः |
| ३० बाह्लीकादि | २९ आरण्यौषधयः | २८ ग्राम्यौषधयः | २७ सिद्धार्थकादिकं | २६ सास्यं शाल्यङ्कुर दर्भदूर्वादिकञ्च | २५ रोचनादिकम् |
| ३१ धातवः सुवर्णाद्याः | ३२ रत्नवारि | ३३ विद्रुमजालादि मुक्ताफलानि | ३४ तीर्थोदकम् | ३५ सुशीताम्भः शुद्धोदकम् | ३६ सुगन्धि पुष्पोदकम् |

उत्तर | दक्षिण

पश्चिम

## स्नपनकाले कलशाधिष्ठितदेवता-मन्त्राणां व्यवस्था

प्रथमे कुम्भे पद्मनाभध्रुवयोः स्थापनं तदनन्तरञ्च पातालशायिपर्यन्तानां विभवानां स्थापनम्। तत्तद्देवतामन्त्रस्तत्तत्कलशे स्नपनकाले पठनीयाः पुरुषसूक्तस्य, परमन्त्रस्य वा पाठः सततं कार्यः।

अर्चनारात्रम्,७/८३ तथा ८/२५,२६.

परिशिष्ट-७

## मुख्यानि दश तीर्थक्षेत्राणि

**अर्चनारात्रे चतुर्थोऽध्यायः**



## मुख्यानि दिशाभेदेन निरूपितानि दश तीर्थानि

अर्चनारात्रे चतुर्थोऽध्यायः

| | दिशा | स्थानम् | स्थानविशेषनाम | मूर्तिः |
|---|---|---|---|---|
| १. | अधस्तात् | पातालद्वारे (गङ्गासागरसङ्गमे) | कपिलाश्रमः | कपिलः |
| २. | आग्नेय्यां | शङ्खक्षेत्रम् | श्रीपुरुषोत्तमक्षेत्रम् | जगन्नाथः |
| ३. | दक्षिणे | तोताद्रिक्षेत्रम् | – | वासुदेवः (खगासनः) |
| ४. | नैर्ऋत्ये | नारायणाद्रिः | यादवाद्रिः (मेलुकोटे) | नारायणस्वामी |
| ५. | पश्चिमे | द्वारका | कुशस्थली | श्रीकृष्णः |
| ६. | वायव्ये | पुष्करक्षेत्रम् | – | शेषशायी भगवान् |
| ७. | उत्तरे | बदरिक्षेत्रम् | – | नरनारायणौ |
| ८. | ईशाने | सालग्रामक्षेत्रम् | राजेन्द्राख्यं वनम् | जनार्दनः |
| ९. | पूर्वे | नवलक्षाभिधं क्षेत्रम् | – | वासुदेवः |
| १०. | ऊर्ध्वं | भूवैकुण्ठं | श्रीरङ्गक्षेत्रम् | श्रीरङ्गनाथः |

परिशिष्ट-८

## स्वयंव्यक्तानि क्षेत्राणि

अर्चनारात्रे चतुर्थोऽध्यायः

### पूर्वदिशि

| क्रमाङ्कः | स्थानम् | देवः |
|---|---|---|
| १ | हेमशैलः | हेमोत्तमाङ्गदृक् |
| २ | मन्दरगिरिः | मधुसूदनः |
| ३ | लवणोदधिः | कूर्मः |
| ४ | गङ्गासागरसङ्गमः | यज्ञभुक् |
| ५ | मगधामण्डलः | लोकनाथः |
| ६ | प्राग्ज्योतिष्पुरः | विश्वेश्वरः |

### दक्षिणदिशि

| क्रमाङ्कः | स्थानम् | देवः |
|---|---|---|
| १ | वेङ्कटक्षेत्रम् | श्रीनिवासः |
| २ | नारायणाचलः | नारायणस्वामी |
| ३ | सह्याद्रिः | वामनः |
| ४ | दक्षिणदिशा (समुद्रसमीपे) | पद्मनाभः |
| ५ | महेन्द्रपर्वतः | परशुरामः |
| ६ | हस्तिपर्वतः | देवदेवेशः |
| ७ | सातत्रनाभिधः | जनार्दनः |
| ८ | शङ्कराख्यभूः | ज्ञानमूर्तिर्जगन्नाथः |
| ९ | मतङ्गाश्रमः | दाशरथिः रामः |
| १० | मृगस्थलम् | अभयहस्तः |
| ११ | पाण्डुरङ्गपुरम् | पाण्डुरङ्गः |

### पश्चिमदिशि

| क्रमाङ्कः | स्थानम् | देवः |
|---|---|---|
| १ | भूभागपदम् (नाभसाह्वयः) | गोविन्दः |

| | | |
|---|---|---|
| २ | नर्मदातटम् | श्रीधरः |
| ३ | रैवतकपर्वतः | दामोदरः |
| ४ | कृष्णाश्वः | अश्वशिराः (हयग्रीवः) |
| ५ | धर्मारण्यम् | धर्ममूर्तिः |
| ६ | पिण्डारकक्षेत्रम् (द्वारका) | कृष्णः |
| ७ | दण्डकारण्यम् | शार्ङ्गपाणिः |
| ८ | अर्बुदपर्वतः | दण्डपाणिः |
| ९ | प्रभासक्षेत्रम् | विष्णुः |

## उत्तरदिशि

| क्रमाङ्कः | स्थानम् | देवः |
|---|---|---|
| १ | कुरुक्षेत्रम् | केशवः केशिहा |
| २ | वृन्दावनम् | गोवर्धनः |
| ३ | यमुनाजलम् | त्रिविक्रमः |
| ४ | ध्वजाख्यं कुब्जाम्रकक्षेत्रम् | हृषीकेशः |
| ५ | गङ्गातटम् | बिन्दुमाधवः |
| ६ | कृतशौचम् | नरसिंहः |
| ७ | साकेतम् | दाशरथिरामः |
| ८ | मायापुरी | नीलकण्ठः |
| ९ | प्रयागः | न्यग्रोधशायी |
| १० | हिमाचलम् | मधुकैटभमाथी |
| ११ | नैमिषारण्यम् | यज्ञभुक् |
| १२ | सूकरक्षेत्रम् | गरुडवाहनः |
| १३ | शिपिविष्टात्मकम् | शिपिविष्टावृतः |
| १४ | मणिबन्धः | ब्रह्म |
| १५ | चक्रधरम् | चक्रपाणिः |
| १६ | मन्दाकिनीतटम् | जगन्नाथस्वामी |
| १७ | कोकामुखम् | वाराहः |

परिशिष्ट-९

# श्लोकार्धानुक्रमणी

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्

## ज्ञानरात्रम्





## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्रराजम्

## मन्त्ररात्रम्

## मन्त्रराजम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्

## मन्त्ररात्रम्





## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्

## आचाररात्रम्





## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

| | |
|---|---|
| यशस्करी च दुग्धा | ३/८६ |
| यष्टी वाराहकर्णी चाप्य | ७/७० |
| यस्याभ्यासादवा | १/३१ |
| यागगेहं ततो गच्छे | २/५८ |
| यागतोरणदेशस्थं रथं | ८/६० |
| यागशालां समागच्छे | ७/२५ |
| यागाद्यद्वासुदेवीयाद | ३/२९ |
| याज्ञिका वेदद्रष्टार: | ४/५३ |
| यातव्येति परं मन्त्रं | ८/३० |
| यात्रोपकरणैश्चैवं | ८/५७ |
| यादवो बलदेवोऽपि | ४/३८ |
| यादृशो महिमा तन्त्रे | ३/८ |
| यान्ति यास्यन्ति क्षेत्रे | ४/२४ |
| यामुनं जलमाश्रित्य | ४/११७ |
| यायात् सानुचरो विप्र: | ५/४७ |
| यावद् हस्ताधिकं ताव | ६/११४ |
| युगे युगे पृथिव्याञ्च | ४/१३४ |
| ये च देवालयादिकं | ५/४ |
| येन ह्यैकान्तिकीं पूजा | ५/३ |
| येनाऽऽप्यते सदा | १/१४ |
| योगनिद्रा हरेरक्ष्णो: | ३/८६ |
| योगिनस्तत्र गच्छन्ति | ४/७४ |
| रक्तपङ्कजवर्णाभां | ३/३३ |
| रक्तहस्ताङ्घ्रिनेत्रञ्च | ३/४५ |
| रक्ताम्बरधरौ चैव रक्त | ६/१२३ |
| रक्तै: गन्धैश्च पुष्पैश्च | ३/१३ |
| रक्षार्थं बालमीनाद्याद् | ६/१०७ |
| रजनीचूर्णसम्मिश्रं | २/३९ |
| रत्नकाञ्चनवज्राद्यं | ८/५९ |
| रमया सहितो विष्णु: | ३/७६ |
| राजतान् मृत्तिकोत्पन्न | ७/५४ |
| राजती(तीं?) वा गृहीत्वा | ८/१५ |
| राजते परिवारेण सहात्र | ४/८७ |
| राजते वासुदेवोऽत्र | ४/८८ |
| राजसूयविशेषेण | ३/७० |
| राजा राज्यमवाप्नोति | ३/३६ |
| राजेन्द्राख्ये वने विष्णु: | ४/६४ |
| रात्रौ जागरणं कार्यं | ३/६० |
| राधस्यैकादशी ज्ञेया | ३/७८ |
| राम: सलक्ष्मणश्चात्र | ४/३६ |
| रामसञ्ज्ञश्च भगवान् | ४/१०१ |
| रुद्रादिभिरनुस्यूतं | ३/५१ |
| रेचकेन स्वमात्मानं | १/५५ |
| रैवतकादिशैलेषु समुद्र | ४/१०७ |
| रोचनारजनीयुग्मं बला | ७/७३ |
| रोचना श्रीफलं पुष्पं | २/५४ |
| रोचना श्रीफलं पुष्पं | ८/४७ |
| लक्षगुणं तु विज्ञेयं | ४/१० |
| लक्षणानि प्रकाराणि | ५/२ |
| ललाटतिलकं हैमं | २/४७ |
| लवणोदधिपर्यन्ते | ४/९३ |
| लाञ्छनेनान्विता विप्र | २/२५ |
| लाभालाभं तु विज्ञाय | ५/१८ |
| लोकोपकारनिरतमेक | ३/४४ |
| लोहजं वर्णशो विप्र! | ५/१६ |
| लोहपाषाणचूर्णं तु | ५/३२ |
| वक्त्रकुण्डेऽथ तेनै | २/९३ |
| वक्ष्यमाणप्रकारेण स्नप | ७/४९ |
| वक्ष्यामि पाञ्चरात्रीयं | ५/५ |
| वक्ष्यामि विस्तरात् सर्वं | ७/९० |
| वक्ष्यामि श्रवणं | ४/९१ |
| वक्ष्यामि सारभूतं तदर्च | १/१७ |
| वक्ष्येऽहं दैनिकं कर्म | १/३१ |
| वचा शतावरी कन्या | ७/६७ |
| वटमूलं समासाद्य | ४/१२१ |
| वनदाहसमुद्भूतं तथैव | ७/६४ |
| वनिनो दर्शनार्थाय | ४/६० |
| वन्दिवृन्दसमोपेतैर्गीय | ७/४५ |
| वरदाभयहस्ता च | ३/७१ |
| वरवर्णा शिला प्रोक्ता | ५/५९ |
| वरुणं पूजयेच्चैवं | ५/२१ |
| वरुणं श्याममेघाभं | ३/४० |
| वर्जनीया: शिला | ५/४२ |
| वर्णयिष्यामि ब्रह्मर्षे | ४/११५ |
| वर्तते वासुदेवांश: | ४/४१ |
| वर्षावातातपं सोढ्वा | ४/४७ |
| वसति दिव्यरूपेण | ४/३५ |
| वसन्ति पुण्यक्षेत्रे | ४/२३ |

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्

## अर्चनारात्रम्





## प्रायश्चित्तरात्रम्

## प्रायश्चित्तरात्रम्

## प्रायश्चित्तरात्रम्

## प्रायश्चित्तरात्रम्

## प्रायश्चित्तरात्रम्

## प्रायश्चित्तरात्रम्

## प्रायश्चित्तरात्रम्





## परिशिष्ट-१०

## विशिष्टशब्दसूची (Index)



# NĀRADAPAÑCARĀTRAM
# SAṄKARṢAṆA-SAṀHITĀ

प्रोक्ता सङ्कर्षणेनेयं संहिता पाञ्चरात्रिकी ।
नारदपञ्चरात्रेण नाम्ना नारदसंश्रवात् ॥
प्रथिता ग्रथिता चैव कृपया यस्य ब्रह्मणः ।
नारायणस्वरूपं तं नमामि प्रमुखं मुदा ॥






ISBN: 81-7526-264-8